# श्रीबगलामुखी रहस्यम्

प्रणेतारः

**श्री पीताम्बरापीठाधीश्वराः राष्ट्रगुरवः**

परमहंसपरिव्राजकाचार्याः

**श्रीस्वामिनः**

सर्वतन्त्रस्वतन्त्राः निगमागमतन्त्र पारीणाः



प्रकाशकः

**वैद्यः रामनारायण शर्माणः**

श्री पीताम्बरापीठ, वनखण्डेश्वर,

दतिया (म० प्र०)

# श्रीबगलामुखी-रहस्यम्

प्रणेतारः

**श्री स्वामिनः**

सर्वतन्त्रस्वतन्त्राः निगमागमतन्त्रपरीणाः
परमहंसपरिव्राजकाचार्याः
श्रीपीताम्बरापीठाधीश्वराः राष्ट्रगुरवः

# श्रीबगलामुखी-रहस्यस्य

## विषयानुक्रमणिका

इति विषयानुक्रमणिका

# प्रकाशकीयम्

विविधधर्मयुते हि भारतवर्षे आगमनाम्नेतिख्यातस्य शाक्तधर्मस्य मुख्यत्वं वैदिककालादेव स्वीकृतं तन्त्रपारज्ञैः विद्वद्वर्यैः। भक्तियोगज्ञानानां यादृशः समन्वयोऽस्मिन् मते उपलभ्यते नैतादृशोऽन्येषु। शाक्तधर्म-प्रतिपादकानां ग्रन्थानां संख्या नाल्पीयसी वर्तते। परं गुह्यत्वादनेकानि ग्रन्थरत्नानि विलुप्तान्यभवन्। अधुनेदं प्रतिभाति यदेतादृशानां ग्रन्थरत्नानां रक्षणं प्रकाशनञ्च जायेताम्।

पराम्बायाः श्री बगलामुख्याः सर्वविषयप्रतिपादनपरमिदं "श्री बगलामुखी–रहस्यम्" नामकं ग्रन्थरत्नं पूज्यपादैः गुरुवर्यैः बहुकाल-पूर्वमेव विरचितम्। साधकाः अस्मिन् ग्रन्थे मातुः श्री बगलामुख्याः सर्वे विषयाः एकत्रैव प्राप्तुं शक्यन्ते। इतः पूर्वं सर्वविषयप्रतिपादकं एतादृशं ग्रन्थरत्नं समुपलब्धं नासीत् अनेन हि साधकानां काठिन्यं निश्चयमेव दूरीभविष्यति।

अस्य ग्रन्थस्य प्रकाशनार्थं सर्वोऽपि व्ययभारः श्री वैद्यनाथ आयुर्वेद-भवनस्य संचालकेन वैद्यवर्येण श्री रामनारायणशर्मणा ऊढः। तदर्थं तेभ्यः हार्दिकान् धन्यवादान् वितनुतेऽयं जनः। आचार्य श्रीसदाशिवदीक्षितैः अस्य ग्रन्थस्य सम्पादनमतिपरिश्रमेण विहितं तदर्थं सर्वेऽपि साधकाः तेषामाभारमावहन्त्येव। आशास्यते यदिदं ग्रन्थरत्नं स्वकीयेभ्यः रश्मिजालेभ्यः अनन्तकालपर्यन्तं साधकानां कृते मार्गप्रदर्शकं भविष्यति।

निवेदकः

दिनांक
१७ मई १९६४

मन्त्री
श्री पीताम्बरा संस्कृत परिषद्
दतिया।

# अभ्यर्थनम्

दशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयासं दीनं स्नपय कृपया मामपि शिवे ।
अनेनाऽयं धन्यो भवति नच ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ।।



श्री पीताम्बरापीठाधीश्वराः
परमपूज्य श्री स्वामीजी महाराज

# निवेदनम्

अनादिकालात् प्रतिष्ठिता एकरूपाऽपि जगन्मातुरुपासना नामरूपाभ्यां वैविध्यमासाद्य साधकरुचिभेदाद् अनेकरूपतां, दशमहाविद्यारूपेण सरहस्यां प्रशस्यतां च भजते। काली तारा षोडशी—इति नामभिः प्रसिद्धं तद्रूपत्रयमेव प्राधान्येन शक्तितत्त्वपरिचायकम्, अवशिष्टानि इतराणि सप्त रूपाणि आसामेव रूपान्तराणि—इति आमनन्ति आगमविदो मनीषिणः। युगभेदात् प्रधानतामुपगतानि इमान्यपि सप्त रूपाणि मूलत्रयवत् परिणतानि। अधुना तु कालीतारादिरूपत्रयवद् इतरेषां सप्तानामपि मुख्यत्वेन व्यवहारः। एतत् सर्वं विस्तरेण प्रपञ्चितं शक्ति-सङ्गमस्य ताराखण्डे। अतः (१) काली (२) तारा (३) षोडशी (४) भुवनेश्वरी (५) छिन्नमस्ता (६) त्रिपुरभैरवी (७) धूमावती (८) बगलामुखी (९) मातङ्गी (१०) कमला—एताः दश महाविद्यापदेन अभिधीयन्ते।

उपदिश्य मां, श्रीमदाचार्यदेवा इत्थं समादिशन्—'श्रीबगलामुखी-महाविद्यामाश्रित्य विरचनीयः कोऽपि नवः सर्वाङ्गपूर्णो ग्रन्थः, स्थापनीयं च श्रीपीताम्बरापीठम्। अनेन त्वं लप्स्यसे शान्तिं, प्राप्स्यसे च सर्वमन्यद् यद् यद् भवेत् तेऽभिलषितम्।' ततस्तेषां वचोऽनुसृत्य दतियामागतेन मया स्थापितं श्रीपीताम्बरापीठं विरचितश्चायं श्री 'बगलामुखीरहस्य' नामको ग्रन्थः।

काली तारा षोडशीस्वरूपाणां महाविद्यानाम् उपासका यथा सर्वत्र-वाहुल्येनोपलभ्यन्ते, तत्तदधिकृत्य विनिर्मितैः ग्रन्थैः यथा विषया विशदतां समानीयन्ते, तत्तद्विषयाणां ज्ञातारश्च यथाऽधिकतया दृश्यन्ते, न तथा श्री बगलामुख्याः, यतः इयं महाविद्या सर्वत्र सङ्कटसमये एव समाराध्यते।

अत एवास्यास्तन्त्रग्रन्थाः स्वल्पा एव। तेषु षट्त्रिंशत्पटलैर्विभक्तः सर्वाङ्गपूर्णः 'साङ्ख्यायन' तन्त्राख्यो ग्रन्थः, यस्मिन् हि एतस्या विद्यायाः प्रायः सर्वाणि अङ्गानि प्रतिपादितानि। किन्तु पञ्चाङ्गादीनाम् अनेकोपयोगिविषयाणां तत्राऽदर्शनात् एवंविधस्याऽस्य ग्रन्थस्य आवश्यकताऽनुभूयते उपासकैः।

अत्र हि विविधागमपारदृश्वनां विदुषां कृपातः समुपलभ्य, अनेकानेकदुर्लभतन्त्रग्रन्थेभ्यश्च संगृह्य षडाम्नायोपदेश-गुरुक्रम-दीक्षापद्धति-वैदिकरहस्यप्रभृतयः विषयाः यथास्थानं सन्निविष्टाः इति नातितिरोहितं परिशीलयताम्। 'काली, तारा, षोडशी,—एतास्तिस्र एव शक्तिरूपेण समुपास्याः अन्यासां तूपासना केवलं प्रयोगाये'ति वदतां विदुषां धारणा भ्रामिका एव, यतः नासौ सिद्धान्तः सार्वदेशिकः स्वतन्त्ररूपेण आसां समुपासकानां साधनपद्धतीनां च समुपलब्धेः।

न कस्याप्याम्नायस्य नायिका श्री बगलाविद्येति वदद्भिः पण्डितैः प्रथमपरिच्छेदस्य २४ प्रकरणे पृ० ६८–७० प्रदर्शितः सांख्यायनतन्त्रोक्तः यन्त्रराजोद्धारः विवेचनीयः। अयं हि उत्तराम्नायगतः। अत्र हि काली-तारा-षोडशीप्रभृतयः सर्वा विद्याः श्रीबगलामुख्या अङ्गरूपत्वेन पूज्यन्ते। ऊर्ध्वाम्नाये चापि पूज्यते इदं यन्त्रम्। श्रीविद्योपासकैश्च अङ्गरूपत्वेनोपदिश्यते श्रीबगलेयम्।

अधुना अस्या एव प्रथाया अधिकतरः प्रचारः दृश्यते। श्रीभास्कराचार्यैः शक्तिसङ्गमकारैश्च इत्थमेव स्वीकृतम्।

स्वतन्त्रसत्तामापन्ने बगलाक्रमेऽपि अभिषेकपूर्णाभिषेकादिक्रियाणां सत्ता अव्याहतरूपेण सिध्यति। अतः क्रमदीक्षा प्रकरणे षडाम्नायोपदेशक्रमः सन्निवेशितः। विवादास्पदोऽप्ययं विषयः पूर्वोक्तप्रमाणभूताधारस्य सिद्धत्वात् सुखेन निर्णेतुं शक्यते। आशासे यदयं ग्रन्थः समुपासनाकार्ये समुचितं साहाय्यं समर्प्य श्री बगलामुखीसाधकान् सन्तोषयिष्यतीति।

किञ्च पुस्तकस्यास्य सम्पादनभारं वहताम् आचार्यश्रीसदाशिव दीक्षितानाम् इदं परिश्रमफलं, येनासौ ग्रन्थः परिष्कृतरूपेण पाठकानां सम्मुखे समानीत इति शम्—

निवेदकाः—

श्री स्वामिनः

सर्वतन्त्रस्वतन्त्राः निगमागमतन्त्रपारीणाः

परमहंसपरिव्राजकाचार्याः

श्रीपीताम्बरापीठाधीश्वराः राष्ट्रगुरवः

दतिया
चैत्रशुक्ल
चतुर्दश्याम् २०२१

# श्रीबगलामुखी--तन्त्र-संग्रह:

यद्गेहे निवसेत् तन्त्रं, तत्र लक्ष्मीः स्थिरायते ।
राजद्वारे श्मशाने च सभायां रणमध्यतः ।।१।।
निर्जने च जले घोरे श्वापदैः परिवारिते ।
माहात्म्यं तस्य देवेशि चमत्कारीयते प्रिये ।।२।।

वृहन्नीलतन्त्रम् ।

इयं या परमेष्ठिनो वाग् देवी ब्रह्मशंसिता ।
ययैव ससृजे घोरं तयैव शान्तिरस्तु नः ।

अथर्व० १६।१।३

# समर्पणम्

यत्कारुण्यमवेक्ष्य भावभरितं सानन्दगीतं सतां
तच्चिन्तानिपुणैकशुद्धमतयो ये साधकाः सज्जनाः ॥
तेषां लब्धकृपालवेन जननीबोधोदयो मेऽभवत्
तद्वृत्तं विनिवेद्य साम्प्रतमहं तोषं परं प्राप्तवान् ॥१॥

वाक्ये मातृचरित्रभेदप्रथने दोषो बुधैः कथ्यते
तत्क्षान्तिं प्रसमीक्ष्य मोदभरितां यत्नः कृतोऽयं मया ।
वैगुण्यं गुणमादधद् यदि ममालेख्यं पराम्बाथवा
दृष्ट्वा मोदमवाप्स्यतीति ममता स्वीयेषु कस्यास्ति नो ॥२॥

सर्वतन्त्रस्वतन्त्राः परमहंसपरिव्राजकाचार्याः
श्री १०८ श्री स्वामीजी महाराजाः
श्रीपीताम्बरापीठ दतिया राज्य म० प्र०

# श्री बगलामुखी रहस्यम्

अन्तरायतिमिरौघशान्तये स्वेष्टशक्तिकरुणाऽरुणप्रभम् ।
सन्तनोतु मुनिवृन्दसेवितम् भावगम्यमनिशं शिवं महः ॥१॥

करुणापूरितचित्तां सच्चिद्रूपां परां दिव्याम् ।
ब्रह्मसहचरीं तुर्यां बगलाशक्तिं प्रणौमि सौभाग्याम् ॥२॥

चतुर्विधपुरुषार्थप्रदत्त्वेन प्रसिद्धा श्री बगलामुखी देवी, तस्या उपासनाविधिप्रतिपादका ये ग्रन्थास्तन्त्रशास्त्रेषु प्रसिद्धास्तेभ्यः संगृह्य पञ्चाङ्गपटलादीन्, उपयोगिविषयांश्च सन्निवेश्य अत्र संग्रथ्यते ।

एवं हि किलाऽऽख्यायते, तदुक्तं स्वतन्त्रे—

अथ वक्ष्यामि देवेशि बगलोत्पत्तिकारणम् ।
पुरा कृतयुगे देवि वातक्षोभ उपस्थिते ।
चराचरविनाशाय विष्णुश्चिन्तापरायणः ।
तपस्यया च सन्तुष्टा महात्रिपुरसुन्दरी ।
हरिद्राख्यं सरो दृष्ट्वा जलक्रीडापरायणा ।
महापीतह्रदस्यान्ते सौराष्ट्रे बगलाम्बिका ।
श्रीविद्यासम्भवं तेजः विजृम्भति इतस्ततः ।
चतुर्दशी भौमयुता मकारेण समन्विता ।
कुलऋक्षसमायुक्ता वीररात्रिः प्रकीर्तिता ।
तस्यामेवार्धरात्रौ तु पीतह्रदनिवासिनी ।
ब्रह्मास्त्रविद्या सञ्जाता त्रैलोक्यस्तम्भनी परा ।
तत्तेजो विष्णुजं तेजो विद्याऽनुविद्ययोर्गतम् ।

"श्री विद्ये समये महेशि बगले" इति स्तोत्र प्रमाणाच्च ।

## १—माहात्म्यम्

कैलासशिखरासीनं गौरीवामाङ्गसंस्थितम् ।
भारतीपतिवाल्मीकिः शिवासंयुतमीश्वरम् ।
अष्टदिक्पालसंयुक्तं विघ्नेशाष्टकसेवितम् ।
भैरवाष्टवृतं देवं मातृमण्डलवेष्टितम् ।
महापाशुपताक्रान्तं प्रमथैरावृतं प्रभुम् ।
नत्वा स्तुत्वा कुमारश्च इदं वचनमब्रवीत् ॥

### श्री क्रौञ्चभेदन उवाच

चापचर्यासु निपुणैर्युद्धचर्याभयङ्करैः ।
नानामायाविनं चैव जेतुमिच्छामि राक्षसम् ।
तस्योपायं च तद्विद्यां ब्रूहि मे करुणाकर ।
पुत्रोऽहं तव शिष्योऽहं कृपापात्रोऽहमेव च ॥

### श्री ईश्वर उवाच

साधु साधु महाप्राज्ञ क्रौञ्चभेदनकोविद ।
ब्रह्मास्त्रेण विना शत्रोः संहारो न भवेत् किल ।
तद्विद्यां च प्रवक्ष्यामि त्रिषु लोकेषु दुर्लभाम् ।
पुत्रो देयः शिरो देयं न देया यस्य कस्यचित् ।
ब्रह्मास्त्रस्तम्भिनी विद्या स्तब्धमायामनुस्तथा ।
प्रवृत्तिरोधिनी विद्या बगला च कुमारक ।
मन्त्रजीवनविद्या च प्राणिप्रज्ञाऽपहारिका ।
षट्कर्माऽऽधारविद्या च रात्रेः पर्यायवाचका: ।
षट्प्रयोगमयी विद्या षड्विद्याऽऽगमपूजिता ।
तिरस्कृताऽखिला विद्या, त्रिशक्तिमयमेव च ।
स्तम्भनेन विना वश्यं शान्तिश्चैव तु तद्विना ।
मोहनाऽऽकर्षणे चैव विद्वेषोच्चाटने तथा ।
मारणं भ्रान्तिरुद्वेगकरणं च कुमारक ॥

विद्या च बगलानाम्नी मुनिगुह्या सुपावनी ।
विना वाक्स्तम्भिनीं विद्यां स्वविद्या न च भासते ॥
तस्मादेतन्महाविद्यां कमलासनजीविनीम् ।
पद्मजो नारदो विद्यां सांख्यायनमुनिं प्रति ॥
उपदेशक्रमेणैव दत्तवान् मेरुकन्दरे ।
तेन देवीकटाक्षेण कृतवानागमं भुवि ॥
मूलमन्त्रोपविद्याश्च अङ्गविद्या च विस्तरात् ।
प्रयोगं चोपसंहारं तदाऽऽराधनमेव च ।
विस्तरेणोक्तवानस्मिन् वक्ष्ये तत्सर्वमादरात् ॥
स्वविद्यारक्षिणी विद्या स्वमन्त्रफलदायिका ।
स्वकीर्तिरक्षिणी विद्या शत्रुसंहारकारिका ॥
परविद्याच्छेदिनी च परमन्त्रविदारिणी ।
परमन्त्रप्रयोगेषु सदा विध्वंसकारिका ॥
परानुष्ठानहारिणी परकीर्तिविनाशिनी ।
पराऽऽपन्नाशकृद् विद्या परेषां भ्रमकारिणी ॥
ये वा विजयमिच्छन्ति ये वा जन्तुक्षयं कलौ ।
ये वा क्रूरमृगेभ्यश्च जयमिच्छन्ति मानवाः ॥
इच्छन्ति शान्तिकर्माणि वश्यं संमोहनाऽऽदिकम् ।
विद्वेषोच्चाटनं पुत्र तेनोपास्यस्त्वयं मनुः ॥
सत्सम्प्रदायविधिना सद्गुरोर्मुखतस्तथा ।
उपदेशक्रमेणैव गृहीत्वा साधयेन्मनुम् ॥
कुलाऽऽचारसमायुक्तः कुलमार्गेण पुत्रक ।
दीक्षाकाले गुरोर्योगो गृहीतव्यः, सुबुद्धिमान् ॥
साधयेत् कुलमार्गेण तेन यन्त्रं प्रयोजयेत् ।
उपसंहरणं तेन कर्त्तव्यं कुलयोगिना ॥
सौभाग्येन समायुक्तैः सदा तर्पणपूर्वकैः ।
सदा पूजासमायुक्तैश्चिन्तितं भवति ध्रुवम् ॥

ऋषिसिद्धाऽमरैश्चैव विद्याधरमहोरगैः ।
यक्षगन्धर्वनागैश्च पिशाचब्रह्मराक्षसैः ।
पञ्चेन्द्रियैश्च संचारं सद्यो हन्त्यनिशं मनुः ।
पण्डितोऽपण्डितो जीवः किं पुनः क्रौञ्चभेदन ।

इति सांख्यायनतन्त्रे प्रथमः पटलः ।

—:००:—

## तथा च

बगलेति महामन्त्रं सर्वेषां सर्वकामदम् ।
केवलेन जपेनैव लक्षेण काली सिद्धयति ॥
वशीकरणकर्मादि दशसाहस्रतो भवेत् ।
अथ वक्ष्ये महेशानि बगलासाधनं तव ॥
बगलेति मनोः संख्या पुरश्चरणकर्मणि ।
लक्षेण मन्त्रसिद्धिः स्यात् नास्त्यत्र युगसंख्यकम् ॥
ततो वश्यादि कर्त्तव्यं दशसाहस्रसंख्यया ।
शरीराऽऽरोग्यतो वापि धनेच्छुश्चायुतं जपेत् ॥
कलावेतस्य तु मनोः प्रभावं किं ब्रवीमि ते ।
सहस्रमात्रहोमेन सर्वसिद्धिर्नचाऽन्यथा ॥
नास्त्यपेक्षा हि ऋष्यादेः स्तुतिपाठादिकस्य वा ।
स्तुतिर्वा कवचं वाऽपि ऋष्यादिन्यास एव च ॥
बगलेति स्वयं सर्वसिद्धविद्या इति प्रिये ।
त्वयाऽऽद्यारूपया काल्या स्वयमुक्तं पुरैकदा ॥
शरीराऽऽरोग्यतो देवि वैरिनिग्रहतोऽपि वा ।
दिवा नक्तं च कर्त्तव्या सहस्रमानतो हुतीः ।
केवलाऽऽहुतिमात्रेण रात्रावारोग्यतां लभेत् ।
वगले इति यो द्विश्चाप्युक्त्वोच्चैर्यत्र वा वदेत् ।
पथिस्था विघ्नदाः सर्वे पलायन्ते तमीक्षिताः ।

भवेद्धि सफलं कर्म, बगलेति स्मरन् जनः ।
बगलाजापिनं दृष्ट्वा सर्वे भीतिमवाप्नुयुः ।
इति वन्हिपुराणे पाशुपतदानाऽध्यायः ।

—:०:—

## अथ मन्त्रयन्त्रविधानात्मकः प्रथमः परिच्छेदः

### २—अथ बगलामुखीपटलः

अथ प्रवक्ष्ये शत्रूणां स्तम्भिनीं बगलामुखीम् ।
प्रणवो गगनं पृथिवी शान्तिविन्दुयुतं बग- ॥१॥
ला मु साक्षो गदी सर्वदुष्टानां वा हलीन्दुयुक् ।
मुखं पदं स्तम्भयान्ते जिह्वां कीलय वर्णकाः ॥२॥
बुद्धिं विनाशयान्ते तु बीजं तारोऽग्निसुन्दरी ।
षट्त्रिंशदक्षरो मन्त्रः नारदो मुनिरस्य तु ॥३॥
छन्दस्तु बृहती शेषं देवता बगलामुखी ।
नेत्राक्षसायकनवपंचकाष्ठाभिरङ्गकम् ॥४॥

### अथ ध्यानम्

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीम्
हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम् ॥
हस्तैर्मुद्गरपाशवज्ररसनाः सम्बिभ्रतीं भूषणै-
र्व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तयेत् ॥५॥
एवं ध्यात्वा जपेल्लक्षमयुतं चम्पकोद्भवैः ।
कुसुमैर्जुहुयात् पीठे पूर्वोक्ते पूजयेदिमाम् ॥६॥
चन्दनागुरुचन्द्राद्यैः पूजार्थं यन्त्रमालिखेत् ।
त्रिकोणषड्दलाष्टास्रषोडशारधरापुरे ॥७॥
मध्ये सम्पूजयेद् देवीं कोणे सत्त्वादिकान् गुणान् ।
षट्कोणेषु षडङ्गानि मातृभैरवसंयुताः ॥८॥
सम्पूज्याऽष्टदले पद्मे षोडशारे यजेदिमाः ।
मङ्गला स्तम्भिनी चैव जृम्भिणी मोहनी तथा ॥९॥

वश्या वला वलाका च भूधरा कल्मषाऽभिधा ।
धात्री च कलना कालकर्षिणी भ्रामिकाऽपि च ॥१०॥
मन्दगमना भोगस्था भाविका षोडशी स्मृता ।
भूगृहस्य चतुर्दिक्षु पूर्वाऽऽदिषु यजेत् क्रमात् ॥११॥
गणेशं वटुकं चापि योगिनीं क्षेत्रपालकम् ।
इन्द्रादींश्च ततो बाह्ये निजाऽऽयुधसमन्वितान् ॥१२॥
इत्थं सिद्धमनुर्मन्त्री स्तम्भयेद् देवताऽऽदिकान् ।
पीतवस्त्रस्तदासीनः पीतमाल्याऽनुलेपनः ॥१३॥
पीतपुष्पैर्यजेद्देवीं हरिद्रोत्थस्त्रजा जपन् ।
पीतां ध्यायन् भगवतीं प्रयोगेष्वयुतं जपेत् ॥१४॥
त्रिमध्वाऽऽज्यतिलैर्होमो नृणां वश्यकरो मतः ।
मधुरत्रितयाक्तैः स्यादाकर्षो लवणैर्ध्रुवम् ॥१५॥
तैलाभ्यक्तैर्निम्बपत्रैर्होमो विद्वेषकारकः ।
ताललवणहरिद्राभिर्द्विषां संस्तम्भनं भवेत् ॥१६॥
अङ्गारधूमं राजीश्च माहिषं गुग्गुलं निशि ।
श्मशानपावके हुत्वा नाशयेदचिरादरीन् ॥१७॥
गरुतो गृद्धकाकानां कटुतैलविभीतकम् ।
गृहधूमचितावन्हौ हुत्वा प्रोच्चाटयेद् रिपून् ॥१८॥
दूर्वागुडूचीलाजान् यो मधुरत्रितयाऽन्वितान् ।
जुहोति सोऽखिलान् रोगान् शमयेद् दर्शनादपि ॥१९॥
पर्वताग्रे महारण्ये नदीसङ्गे शिवालये ।
ब्रह्मचर्यरतो लक्षं जपेदखिलसिद्धये ॥२०॥
एकवर्णगवीदुग्धं शर्करामधुसंयुतम् ।
त्रिशतं मन्त्रितं पीतं हन्याद् विषपराभवम् ॥२१॥
श्वेतपालाशकाष्ठेन रचिते रम्यपादुके ।
अलक्तरंजिते लक्षं मन्त्रयेन्मनुनाऽमुना ॥२२॥

तदारूढः पुमान् गच्छेत् क्षणेन शतयोजनम् ।
पारदं च शिला तालं पिष्टं मधुसमन्वितम् ॥२३॥
मनुना मन्त्रयेल् लक्षं लिपेत्तेनाऽखिलां तनुम् ।
अदृश्यः स्यान्नृणामेष आश्चर्यं दृश्यतामिदम् ॥२४॥
षट्कोणे विलिखेद्बीजं साध्यनामान्वितं मनोः ।
हरितालनिशाचूर्णैरुन्मत्तरससंयुतैः ॥२५॥

शेषाऽक्षरैः समा बीजं धरागेहविराजितम् ।
तद् यन्त्रं स्थापितप्राणपीतसूत्रेण वेष्टयेत् ॥२६॥

भ्राम्यत्कुलालचक्रस्थां गृहीत्वा मृत्तिकां तथा ।
रचयेद् वृषभं रम्यं यन्त्रं तन्मध्यतः क्षिपेत् ॥२७॥

हरितालेन संलिप्य वृषभं प्रत्यहमर्चयेत् ।
स्तम्भयेद् विद्विषां वाचं गतिं कार्यंपरम्पराम् ॥२८॥

आदाय वामहस्तेन प्रेतभूमिस्थखर्परम् ।
अङ्गारेण चितास्थेन तत्र यन्त्रं समालिखेत् ॥२९॥

मन्त्रितं निहितं भूमौ रिपूणां स्तम्भयेद् गतिम् ।
प्रेतवस्त्रे लिखेद् यन्त्रमङ्गारेण च तत्पुनः ॥३०॥

मण्डूकवदने न्यस्येत् पीतसूत्रेण वेष्टयेत् ।
पूजितं पीतपुष्पैस्तद् वाचं संस्तम्भयेद् द्विषाम् ॥३१॥

यद्भूमौ भविता दिव्यं तत्र यन्त्रं समालिखेत् ।
मार्जितं तद् वृषापत्रैर्दिव्यस्तम्भनकृद् भवेत् ॥३२॥

इन्द्रवारुणिकामूलं सप्तांशो मनुमन्त्रितम् ।
क्षिप्तं जले दिव्यकृत्तं जलस्तम्भनकारकम् ॥३३॥

किं भूरिणा साधकेन मन्त्रः सम्यगुपासितः ।
शत्रूणां गतिबुद्धयादेः स्तम्भनो नात्र संशयः ॥३४॥

इति मन्त्रमहोदधिसंम्मतो बगलामुखीपटलः ।

## ३—षट्कर्मदीपिकोक्तविधानम्—

### श्री देव्युवाच

प्रभो त्वं भैरवश्रेष्ठः सर्वमन्त्रार्थजीवकः ।
नानारहस्यसारं च त्वद्दते न शृणोम्यहम् ॥
दिव्यतन्त्रं महातन्त्रं पूर्वपश्चिमसंज्ञकम् ।
दक्षिणोत्तरमूर्ध्वं च उपायाः कथिताः प्रभो ॥
वश्याऽऽकर्षणदिव्यं च मारणोच्चाटनाऽऽदिकम् ।
विद्वेषं मोहनं चान्यद् विविधं कामनादिकम् ॥
विस्तारं कथितं पूर्वं ज्ञातव्यं सर्वसंज्ञया ।
इदानीं श्रोतुमिच्छामि स्तम्भनं कथयस्व मे ॥
अनुगृहाण देवेश यद्यहं तव वल्लभा ।

### श्री भैरव उवाच

साधु साधु त्वया प्राज्ञे सर्वमन्त्रार्थसाधिके ।
न कस्यचिन्मयाऽऽख्यातं शृणु सुन्दरि यत्नतः ॥
गुह्याद् गुह्यतरं देवि स्नेहात्ते प्रकटीकृतम् ।
अथातः सम्प्रवक्ष्यामि शृणु चैकाग्रमानसा ॥
विद्या या परमा गुप्ता महास्तम्भनरूपिणी ।
ॐ कारं पूर्वमुच्चार्य स्थिरमायामथोच्चरेत् ॥
सम्बोधनपदं चोक्त्वा ततः श्रीबगलामुखी ।
तदग्रे सर्वदुष्टानां ततो वाचं मुखं पदम् ॥
स्तम्भयेति पदं पश्चात् कीलयेति पदं पुनः ।
बुद्धि विनाशय पश्चात्तु स्थिरमायां पुनर्वदेत् ॥
लिखेच्च पुनरोङ्कारं स्वाहेति पदमन्तिमम् ।
षट्त्रिंशदक्षरा विद्या देवानामपि दुर्लभा ॥
वन्हिहीनेन्दुयुङ् माया स्थिरमाया प्रकीर्तिता ।
गजस्य च रथानां च द्विजानां शीघ्रचेतसाम् ॥

स्तम्भितां च महावाचां बृहस्पतिमुखोद्गताम् ।
महापर्वतवृक्षाणां सरितां सागरस्य च ॥
स्तम्भयेत्तानि दिव्यानि मानुषेषु च का कथा ।
त्रैलोक्यमोहिनी विद्या तस्माच्च बगलामुखी ॥
शृणु देवि प्रवक्ष्यामि विविधं कामनागतम् ।
न्यासं ध्यानं जपं होमं मन्त्रमेव पृथक् पृथक् ॥
अङ्गन्यासं प्रवक्ष्यामि कराङ्गविधिपूर्वकम् ।
ॐ स्थिरमायां च हृदये मूर्ध्नि श्री बगलामुखी ॥
शिखायां सर्वदुष्टानां वाचं मुखं स्तम्भयेति ।
कवचे कीलयद्वन्द्वं नेत्रे बुद्धिं विनाशय ॥
ह्लीं ॐ स्वाहा तथा चास्त्रे षडङ्गविधिरीरितः ।
युग्मकालेषु सप्तर्तु दशार्णैश्च मनूद्भवैः ॥
करशाखासु तलयोः कराङ्गन्यासमाचरेत् ।
नारायण ऋषिर्मूर्ध्नि त्रिष्टुप् छन्दस्तु तन्मुखे ॥
श्री बगलामुखी देवी हृदये विन्यसेत्ततः ।
ह्लीं बीजं गुह्यदेशे तु स्वाहा शक्तिश्च पादयोः ॥
इष्टार्थे विनियोगस्तु ऋष्यादिन्यास एव च ।
मूर्ध्नि भाले दृशोः श्रुत्योर्गण्डयोर्नसयोः पुनः ॥
ओष्ठयोर्मुखगण्डे च दक्षिणांऽशे च कूर्परे ।
तथैव मणिबन्धे च तथा चाङ्गुलिमूलके ॥
गलमूले दक्षस्तने वामस्तने तथा हृदि ।
नाभौ कट्यां गुह्यदेशे वामांशे कूर्परे तथा ॥
मणिबन्धेऽङ्गुलीमूले विन्यसेत्तु समाहितः ।
दक्षोरुमूले जानौ च गुल्फे चाङ्गुलिमूलके ॥
मूलमन्त्राक्षरैर्विद्वान् विन्यसेत् क्रमयोगतः ।
एवं न्यासविधिं कृत्वा ततो ध्यानं शृणु प्रिये ॥

## ध्यानम्

गम्भीरां च मदोन्मत्तां स्वर्णकान्तिसमप्रभाम् ।
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ॥
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्रदृढपीनपयोधराम् ॥
हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ।
पीतभूषणपीताङ्गीं स्वर्णसिंहासने स्थिताम् ॥
एवं ध्यात्वा जपेत्स्तोत्रमेकाग्रकृतमानसः ।
सर्वसिद्धिमवाप्नोति मन्त्रध्यानपुरःसरम् ॥
आनन्दकारिणी देवी रिपुस्तम्भनकारिणी ।
मदनोन्मादिनी चैव प्रतिस्तम्भनकारिणी ॥
महामाया महाविद्या साधकस्य फलप्रदा ।
यस्याः स्मरणमात्रेण त्रैलोक्यं स्तम्भयेत् क्षणात् ॥

इति ॥

## १—अथ साधनम्

साधनं संप्रवक्ष्यामि साधकानां हिताय वै ।
सर्वपीतोपचारेण पीताम्बरधरो नरः ॥
जपमालां च देवेशि हरिद्राग्रन्थिसम्भवाम् ।
पीतासनसमारुढ़ः पीतध्यानपरायणः ॥
पीतपुष्पार्चनं नित्यमयुतं जपमाचरेत् ।
दशांशैश्च कृतो होमः पीतद्रव्यैः सुशोभनैः ॥
संज्ञामुच्चारयेत् साध्यं स्तम्भनं च महाद्भुतम् ।
शृणु प्राज्ञे महागुह्यं प्रकटीकृतसाधनम् ॥
एकान्ते निर्जने स्थाने शुचौ देशे गृहे पुरे ।

## २—अथ कर्मविशेषे कुण्डलक्षणम्

कुण्डं सुलक्षणं कृत्वा मेखलात्रयशोभितम् ।
योनिवृत्तं त्रिमात्रैः स्यात्तत्र होमं तु साधयेत् ।।
वश्ये तु चतुरस्रं च आकर्षणे त्रिकोणकम् ।
तथैवोच्चाटने प्रोक्तं षट्कोणं मारणे स्मृतम् ।।

## ३—अथाऽऽसनभेदाः

वश्ये मेषासनं प्रोक्तं कर्षणे व्याघ्रचर्मणि ।
शान्तौ मृगासनं प्रोक्तं गोचर्म स्तम्भने मतम् ।।
उष्ट्रासनं तथैवोच्चाटे विद्वेषे तुरगासनम् ।
मारणे महिषीचर्म मोक्षे चैव गजाजिनम् ।।
नानाविधानि ते देवि क्रमाद् द्रव्यं समाचरेत् ।

## ४—कर्मविशेषे यज्ञीयसामग्री

मधुलाजतिलाज्येन वश्यलाभानि साधयेत् ।
आकर्षणे तथा लौध्रं सतिलं मधुरान्वितम् ।।
निम्बपत्रं च तैलाक्तं विद्वेषकरणं परम् ।
हरितालं हरिद्रां च लवणेन च संयुताम् ।।
स्तम्भयेच्चैव देवेशि प्रज्ञां चैव गतिं मतिम् ।
वाजिनाथस्य सारेण रुधिरेणैव होमयेत् ।।
मारणे तु रिपोर्देवि श्मशानाग्नौ हुनेन्निशि ।
क्षुद्राणां काकपक्षाणां गृहधूमेन संयुताम् ।।
लाजां त्रिमधुरसंयुक्तां सर्वरोगप्रशान्तये ।
लक्षमेकं जपेन्मन्त्री ब्रह्मचारी दृढव्रतः ।।
पर्वताग्रे महारण्ये सिद्धशैवालये गृहे ।
संगमे च महानद्याः साधकः साधयेत् स्वयम् ।।
श्वेतब्रह्मतरोमूले पादुकां चैव रञ्जयेत् ।
अलक्तकेन रागेण रञ्जिता नवमुद्रया ।।

षट्त्रिंशदक्षरा विद्या लक्षैकेन च मन्त्रिता ।
शतयोजनमात्रं तु मनश्चिन्तितमागता ।।
रसं मनःशिला तैलं माक्षिकेण समन्वितम् ।
इति मन्त्रं लक्षमेकं सर्वाङ्गे लेपनं कृतम् ।।
अदृश्यकारकं देवि लोके च महदद्भुतम् ।
एकवर्णगवीदुग्धं धारोष्णं चैवमाहरेत् ।।
शर्करामधुसंयुक्तं त्रिशतं मन्त्रितं प्रिये ।
पीत्वा च हरते शीघ्रं विषं स्थावरजंगमम् ।।
दारिद्र्यमोचनं देवि लक्षमेकं जपेन्नरः ।
दशांशेन कृतो होमो द्रव्यैरेभिर्घृतप्लुतैः ।।
लक्ष्मीयुक्तो भवेद्देवि दारिद्र्यं नाशयेद् ध्रुवम् ।

इति

अथाऽन्यं सम्प्रवक्ष्यामि कामनामान्त्रिकोपरि ।
पत्रैर्वाऽप्यथ पाषाणैः संज्ञानाम च कारयेत् ।।
आद्यन्ते स्थिरमायाश्च हरिद्रातालकैर्लिखेत् ।
गर्भस्तम्भनकरी देवी चमत्कारकरी परा ।।
भूर्जपत्रे समालिख्य तालोन्मत्तरसैर्निशि ।
षट्कोणमध्यमालिख्य विद्यां वलयतो लिखेत् ।।
मध्यसंज्ञां च देवेशि पीतसूत्रेण वेष्टयेत् ।
चक्रं भ्राम्यत्कुलालस्य विपरीतं च मृत्तिकाम् ।।
तन्मध्ये विलिखेद् बीजं त्रिवलीकारतः प्रिये ।
षष्ठ्यन्तं साध्यनामार्णं मुखं स्तम्भय चोच्यते ।।
बाह्ये वेष्टचं महाबीजं चतुःसाध्याख्यमालिखेत् ।
साध्यनामाक्षरं देवि अभिमन्त्र्य च विद्यया ।।
षष्ठ्यन्तं चोच्चरेत् साध्यं सम्बोधनं च दैवतम् ।
मा सुप्तेति पदं पश्चाद्वदेदाम्रेडितान्तरम् ।।

पीतोपचारैः सम्पूज्य मुखस्तम्भनमीरितम् ।
एतन्मन्त्रं वरारोहे श्मशानाङ्गारके लिखेत् ।।
भेकस्य वदने क्षिप्त्वा पीतवस्त्रेण वेष्टयेत् ।
भूमिष्ठमण्डलं कृत्वा पीतपुष्पैः समर्चयेत् ।।
उच्चारयेत् सर्वमन्त्रपदमुच्चार्य चालय ।
वामपादेन सम्पूर्णां कुलालस्य च मृत्तिकाम् ।।
पूरकस्य योगेन प्रयोगं प्रतिपद्यते ।
अन्योन्यं लिखितत्वेन कृत्वोन्नद्धं समन्ततः ।।
वामदक्षिणसम्बन्धात् द्वौ द्वौ पादौ प्रकल्पयेत् ।
नाम साध्यस्य च शतं गतिं स्तम्भयेति च ।।
पूर्ववत्पदमालिख्य पाषाणस्य च पट्टिके ।
पूर्ववत् सम्मुखीकृत्य पीतसूत्रेण वेष्टयेत् ।।
शय्यां पातालसंस्थां च खनेत् खातं प्रयत्नतः ।
वामहस्ते न्यसेत् खातं पीतपुष्पेण पूजयेत् ।।
महदाश्चर्यजनकं गतिस्तम्भनमुत्तमम् ।
श्मशानेऽथ परिग्राह्यं श्मशानाङ्गारमाहरेत् ।
मायाबीजं त्रिधा लिख्य साध्यसंज्ञा च मध्यतः ।।
अपि मध्ये च ललना (क्रीं स्त्रीं) सा च त्रिवलयात्मिका ।
वामहस्ते खनेत् खातं खर्परं च अधोमुखम् ।।
पूरयेद् वामपादेन स पुरुषस्तथोपरि ।
स्तम्भनं चैव देवेशि रिपूणां मुखबन्धनम् ।।
ताटङ्कपत्रमादाय लिखेत् साध्यं स्वनामतः ।
आद्यन्ते विलिखेद् बीजं त्रिविधोच्चाटकं लिखेत् ।।
वामहस्ते पुटं कृत्वा करपीडितकण्टकान् ।
सप्तसंख्यकण्टकानि भित्वा चैकं पुटीकृतम् ।।
पृथग्विधं समुच्चार्य नाम साध्यं च साधकः ।
भाण्डमध्ये क्षिपेत्तं च सौवीरेण च पूजयेत् ।।

गतिमतिस्तम्भकरं प्रयोगं प्रत्ययावहम् ।
दिव्यस्तम्भनकरी देवी नानागुणमुदीरितम् ॥
त्वत्प्रीत्या कथयिष्यामि शृणु तत् प्रियमुत्तमम् ।
यत्र स्थाने भवेद्दिव्यं देवालयगृहेऽपि वा ॥
तत्रस्थां विलिखेद् विद्यां साधकात् साध्यनामतः ।
अटरुषस्य पत्रेण परिमार्ज्य तथोपरि ॥
स्तम्भयेत् सप्त दिव्यानि कृत्वा दोषविशुद्धये ।
उत्तरावारुणीमूलं सप्तविद्याऽभिमन्त्रितम् ॥
महाकृत्यादिदोषस्य कृतदिव्यो विशुद्धये ।
अथवा दीपमार्गे च रात्रौ कृत्वा तु मण्डलम् ॥
भूर्जपत्रे समालिख्यं पूर्वोक्तं द्रव्यमेव च ।
दीपं प्रज्ज्वालयेद् यत्नात् कपिलाऽऽज्येन पूरितम् ॥
तावद् दीपो दोषं दग्ध्वा तप्तदीपः प्रशाम्यति ।
समयाय साधकाय पुत्रिकां कुशिकां घटम् ॥
कन्याभिर्योगिनीनां तु यथाशक्ति समर्चयेत् ।
एवं तु कथितं भद्रे कामनाप्रत्ययावहम् ॥
इयं तु परमा विद्या किमन्यत्परिपृच्छसि ।

### श्री देव्युवाच

साधनं कथितं देव महाऽऽश्चर्यप्रदायकम् ।
अधुना श्रोतुमिच्छामि अर्चनां विधिपूर्बिकाम् ॥

### श्री भैरव उवाच

पूजनं शृणु देवेशि साधके सिद्धिदायकम् ।
नित्ये नैमित्तिके काम्ये त्रिविधं पूजनं स्मृतम् ॥
भूप्रदेशे मनोरम्ये पुष्पामोदप्रपूरिते ।
गोमयेनाथ संलिप्य पुष्पप्रकरशोभितम् ॥
कामपेक्षावधिर्यत्र आसनं च समाचरेत् ।
सौवर्णं राजतं ताम्रं पैत्तलं भूर्जपत्रकम् ॥

कर्पूराऽगुरुकस्तूरीश्रीखण्डं कुंकुमेन च ।
लिखेत्तत्र प्रयत्नेन लेखिन्या हैमया ततः ॥
मध्ये योनिं च तद्बाह्ये षडस्रकमतः परम् ।
तद्बाह्ये षोडशदलं चतुर्द्वारोपशोभितम् ॥
पूर्वद्वारे गणेशं च दक्षिणे वटुकं तथा ।
पश्चिमे योगिनी पूज्या क्षेत्रपालं तथोत्तरे ॥
ईशानादिषु सोमान्ते रुद्रपीठं प्रपूजयेत् ।
बगला पूर्वपत्रे च स्तम्भिन्याद्यास्ततः परम् ॥
स्तम्भिनी मोहनी वश्या अवनी कलिका तथा ।
अधरा कम्पिता धीरा कम्पना कामदर्शिनी ॥
भ्रामिका मन्दगमना भोगिन्या चैव भोगिका ।
भोगाः षोडश पत्रेषु गन्धपुष्पाक्षतैर्यजेत् ॥
षोडशस्वरसंयुक्ता सम्प्रदायकुलागमे ।
लिखेन्मध्येषु पीठेषु कल्पयेत् क्षेत्रपञ्चकम् ॥
ब्राह्म्याद्याश्चैव पूर्वादौ भैरवाष्टकसंयुताः ।
स्थिरमायादिकाः सर्वाः परिपूज्याः कुलोद्भवे ॥
आदिक्षान्ताः षडस्रेषु सप्तधातुषु मातृकाः ।
योनिमध्ये मूलविद्यां त्रिभिरञ्जलिभिर्यजेत् ॥
पुष्पधूपादिनैवेद्यैर्गन्धताम्बूलदीपकैः ।
नीराज्य विधिना पश्चात् जपसंख्यां निवेदयेत् ॥
पवित्रारोपणं देवि वदनेषु यथाविधि ।
बलित्रयं ततो दद्यात् पूजनादिमहोत्सवैः ॥
एवं तु कथितं देवि गुरोराज्ञां च पालयेत् ।
संसिद्धिर्लौकिकी तस्य यथा निगममार्गतः ॥
अपरा चैव शाक्तेयी सा चाऽभयप्रदा भवेत् ।

इति षट्कर्मदीपिकोक्तविधानम् ।

## ४—अथ मेरुतन्त्रोक्तविधानम्

अथातः संम्प्रवक्ष्यामि स्तम्भिनीं बगलामुखीम् ।
तारं मायां समुच्चार्य वदेच्च बगलामुखी ॥
तदग्रे सर्वदुष्टानां ततो वाचं मुखं पदम् ।
स्तम्भयेति पदं जिह्वां कीलयेति ततः परम् ॥
बुद्धि विनाशय ह्रीं ॐ स्वाहा वेदाग्निवर्णकः ।
नारायणो मुनिस्त्रिष्टुप् छन्दश्च बगलामुखी ॥
देवीबीजं तु हृल्लेखा स्वाहा शक्तिः समीरिता ।
विनियोगश्च विख्यातः पुरुषार्थचतुष्टये ॥
हृल्लेखा हृदयं प्रोक्तं शिरश्च बगलामुखी ।
शिखा तु सर्वदुष्टानां ततो वाचं मुखं पदम् ॥
स्तम्भयेति च वर्मोक्तां जिह्वां कीलय नेत्रकम् ।
बुद्धि विनाशयास्त्रं स्यात् षडङ्गन्यास ईरितः ॥
मूर्ध्नि भाले भ्रुवोर्मध्ये नेत्रयोः श्रोत्रयोर्नसोः ।
गण्डद्वये तथा चोष्ठेऽधराऽऽस्यचिवुकेषु च ।
गले च दक्षदोर्मूले तन्मध्ये मणिबन्धके ॥
अङ्गुलीनां तथा मूले हस्ताग्रे चैवमेव हि ।
न्यसेद् वामभुजादौ च दक्षोरुमूलके ततः ॥
दक्षजानुनि गुल्फे चाङ्गुलिमूले पदाग्रतः ।
गम्भीरां च मदोन्मत्तां तप्तकाञ्चनसन्निभाम् ॥
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ।
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ॥
पीताम्बरधरां सान्द्रदृढपीनपयोधराम् ।
हेमकुण्डलसंभूषां पीतचन्द्रार्धशेखराम् ॥
पीतभूषणभूषां च स्वर्णसिंहासनस्थिताम् ।
एवं ध्यात्वा च देवेशीं शत्रुस्तम्भनकारिणीम् ॥

भूप्रदेशे मनोरम्ये पुष्पामोदसुधूपिते ।
गोमयेनाऽथ संलिप्य मण्डले त्वासनं चरेत् ॥
सौवर्णे वाऽथ रौप्ये वा पैत्तले भूर्जपत्रके ।
कर्पूराऽगुरुकस्तूरीश्रीखण्डकुङ्कुमैरपि ॥
लिखेद् यन्त्रं प्रयत्नेन लेखिन्या हेमतारयोः ।
मध्ये योनिं समालिख्य तद्बाह्ये तु षडस्रकम् ॥
तद्बाह्येऽष्टदलं पद्मं तद्बाह्ये षोडशच्छदम् ।
चतुरस्रत्रयं बाह्ये चतुर्द्वारोपशोभितम् ॥
यत्र नोक्तं देवतायाः पीठं वा पीठदेवताः (शक्तयः) ।
तत्र मायोदितं पीठं ज्ञेयास्ता एव शक्तयः ॥
तद्बीजेन यजेत् पीठं यद्वा मायाऽणुनाऽथवा ।
तत्राऽऽवाह्य यजेद्देवीं सुपीतैरुपचारकैः ॥
यजेदङ्गानि षट्कोणे पूर्वद्वारादिषु क्रमात् ।
गणेशं वटुकं चापि योगिनीः क्षेत्रपालकम् ॥
ईशानादिनिर्ऋत्यन्तगुरुपङ्क्तिं समर्चयेत् ।
बगलां पूर्वपत्रे तु स्तम्भिनीं च ततः परम् ॥
जम्भिनीं मोहनीं चैव प्रगल्भामचलां जयाम् ।
दुर्धषा कल्मषा धीरा कल्याणा कालकर्षिणी ॥
भ्रामिका मन्दगमना भोग्याख्या चैव योगिकाः ।
एताः षोडशपत्रेषु गन्धपुष्पाक्षतैर्यजेत् ॥
षोडशस्वरसंयुक्ताः सम्प्रदायात् कुलागमे ।
यजेत्तु पत्रमध्येषु कल्पिते चाऽष्टपत्रके ॥
पूर्वादि ब्राह्म्यादिका अष्टौ वाहनायुधसंयुताः ।
लोकेशांश्च तदस्त्राणि पूजयेद् बाह्यतस्तथा ॥
योनिमध्ये मूलदेवीं त्रिरञ्जलिभिरर्चयेत् ।
धूपदीपसुनैवेद्यैर्गन्धताम्बूलदीपकैः ॥
नीराज्य विधिवत् पश्चाद् यथासंख्यं निवेदयेत् ।

पवित्राऽऽरोपणं कार्यं दमनेन तु पूजयेत् ॥
देयं चापि सितान्नेन प्रत्यहं बलिपञ्चकम् ।
हरिद्राग्रन्थिजामालापीताम्बरधरः स्वयम् ॥
पीतासनः स्मरेत् पीतां चाऽच्युतं जपमाचरेत् ।
दशांशेन कृते होमे पीतद्रव्यैः प्रतर्पयेत् ॥
सर्वपीतोपचारेण मन्त्रः सिद्ध्यति मन्त्रिणः ।
साध्यसंज्ञां समुच्चार्य स्तम्भयेति ततः परम् ॥
गतिस्तम्भनकरी विद्या अरिस्तम्भनकारिणी ।
मेधां प्रज्ञां च शास्त्रादीन् देवदानवपन्नगान् ॥
स्तम्भयेच्च महाविद्या सत्यं सत्यं न संशयः ।
एकान्ते परमे रम्ये शुचौ देशेऽथवा गृहे ॥
कुण्डं सुलक्षणं कृत्वा मेखलात्रयशोभितम् ।
योनिर्वितस्तिमात्रा तु षट्कर्माण्यत्र साधयेत् ॥
तथा कर्षणकामस्तु लवणं त्रिमधुरान्वितम् ।
निम्बपत्रं तैलयुक्तं विद्वेषकरणं परम् ॥
हरिद्रां हरितालं च लवणेन च संयुतम् ।
स्तम्भने होमयेद्देवीं प्रज्ञायाश्च गतेर्मतेः ॥
आसुर्याश्चापि तैलेन महिषीरुधिरेण च ।
रिपूणां मारणार्थं तु श्मशानाग्नौ हुनेन्निशि ॥
गृध्राणामपि काकानां गृहधूमयुतेन च ।
पक्षेण जुहुयाद् देवीं शत्रोरुच्चाटनाय तु ॥
दूर्वा कुलालमृत्तावल्यैरण्डश्चतुरङ्गुलः ।
लाजास्त्रिमधुयुक्ताश्च सर्वरोगोपशान्तये ॥
लक्षमेकं यजेद् देवीं ब्रह्मचारी दृढव्रतः ।
पर्वताग्रे महारण्ये सिद्धे शैवालये गृहे ॥
संगमे च महानद्योः निशायामपि साधयेत् ।
श्वेतब्रह्मतरोर्मूले पादुकां चैव कारयेत् ॥

अलक्तस्य च रागेण रञ्जितां च हरिद्रया ।
अनया विद्यया चापि लक्षैकेन च मन्त्रिता ॥
शतयोजनमात्रं तु स गच्छेच्चिन्तिते पथि ।
रसं मनःशिला तालं माक्षिकेण समन्वितम् ॥
पिष्ट्वाऽभिमन्त्र्य लक्षैकं सर्वाङ्गे लेपने कृते ।
अदृश्यकारकं तत् स्याल्लोके च महदद्भुतम् ॥
सुरभेरेकवर्णाया धारोष्णं क्षीरमाहरेत् ।
शर्करामधुसंयुक्तं त्रिशतं मन्त्रितं प्रिये ॥
पाययित्वा हि हरते विषं स्थावरजङ्गमम् ।
दारिद्र्यमोचनं चैव लक्षमेकं जपेत्ततः ।
दशांशेन कृते होमे एभिर्द्रव्यैः पृथक् पृथक् ॥
अथातः सम्प्रवक्ष्यामि बगलायन्त्रमुत्तमम् ।
भूर्जपत्रे समालेख्यं हरितालनिशारसैः ॥
षट्कोणं तस्य मध्ये तु वलयाऽऽकारतो लिखेत् ।
षट्त्रिंशदक्षरं मन्त्रं बगलायाः स उच्यते ॥
तारं लज्जां च बगलामुखि सर्व पदं वदेत् ।
दुष्टानामिति चोच्चार्य वाचं मुखमथो पदम् ॥
स्तम्भयेति समुच्चार्य जिह्वां कीलय चेत्यपि ।
बुद्धिं विनाशयान्ते तु तारबीजाग्निसुन्दरी ॥
अयं मन्त्रः समुद्दिष्टः साध्यनाम्नस्तु वेष्टकः ।
वेष्टयेत् पीतसूत्रेण कुलालस्य मृदं व्रजेत् ॥
चक्रे मृदं समारोप्य भ्रामयेद् वृषभं तथा ।
कारयेच्च मृदा तत्र हरितालेन लेपयेत् ॥
तन्मध्ये निक्षिपेद् यन्त्रं नासायामथवा ततः ।
अर्चयेच्च चतुष्कालं साध्यनाम्नात्र साधकः ॥
दुष्टानां स्तम्भयेद् वाचं साक्षाद् वाचस्पतेरपि ।
अथान्यद् बगलायाश्च वक्ष्यते यन्त्रमुत्तमम् ॥

पट्टे वाऽप्यथ पाषाणे ह्लींकारपुटितेन वै ।
साध्यनामोन्मत्तरसहरिद्रातालकैस्ततः ॥
पूर्वमन्त्रेण संवेष्ट्य चोर्ध्वं त्रिवलयं लिखेत् ।
गर्भस्तम्भं गतिस्तम्भं कुर्यादितन्न संशयः ॥
अथान्यद् वक्ष्यते यन्त्रं श्मशानस्थमधोमुखम् ।
घटखर्परमानीय गृहीत्वा वामहस्तके ॥
लिखेद् दक्षिणहस्तेन श्मशानाङ्गारकेण च ।
मन्त्रितं निहितं भूमौ रिपूणां स्तम्भयेद् गतिम् ॥
प्रेतवस्त्रे लिखेद् यन्त्रमङ्गारेण च तत्पुनः ।
मण्डूकवदने न्यस्येत्पीतवस्त्रेण वेष्टितम् ॥
पूजितं पीतपुष्पैस्तद् वाचं संस्तम्भयेद् द्विषाम् ।

इति मेरुतन्त्रोक्तं विधानम् ।

—:०:—

## ५—मन्त्रोद्धारभेदः उक्तं च रुद्रयामले

प्रणवं पूर्वमुद्धृत्य मायां च बगलामुखि ।
तदन्ते सर्वदुष्टानां ततो वाचं मुखं पदम् ॥
स्तम्भयेति ततो जिह्वां कीलयेति पदद्वयम् ।
बुद्धिं नाशय पश्चात्तु स्थिरमायां समालिखेत् ॥
लिखेच्च पुनरोङ्कारं स्वाहेति पदमुत्तमम् ।
षट्त्रिंशदक्षरो मन्त्रः सर्वसम्पत्करो मतः ॥

"ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय कीलय बुद्धिं नाशय ह्लीं ॐ स्वाहा ।" क्वचित् मुखमित्यस्याग्रे पदमित्यधिकं नाशयेति स्थाने 'वि' उपसर्गसहितं च प्रायेण इदमेव सर्वत्र दृश्यते मेरुतन्त्रे, स्थिरमायाबीजस्थाने मायाबीजं स्वीकृतम् आगमलहर्याम् ।

तारं चैव च मृद्बीजं द्व्यक्षरं समुदाहृतम् ।
मन्त्रं च द्विशिरो ज्ञेयं ततः पल्लवमुद्धरेत् ॥
भगवति च बगला च मुखि देवी ततः पुनः ।
तथापि सर्वदुष्टानां वाचं मुखं पदं तथा ॥
स्तम्भय द्विस्तथा जिह्वां कीलय द्विर्बुद्धिं तथा ।
विनाशय द्विवारं च मृत्तिकाबीजकं तथा ॥
त्र्यक्षमन्ते पयो ज्ञेयं द्विपंचाशदक्षरो मनुः ।
क्वचिन्माया स्थिरमाया बीजसम्पुट उपलभ्यते ॥

—:०:—

## ६ ब्रह्मास्त्रकल्पविधानम्

श्रीमान् साधको ब्राह्मे मुहूर्ते चोत्थाय स्वशिरसि सहस्रदलकमल-कर्णिकायां सशक्तिकं गुरुं संचिन्त्य मानसोपचारैः सम्पूज्य जपं समर्प्य गुरुपादुकां जप्त्वा निवेद्य स्वेष्टदेवतां पीताम्बरां ध्यात्वा मानसैरुपचारैः सम्पूज्य ऋष्यादिषडङ्गन्यासध्यानपूर्वकं मूलं जप्त्वा निवेद्य जलाशयं गत्वा वैदिकविधिना स्नात्वाऽऽचम्य प्राणानायम्य बालात्रिबीजैः (ऐं क्लीं सौः) करषडङ्गन्यासौ विधाय जले त्रिकोणं विभाव्य तस्मिन्नङ्कुश-मुद्रया सूर्यमण्डलात्तीर्थमावाह्य देवीं ध्यायेद् । यथा—

नवयौवनसम्पन्नां सर्वाऽऽभरणभूषिताम् ।
पीतमाल्यानुवसनां स्मरेत्तां बगलामुखीम् ॥

इति ध्यात्वा "गङ्गे च यमुने चेति" धेनुमुद्रया तीर्थानि प्रार्थ्य मूलेन त्रिर्निमज्य त्रिःसन्तर्प्य मूलेन श्रीसूर्याय त्रिरर्घ्यं दत्त्वा जलान्निष्क्रम्य धौते वाससी परिधाय वैदिकीं सन्ध्यां निर्वर्त्य तान्त्रिकीं सन्ध्यां कुर्यात् । यथा— मूलेन बालया त्रिराचम्य मूलेन त्रिःप्राणानायम्य मूलेन शिरो-हृदयादिषु त्रिःसम्मार्ज्य 'ॐ ह्लीं हुं फट् स्वाहा' इत्यघमर्षणं कृत्वा ततः सूर्यमन्त्रेण श्रीसूर्याय अर्घ्यं दत्त्वा त्रिवारं सूर्यमण्डले ध्यात्वा "ह्लीं ब्रह्मास्त्रविद्यायै विद्महे, पीताम्बरायै धीमहि तन्नो बगला "प्रचो दयात् 'सूर्यमण्डलस्थायै श्री बगलामुख्यै' इदमर्घ्यं समर्पयामीति

त्रिर्दत्वा गायत्रीं दशधा जप्त्वा ॐ अस्य श्रीबगलामुखीमन्त्रस्य नारदर्षये नमः शिरसि, अनुष्टुप् छन्दसे नमो मुखे, श्रीबगलामुखीदेवतायै नमो हृदये, ह्लीं बीजाय नमो गुह्ये, स्वाहा शक्तये नमः पादयोः, नम इति कीलकाय नमः सर्वाङ्गे, न्यासे विनियोगाय नमः करसम्पुटे, ह्लामित्यादि षड्दीर्घैः करषडङ्गकम् । 'ॐ ह्लीं' अङ्गुष्ठाभ्यां नमः, बगलामुखि' तर्जनीभ्यांनमः 'सर्वदुष्टानां' मध्यमाभ्यां नमः, 'वाचं मुखं स्तम्भय' अनामिकाभ्यां नमः, 'जिह्वां कीलय' कनिष्ठिकाभ्यां नमः, 'बुद्धिं विनाशय ह्लीं ॐ स्वाहा' करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि । 'ॐ ह्लीं' शिरसि, 'बगला' ललाटे, 'मुखि' कर्णयोः, 'सर्व' भ्रुवोः, दुष्टानां' नेत्रयोः, 'वाचं' नासिकयोः, 'मुखं' मुखे, 'पदं' कण्ठे, 'स्तम्भय' हृदि, 'जिह्वां' जठरे, 'कीलय' नाभौ, 'बुद्धिं' गुह्ये, 'विनाशय, ऊर्वोः, 'ह्लीं' पादयोः, 'बगला' गुल्फयोः, 'मुखि' ऊर्वोः, 'सर्व' लिङ्गे, 'दुष्टानां' नाभौ, 'वाचम्' उदरे, 'मुखं' हृदि, 'पदं' कण्ठे, स्तम्भय' मुखे, 'जिह्वां' नासिकयोः, 'कीलय' कर्णयोः, 'बुद्धिं' नेत्रयोः, 'विनाशय' भ्रुवोः, 'ह्लीं' ललाटे, 'ॐ स्वाहा' शिरसि, 'ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय ऐं' मूलाधारे, 'जिह्वां कीलय' हृदि, 'बुद्धिं विनाशय ह्लीं ॐ स्वाहा' ब्रह्मरन्ध्रे, 'ॐ ह्लीं बगलायै नमः—पूर्वे न्यसामि, ॐ ह्लीं गदाधारिण्यै नमः-आग्नेये, ॐ पीताम्बरायै-दक्षिणे, ॐ स्तम्भिन्यै-नैर्ऋत्ये, ॐ जिह्वाकीलिन्यै-पश्चिमे, ॐ मदोन्मत्तायै--वायव्ये, ॐ त्रिशूलधारिण्यै कौबेर्याम्, ॐ ब्रह्मास्त्रदेवतायै--ईशान्यै, ॐ स्तब्धमातृभ्यः-पाताले, ॐ महादेव्यै--ऊर्ध्वम्, । एवं दश दिक्षु ।

एवं न्यासविधिं कृत्वा बगलामातृकां न्यसेत् ।
तारं च मातृकावर्णान् बगलाबीजमेव च ॥
नमोन्तेन च विन्यस्य मातृकास्थानतो न्यसेत् ।

**अथ ध्यानम्**

चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ।
त्रिशूलं पानपात्रं च गदां जिह्वां च बिभ्रतीम् ॥

बिम्बोष्ठीं कम्बुकण्ठीं च समपीनपयोधराम् ।
पीताम्बरां मदाघूर्णां ध्यायेद् ब्रह्मास्त्रदेवताम् ॥

इति ध्यात्वा मानसोपचारैः सम्पूज्य ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय ऐं आत्मतत्त्वव्यापिनीबगलामुख्यम्बाश्रीपादुकां पूजयामि । जिह्वां कीलय क्लीं विद्यातत्त्वव्यापिनीबगलाम्बायै नमः, बुद्धिं विनाशय ह्लीं ॐ स्वाहा सौः शिवतत्त्वव्यापिनीश्रीबगलाम्बायै नमः । ततो मूले जप्त्वा अन्ते 'गुह्यातिगुह्येति' जपं निवेदयेत् ।

इति जपविधिः ।

—:०:—

## १ कीलक स्तोत्रम्

ह्लीं ह्लीं ह्लींकारवाणे रिपुदलदलने घोरगम्भीरनादे ।
ह्रीं ह्रीं ह्रींकाररूपे मुनिगणनमिते सिद्धिदे शुभ्रदेहे ॥
भ्रों भ्रों भ्रोंकारनादे निखिलरिपुघटात्रोटने लग्नचित्ते ।
मातर्मातर्नमस्ते सकलभयहरे नौमि पीताम्बरे त्वाम् ॥१॥
क्रौं क्रौं क्रौंमीशरूपे अरिकुलहनने देहकीले कपाले ।
हस्रौं हस्रौं स्वरूपे समरसनिरते दिव्यरूपे स्वरूपे ॥
ज्रौं ज्रौं ज्रौं जातरूपे जहि जहि दुरितं जम्भरूपे प्रभावे ।
कालि कङ्कालरूपे अरिजनदलने देहि सिद्धिं परां मे ॥२॥
हस्रां हस्रीं च हस्रैं त्रिभुवनविदिते चण्डमार्त्तण्डचण्डे ।
ऐं क्लीं सौं कौलविद्ये सततशमपरे नौमि पीतस्वरूपे ॥
द्रौं द्रौं द्रौं दुष्टचित्ताऽऽदलनपरिणतबाहुयुग्मत्वदीये ।
ब्रह्मास्त्रे ब्रह्मरूपे रिपुदलहनने ख्यातदिव्यप्रभावे ॥३॥
ठं ठं ठंकारवेशे ज्वलनप्रतिकृतिज्वालमालास्वरूपे ।
धां धां धां धारयन्तीं रिपुकुलरसनां मुद्गरं वज्रपाशम् ॥
मातर्मातर्नमस्ते प्रबलखलजनं पीडयन्तीं भजामि ।
डां डां डां डाकिन्याद्यैर्डिमकडिमडिमं डमरुकं वादयन्तीम् ॥४॥

वाणीं व्याख्यानदात्रीं रिपुमुखखनने वेदशास्त्रार्थपूताम् ।
मातः श्रीबगले परात्परतरे वादे विवादे जयम् ॥
देहि त्वं शरणागतोऽस्मि विमले देवि प्रचण्डोद्धृते ।
माङ्गल्यं वसुधासु देहि सततं सर्वस्वरूपे शिवे ॥५॥
निखिलमुनिनिषेव्यं स्तम्भनं सर्वशत्रोः ।
शमपरमिह नित्यं ज्ञानिनां हार्दरूपम् ॥
अहरहरनिशायां यः पठेद्देवि कीलम् ।
स भवति परमेशो वादिनामग्रगण्यः ॥६॥

—:०:—

## २ अथ बगलाहृदयम्

### श्रीदेव्युवाच

इदानीं खलु मे देव बगलाहृदयं प्रभो ।
कथयस्व महादेव यद्यहं तव वल्लभा ॥

### ईश्वर उवाच

साधु साधु महाप्राज्ञे सर्वतन्त्रार्थसाधिके ।
ब्रह्मास्त्रदेवतायाश्च हृदयं वच्मि तत्त्वतः ॥
प्रणवं पूर्वमुच्चार्य स्थिरमायां ततो वदेत् ।
सम्बोधनपदेनैव बगलामुखि उद्धरेत् ॥
तदग्रे सर्वदुष्टानां ततो वाचं पदं मुखम् ।
स्तम्भयेति ततो जिह्वां कीलयेति पदं ततः ॥
बुद्धिं विनाशय इति स्थिरमायां ततोऽग्रतः ।
वदेच्च पुनरोङ्कारं स्वाहेति च पदं ततः ॥
षट्त्रिंशदक्षरी विद्या सद्यःस्तम्भनकारिणी ।
अङ्गन्यासं ततः कुर्यात् स्थिरमायां हृदि न्यसेत् ॥
बगलामुखि तु शिरसि सर्वदुष्टानां शिखासु च ।
वाचं मुखं पदं चैव कवचे विन्यसेत्ततः ॥

जिह्वां कीलय नेत्रयुग्मे आस्ये बुद्ध्यादिकं तथा ।
गम्भीरां च मदोन्मत्तां स्वर्णकान्तिसमप्रभाम् ॥
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ।
ऊर्ध्वकेशजटाजूटां करालवदनाम्बुजाम् ॥
मुद्गरं दक्षिणे हस्ते पाशं वामेन धारिणीम् ।
रिपोर्जिह्वां त्रिशूलं च पीतगन्धानुलेपनाम् ॥
पीताम्बरधरां सान्द्रदृढपीनपयोधराम् ।
हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ॥
पीतभूषणभूषाढ्यां स्वर्णसिंहासने स्थिताम् ।
स्वानन्दानुमयीं देवीं रिपुस्तम्भनकारिणीम् ॥
मदनस्य रतेश्चापि प्रीतिस्तम्भनकारिणी ।
महाविद्या महामाया महामेधा महाशिवा ॥
महामोहा महासूक्ष्मा साधकस्य वरप्रदा ।
राजसी सात्त्विकी सत्या तामसी तैजसी स्मृता ॥
तस्याः स्मरणमात्रेण त्रैलोक्यं स्तम्भयेत् क्षणात् ।
गणेशो वटुकश्चैव योगिन्यः क्षेत्रपालकः ॥
गुरवश्च गुणास्तिस्रो बगला स्तम्भिनी तथा ।
जृम्भिणी मोदिनी चाम्बा बालिका भूधरा तथा ॥
कलुषा करुणा धात्री कालकर्षिणिका परा ।
भ्रामरी मन्दगमना भगस्था चैव भासिका ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी रमा ।
वाराही च तथेन्द्राणी चामुण्डा भैरवाऽष्टकम् ॥
सुभगा प्रथमा प्रोक्ता द्वितीया भगमालिनी ।
भगवांहा तृतीया तु भगसिद्धाऽब्धिमध्यगा ॥
भगस्य पातिनी पश्चात् भगमालिनी षष्ठिका ।
उड्डीयानपीठनिलया जालन्धरपीठसंस्थिता ॥
कामरूपे तथा संस्था देवीत्रितयमेव च ।

सिद्धौघा मानवौघाश्च दिव्यौघा गुरवः क्रमात् ॥
क्रोधिनी जृम्भिणी चैव देव्याश्चोभयपार्श्वयोः ।
पूज्यस्त्रिपुरनाथश्च योनिमध्येऽम्बिकायुतः ॥
स्तम्भिनी या महाविद्या सत्यं सत्यं वरानने ।
एषा सा वैष्णवी माया विद्यां यत्नेन गोपयेत् ॥
ब्रह्मास्त्रदेवतायाश्च हृदयं परिकीर्तितम् ।
ब्रह्मास्त्रं त्रिषु लोकेषु दुष्प्राप्यं त्रिदशैरपि ॥
गोपनीयं प्रयत्नेन, न देयं यस्य कस्यचित् ।
गुरुभक्ताय दातव्यं वत्सरं दुःखिताय वै ॥
मातृपितृरतो यस्तु सर्वज्ञानपरायणः ।
तस्मै देयमिदं देवि बगलाहृदयं परम् ॥
सर्वार्थसाधकं दिव्यं पठनाद् भोगमोक्षदम् ।
इति श्रीशिवपार्वतीसंवादे बगलाहृदयं समाप्तम् ।

इति ब्रह्मास्त्रकल्पः ।

—:०:—

## ७—साख्यायनतन्त्रोक्तं विधानम्

### क्रौञ्चभेदन उवाच

महापाशुपताऽऽक्रान्त नमः पन्नगभूषण ।
षट्त्रिंशदक्षरीं विद्यां बगलायाश्च मे वद ॥

### ईश्वर उवाच

मन्त्रोद्धारं प्रवक्ष्यामि पुरश्चरणलक्षणम् ।
प्रयोगञ्चोपसंहारं साङ्गञ्च शृणु पुत्रक ॥
तारं च बगलाबीजं बगलापदमुद्धरेत् ।
मुखीति पदमुच्चार्य वाचं मुखं पदं वदेत् ॥
स्तम्भयेति पदं चोक्त्वा जिह्वां कीलय उच्चरेत् ।

बुद्धिशब्दं तथोच्चार्य विनाशयं पदं वदेत् ॥
स्तव्धमायां समुच्चार्य प्रणवं च ततो वदेत् ।
बह्निजायां समुच्चार्य मन्त्रोद्धारं विभावय ॥
षट्त्रिंशदक्षरं मन्त्रं मन्त्रराजमिमं भुवि ।
न्यासविद्यां प्रवक्ष्यामि सद्यःसिद्धिकरीं पराम् ॥
बगलामातृकां चादौ कामतार्त्तीयवाग्भवम् ।
श्रीमायां मातृकां चैव बगलापञ्जरं न्यसेत् ॥
लघुषोढां च विन्यस्य सर्वतन्त्रेष्वयं क्रमः ।
ध्यानं यत्नात् प्रवक्ष्यामि ध्यानं सर्वार्थसिद्धिदम् ॥
आदौ मध्ये तथा चान्ते ध्यानं कुर्यात्समाहितः ।
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ॥
त्रिशूलं पानपात्रं च गदां जिह्वां च बिभ्रतीम् ।
विम्बोष्ठीं कम्बुकण्ठीं च समपीनपयोधराम् ॥
पीताम्बरां मदाघूर्णां ध्यायेद् ब्रह्मास्त्रदेवताम् ।
नारद ऋषिरेवाऽत्र वृहती छन्द उदाहृतम् ॥
देवता बगलानाम्नी स्तम्भनास्त्रं च चिन्मयी ।
लं बीजं चैव ह्लीं शक्तिः रं कीलकमुदाहृतम् ॥
शत्रूणां स्तम्भनार्थाय जपेऽहं विधिपूर्वकम् ।
सङ्कल्पपूर्वकं मन्त्रं कौलाचारक्रमेण च ॥
पृथिवीलक्षं जपेन्मन्त्रं न्यासध्यानसमन्वितम् ।
तर्पयेत्तद्दशांशेन हेतुसम्मिश्रवारिणा ॥
जुहुयाद् विल्वपत्रेण (कुसुमैः) तद्दशांशेन बुद्धिमान् ।
ब्राह्मणान् भोजयेत्पुत्र तद्दशांशं घृतप्लुतम् ॥
तर्पणं तर्पयामीति स्वाहान्तं होममाचरेत् ।
पूजा त्रैकालिकी नित्यं जपतर्पणमेव च ॥
होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ।
पुरश्चर्यां विना मन्त्रो न प्रसिद्ध्यति भूतले ॥

एवं साधितमन्त्रेण षट् प्रयोगान् समाचरेत् ।
शान्तौ च जुहुयात् शालिसक्तुमाज्यसमन्वितम् ॥
गुणायुतं चामलकप्रमाणं क्रौञ्चभेदन ।
वशीकरणकार्येषु बिल्वपत्रं घृतप्लुतम् ॥
गुणायुतं हुनेद्धीमान् कुण्डे पूर्वोक्तमादरात् ।
स्तम्भनेषु हुनेद्धीमान् तालकं घृतसंयुतम् ॥
बदरीफलमात्रं तु गुणायुतमनन्यधीः ।
विद्वेषणे च जुहुयात् पत्रैर्निम्बार्कसम्भवैः ॥
रात्रौ वेदायुतैर्धीमान् सद्यो विद्वेषणं भवेत् ।
राजीलवणसंयुक्तं वाणायुतमनन्यधीः ॥
सद्य उच्चाटनं शीघ्रं ध्रुवं कूर्मदियोरपि ।
तिलतैलेन संमिश्रं माषहोमं गुणान्वितम् ॥
प्रेताग्नौ प्रेतकाष्ठे च जुहुयात् प्रेतकानने ।
प्रेतोन्मुखे च जुहुयात् नग्नः सन्निशि मण्डले ।
सद्योमरणमाप्नोति मृकण्डुसदृशोऽपि च ॥

इति सांख्यायनतन्त्रे सप्तमः पटलः ।

—:०:—

## ८—अथ एकाक्षरमन्त्रविधानम्

### क्रौञ्चभेदन उवाच

नमस्ते जगतां नाथ भस्मोद्धूलितविग्रह ।
एकाक्षरं महामन्त्रवैभवं वद मे प्रभो ॥

### ईश्वर उवाच

यत्तदेकाक्षरीमन्त्रं तत्तन्मन्त्रेषु जीवनम् ।
उत्तमं बीजसंयुक्तं मन्त्रं सर्वार्थसाधनम् ॥
नानामन्त्रेषु मन्त्रे वा बीजाद्यं सर्वसिद्धिदम् ।

निर्बीजमेव निर्वीर्यं शिवस्य वचनं यथा ॥
तद्बीजोद्धारमनघ सर्वसिद्धिप्रदायकम् ।
एकाक्षरमहामन्त्रं बगलायाः सुसिद्धिदम् ॥
पूजनं च प्रयोगं च वक्ष्येऽहं तव पुत्रक ।
सोऽन्तरान्तसमायुक्तं चतुर्थस्वरसंयुतम् ॥
रेफाक्रान्तं विन्दुयुक्तं ब्रह्मास्त्रैकाक्षरो मनुः ।
ह्लीं ब्रह्मा ऋषिश्छन्दोऽदः गायत्री समुदाहृतम् ॥
देवता बगला नाम्नी शक्तिश्चिन्मयरूपिणी ।
लं बीजं ह्रूं च शक्तिश्च ईं कीलकमुदाहृतम् ॥
न्यासविद्यां प्रवक्ष्यामि मन्त्रसिद्धिकरीं नृणाम् ।
भूतसिद्धि भुवः सिद्धि मातृकाद्वितयं न्यसेत् ॥
मन्त्राक्षरेण विन्यस्य तद्विधिं शृणु पुत्रक ।
नेत्रवाणचतुःपञ्चनवपंचदशाऽक्षरम् ॥
ॐ ह्लीं बगलामुखि इत्यादि विन्यसेद् ।
अङ्गुलीभिश्च षडङ्गेषु तथैव च ॥

## अथ पञ्जरन्यासः

वक्ष्येऽहं पञ्जरन्यासं मन्त्रसिद्धिकरं नृणाम् ।
बगला पूर्वतो रक्षेद् आग्नेय्यां च गदाधरी ।
पीताम्बरा दक्षिणे च स्तम्भिनी चैव नैर्ऋते ॥
जिह्वाकीलिन्यतो रक्षेत् पश्चिमे सर्वदा मम ।
वायव्ये च मदोन्मत्ता कौवेर्यां च त्रिशूलिनी ॥
ब्रह्मास्त्रदेवता पातु ऐशान्यां सततं मम ।
संरक्षेन्मां तु सततं पाताले स्तब्धमातृका ॥
ऊर्ध्वं रक्षेन्महादेवी जिह्वास्तम्भनकारिणी ।
एवं दश दिशो रक्षेद् बगला सर्वसिद्धिदा ॥
एवं न्यासविधिं कृत्वा यत्किञ्चिज्जपमाचरेत् ।
तस्याः स्मरणमात्रेण शत्रूणां स्तम्भनं भवेत् ॥

सर्वंन्यासविधिं कृत्वा बगलामातृका न्यसेत् ।
तन्मातृकाविधि वक्ष्ये सारात् सारतरं परम् ॥
तारं च मातृकार्णं च बगलाबीजमेव च ।
नमोन्तेन च विन्यस्य मातृकान्यासतोऽनघ ॥
ध्यानेन मन्त्रसिद्धिः स्यात् ध्यानं सर्वार्थसाधकम ।
ध्यानं विना भवेन्मूकः सिद्धमन्त्रोऽपि साधकः ॥

### ध्यानम्

वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति ।
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति ॥
गर्वी खर्वति सर्वविच्च जडति त्वन्मन्त्रिणा यन्त्रितः ।
श्री नित्ये बगलामुखि प्रतिदिनं कल्याणि तुभ्यं नमः ॥
एवं ध्यात्वा जपेन्मन्त्रं तत्त्वलक्षं सुबुद्धिमान् ।
गुडोदकेन सन्तर्प्य तद्दशांशेन पुत्रक ॥
त्रिकोणकुण्डे जुहुयात् हस्तनिम्नोन्नते शुभे ।
हयारिकुसुमेनैव सुरक्तेनाऽऽज्यसंयुतम् ॥
ब्राह्मणान् भोजयेत्पश्चात्तत्वसंख्याच्च युग्मकम् ।
मन्त्रसिद्धिर्भवेत्पुत्र नान्यथा शिवभाषितम् ॥
वाममार्गक्रमेणैव वामामभ्यर्च्य पुष्पिणीम् ।
मन्त्रसिद्धिकरं चैव सर्वदा रिपुनाशनम् ॥
परमन्त्रप्रयोगेषु नानाचेटककृत्रिमैः ।
सद्यः स्तम्भनविद्या च बगला नात्र संशयः ॥

इति सांख्यायने पञ्चमः पटलः ।

—:०:—

## ९—अथ मन्त्रराजैकाक्षरयोर्निर्णयः

### ईश्वर उवाच

अथातः सम्प्रवक्ष्यामि बगलामन्त्रनिर्णयम् ।
षट्त्रिंशदक्षरी विद्या विधातृपरिनिष्ठिता ॥
सांख्यायनमते देव्या नारायण ऋषिर्मतः ।
अनुष्टुप् छन्द आख्यातं देवता बगलामुखी ॥
सांख्यायनमते देव्या वामाचारविधिर्मतः ।
ब्रह्मयामलसम्मत्या ब्रह्मा चास्य ऋषिर्मतः ॥
गायत्री छन्द उद्दिष्टं देवता सैव कीर्तिता ।
जयप्रथाख्ययामले ऋषिर्नारद एव हि ॥
छन्द आदि पूर्ववद् ज्ञेयमिति संक्षेपतः सुत ।
हरिद्रासंहितायां तु ऋषिर्नारायणो मतः ॥
त्रिष्टुप् छन्दः समाख्यातं देवता बगलामुखी ।
सांख्यायनमतं देव्याः कलौ जागर्ति केवलम् ॥
मृत्युञ्जयजपं कृत्वा ततो विद्यां जपेत्सुधीः ।
मृत्युञ्जयं विना देवि बगला नहि सिध्यति ॥
ऋषिश्च्छन्दस्त्रितयकं मन्त्रभेदात् प्रकाशितम् ।
बीजसंज्ञां प्रवक्ष्यामि सांख्यायनमुखोद्भवाम् ॥
शिवबीजं वह्नियुक्तं रतिबिन्दुसमन्वितम् ।
बह्निशैवान्तराले तु भूबीजं योजयेत् सुत ॥
स्थिरमाया त्वियं प्रोक्ता विद्या त्वेकाक्षरी शुभा ।
अनया विद्यया देवि किं न सिध्यति भूतले ॥
पीतवासोमते पुत्र स्थिरमायां शृणु प्रिये ।
स्थिररूपा तु या माया स्थिरमाया तु सा मता ॥
तदुद्धारं शृणु प्राज्ञ गगनार्णं समुद्धरेत् ।
स्थिरबीजं समुद्धृत्य रतिबिन्दुविभूषितम् ॥

स्थिरमाया त्वियं पुत्र विन्द्वर्धचन्द्रभूषिता ।
इयं शप्ता महाविद्या कीलिता स्तम्भिता सुत ॥
रेफयोगान्महाशैव निःशप्ता फलदायिनी ।
रेफयुक्तां जपेद् विद्यां फलहीनां न संजपेत् ॥
रेफहीनां जपन् विद्यां कोटिजापान्न सिध्यति ।
तस्माद् रेफस्तु संयोज्यः स्थिराधः परमेश्वर ॥
संजपेत् प्रयतः पुत्र तस्य सिद्धिर्भविष्यति ।
लघुषोढा महाषोढा पञ्जरन्यासमेव हि ॥
बगलामातृकां न्यस्य कुल्लुकां च विचिन्तयेत् ।
सेत्वादिकामराजान्तं न्यस्य मृत्युञ्जयं जपेत् ॥
ततो वै प्रजपेद्विद्यां सदा जाग्रत्स्वरूपिणीम् ।
पीतवासोमते पुत्र पञ्चप्रेतगतां स्मरेत् ॥
चतुर्भुजां वा द्विभुजां पीतार्णवनिवासिनीम् ।
सुधार्णवसमासीनां मणिमण्डपमध्यगाम् ॥
सांख्यायनमतेनैव संस्मरेद् यत्नतः सुत ।
सुन्दर्याः पश्चिमाम्नाये बगला परिनिष्ठिता ॥
श्रीकाल्या उत्तराम्नाये बगला पूज्यतां सुत ॥

इति सांख्यायने द्वित्रिंशः पटलः

—:०:—

## १०—अथ मन्त्रसन्ध्याप्रकरणम्

### क्रौञ्चभेदन उवाच

गङ्गाधर नमस्तेऽस्तु गौरीप्रिय नमो नमः ।
ब्रह्मास्त्रमन्त्रसंध्यां च वद मे करुणाकर ॥

### ईश्वर उवाच

मन्त्रमध्यापयेत् सम्यक् शिष्यस्य गुरुरादरात् ।
तदारभ्य तु तन्मन्त्रैः मन्त्रसंध्यां समाचरेत् ॥

तन्मन्त्रसंध्यां वक्ष्यामि शरजन्मन् समासतः ।
मन्त्रसंध्याविहीनस्य सर्वं तन्निष्फलं भवेत् ॥
पञ्चाङ्गविधिना स्नात्वा मन्त्रस्नानमनन्तरम् ।
तत्र स्नायादङ्गमन्त्रैर्मूलेनैव तु मार्जयेत् ॥
धौतवस्त्रं परीधाय स्वगृह्योक्तविधानतः ।
नित्यकर्म समाप्यान्ते मन्त्रसन्ध्यां समाचरेत् ॥
मुद्रयाअङ्कुशेनैव सूर्यमण्डलगं जलम् ।
आनयेत्तोयमध्ये तु ध्यानयोगेन बुद्धिमान् ॥
आवाहनस्थापनानि संनिधापनमेव च ।
सन्निवेशनमुद्रा च सम्मुखी प्रार्थनी तथा ॥
एता मुद्राश्च तत्तोये दर्शयेत् साधकोत्तमः ।
मूलेनैव त्रिराचम्य अष्टपत्राम्बुजं लिखेत् ॥
मध्ये चैकाक्षरीयन्त्रं बगलानाम पुत्रक ।
वेदसंख्यामन्त्रवर्णानिष्टपत्राम्बुजे लिखेत् ॥
अष्टपत्रे अष्टवर्णान् लिखेन्मूलमनुं तथा ।
पुनरेकाक्षरीमन्त्रं त्रिःसप्त अभिमन्त्रयेत् ॥
तेन मूलेन संमार्ज्य मार्जनं क्रमशोऽर्भक ।
तन्मार्जनविधिं वक्ष्ये ऐहिकाऽऽमुष्मिकप्रदम् ॥
त्रिधा मूर्ध्नि द्विधा बाहौ त्रिधा हृन्नाभिदेशयोः ।
त्रिधा संमार्जयेदङ्घ्र्योः सम्यक् कर्म स्वयं क्रमः ॥
पादादिमूर्ध्निपर्यन्तं क्रूरकर्म सुमार्जयेत् ।
एवं च मार्जनं कृत्वा गायत्रीं बगलाह्वयाम् ॥
अर्घत्रयं च निःक्षिप्य हृदि सम्भाव्य देवताम् ।
मूलेन मन्त्रितं तोयं त्रिवारं च त्रिधा पिबेत् ॥
एवमेव त्रिकालं च मन्त्रसन्ध्यां समाचरेत् ।
उपस्थानं त्रिकालस्य वक्ष्येऽहं क्रौञ्चभेदन ॥
उपस्थानं विना सन्ध्या निष्फला नात्र संशयः ।

गम्भीरां च मन्दोन्मत्तां स्वर्णकान्तिसमप्रभाम् ।
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ॥
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्रदृढपीनपयोधराम् ॥
पीतभूषणभूषाङ्गीं धृतचन्द्रार्धशेखराम् ।
रत्नसिंहासनासीनामम्बां त्रैलोक्यसुन्दरीम् ॥
एवं ध्यात्वा तु देवेशीं प्रातःसन्ध्यां समाचरेत् ।
उपस्थानं प्रवक्ष्यामि मध्याह्नस्य कुमारक ॥
दुष्टस्तम्भनमुग्रविघ्नशमनं दारिद्रचविद्रावणम् ।
भूभृद्भीशमनं सदा मृगदृशां चेतः समाकर्षणम् ॥
सौभाग्यैकनिकेतनं यमदृशः कारुण्यपूर्णेक्षणम् ।
मृत्योर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः ॥
एवं सान्ध्यमुपस्थानं कूटकर्मसु पुत्रक ।
उपस्थानं प्रवक्ष्यामि सायाह्नस्य कुमारक ॥
मातर्भञ्जय मे विपक्षवदनं जिह्वां च संकीलय ।
ब्राह्मीं मुद्रय मुद्रयाऽऽशु धिषणामङ्घ्रचोर्गतिं स्तम्भय ॥
शत्रूंश्चूर्णय चूर्णयाऽऽशु गदया गौराङ्गि पीताम्बरे ।
विघ्नौघं बगले हर प्रणमतां कारुण्यपूर्णेक्षणम् ॥
सायमौपास्तिकं कुर्यादेवमेव कुमारक ।
विघ्नग्रहविनाशे च एवं ध्यायेज्जगन्मयीम् ॥
मन्त्रसन्ध्यां विना मन्त्रः कोटिकोटिजपेन च ।
न भवत्येव सिद्धाद्यैर्मन्त्रसिद्धिः कुमारक ॥
त्रिकालमाचरेत् सन्ध्यामुपस्थानं तथैव च ।
सहस्रं प्रजपेन्मन्त्रं सिद्धिः षण्मासतो भवेत् ॥
पूर्वोक्तविधिवत्सन्ध्यां कृत्वा चाष्टोत्तरं शतम् ।
यं यं वाऽपि स्मरेत्पुत्र तं तं प्राप्नोति निश्चितम् ॥

सन्ध्यामन्त्रेषु सर्वेषु अङ्गमेव कुमारक ।
न प्रसीदत्यङ्गहीना, तस्मात्सन्ध्यां समाचरेत् ॥

—::००::—

## ११—अथ गायत्रीविधानम्

### क्रौञ्चभेदन उवाच

नमस्ते सर्वसर्वेश गर्विताऽसुरभञ्जन ।
गायत्रीं बगलाख्यां च वद मे करुणाकर ॥

### ईश्वर उवाच

मन्त्रोद्धारं प्रवक्ष्यामि मन्त्रमाहात्म्यमेव च ।
पुरश्चर्याप्रयोगं च वक्ष्येऽहं तव पुत्रक ॥
ब्रह्मास्त्राय पदं चोक्त्वा विद्महे इति पदं तथा ।
स्तम्भनेति पदं चोक्त्वा तन्नः शब्दं ततो वदेत् ॥
बगलापदमुच्चार्यमुद्धरेच्च प्रचोदयात् ।
गायत्री बगलानाम्नी सर्वसिद्धिप्रदा भुवि ॥
ब्रह्मा ऋषिश्छन्दश्च गायत्रं समुदाहृतम् ।
देवता बगलानाम्नी चिन्मयी शक्तिरूपिणी ॥
ॐ बीजं ह्लीं शक्तिः कीलकं विद्महे पदम् ।
चतुर्लक्षं पुरश्चर्या तद्दशांशं च तर्पणम् ॥
तद्दशांशं हुनेदाज्यं तावद् ब्राह्मणभोजनम् ।
न्यासं ध्यानादिकं सर्वं कुर्यात्तन्मन्त्रराजवत् ॥
प्रयोगानथ वक्ष्यामि गायत्र्या बगलाह्वयाम् ।
तारादि प्रजपेन्मन्त्रं मोक्षार्थी च कुमारक ॥
कामार्थी प्रजपेन्मन्त्रं तारवाराहपूर्वकम् ।
सम्मोहनार्थं प्रजपेत् कामराजपुरःसरम् ॥
स्तम्भनार्थी जपेत् पुत्र बगलाबीजपूर्वकम् ।

विद्वेषणादौ प्रजपेद् हुंकारद्वयपूर्वकम् ॥
उच्चाटनार्थं प्रजपेत् शक्तिवाराहपूर्वकम् ।
वाराहशक्तिं वाराहं तच्च मायापुरःसरम् ॥
प्रजपेन्मन्त्रमेतद्धि मारणं भवति ध्रुवम् ।
वाग्भवादि जपेन्मन्त्रं विद्या सिद्धिर्भविष्यति ॥
बालादि प्रजपेन्मन्त्रं कन्यकां क्षितिमाप्नुयात् ।
बाराहबीजमध्यस्थगायत्रीलक्षजापतः ॥
भूलाभो जायते तस्य अनायासेन पुत्रक ।
श्रीबीजादिं जपेत्पुत्र गायत्रीं बगलाह्वयाम् ॥
कुवेरसदृशः श्रीमान् जायते नात्र संशयः ।
ताक्ष्र्यबीजादिकं मन्त्रं प्रजपेद् ध्यानपूर्वकम् ॥
नानाविषप्रयोगांश्च गररोगाऽऽदिनाशनम् ।
भैरवं बीजमादाय प्रजपेच्च कुमारक ॥
भूतप्रेतपिशाचाद्यास्तत्प्रयोगाद् व्यपोहति ।
जपेदमृतबीजादिं गायत्रीं बगलाह्वयाम् ॥
तापज्वरमहातापाच्छान्तिमाप्नोति पुत्रक ।
जपेच्च वायुबीजादिं गायत्रीं बगलाह्वयाम् ॥
क्षिप्रमुच्चाटनं तस्य भवेच्छङ्करभाषितम् ।
अग्निबीजादिं गायत्रीं प्रजपेद् बगलाह्वयाम् ॥
तापेन महताऽऽविष्टः पश्चाच्छत्रुर्मृतो भवेत् ।
मायादि प्रजपेन्मन्त्रं गायत्रीं बगलाह्वयाम् ॥
राजा वा राजपुत्रो वा मरणान्तवशो भवेत् ।
महामायादिगायत्रीं प्रजपेद् बगलाह्वयाम् ॥
इष्टसिद्धिर्भवेत्तस्य शिवस्य वचनं यथा ।
मन्त्रराजस्य गायत्रीं पादाद्यवयवां तथा ॥
गायत्रीं च विना मन्त्रो न सिध्यति कलौ युगे ।
पुरश्चरणकाले तु गायत्रीं प्रजपेन्नरः ॥

मूलविद्यादशांशं च मन्त्रसिद्धिर्भवेद् ध्रुवम् ।
त्यक्त्वा तां मन्त्रगायत्रीं यो जपेन्मन्त्रमादरात् ।।
कोटिकोटिजपेनाऽपि तस्य सिद्धिर्न जायते ।।
जपसंख्या यत्र नोक्ता लक्षमेकं कुमारक ।।
दिनसंख्या यत्र नोक्ता पक्षमेकं न संशयः ।।
गायत्री बगलानाम्नी बगलायाश्च जीवनम् ।
मन्त्रादौ चाथ मन्त्रान्ते जपेद् ध्यानपुरःसरम् ।।

इति सांख्यायने द्वादशः पटलः

—:०:—

## १२ अङ्गमन्त्रोद्धाराः

### चतुरक्षरो मन्त्रः

वेदादि विलिखेत्पूर्वं पाशबीजमतः परम् ।
स्थिरमायां समुच्चार्य अङ्कुशं बीजमेव च ।।
तुर्याक्षरी च बगला सर्वमन्त्रोत्तमोत्तमः ।

अष्टाक्षरः—

वेदादिशक्तिमादौ च पाशबीजमनन्तरम् ।।
स्तब्धमायां समुच्चार्य अङ्कुशं बीजमेव च ।
बगला च समायुक्तो मन्त्रस्याष्टाक्षरो मतः ।।

### हृदयम्

पाशबीजं समुच्चार्य स्तब्धमायां समुच्चरेत् ।
अङ्कुशं बीजमुच्चार्य भूवाराहं तथोच्चरेत् ।।
वाराहीं वाग्भवं चैव कामराजमतः परम् ।
श्रीबीजं भुवनेशीं च बगलामुखि चोच्चरेत् ।।
आवेशयद्वयं चोक्त्वा पाशबीजं तथोच्चरेत् ।
स्तब्धमायां तथोच्चार्य अङ्कुशं बीजमुच्चरेत् ।।

ब्रह्मास्त्ररूपिणीत्युक्त्वा एहि युग्मं समुच्चरेत् ।
पाशबीजं समुच्चार्य स्तब्धमायां ततो वदेत् ॥
अङ्कुशं बीजमुच्चार्य मम शब्दं ततो वदेत् ।
हृदये पदमुच्चार्य चिरं तिष्ठद्वयं भवेत् ।
हुं फट् स्वाहा समायुक्तो बगलाहृदयं मनुः ॥

## पञ्चास्त्रोद्धारः

### १ वडवामुखी

तारं च विलिखेत्पूर्वं स्तब्धमायां ततः परम् ।
वाराहीं शक्तिवाराहीं बगलामुखि चोच्चरेत् ॥
ह्लां ह्लीं ह्लूं च तथोच्चार्य सर्वदुष्टा पदं वदेत् ।
नकारं दीर्घसंयुक्तं विन्दुना भूषितं तथा ॥
ह्लैं ह्लौं ह्लः तथोच्चार्य वाचं मुखं पदं वदेत् ।
स्तम्भयद्वितयं चोक्त्वा ह्लः ह्लौं ह्लैं च तथोच्चरेत् ॥
जिह्वां कीलय चोच्चार्य ह्लूं ह्लीं ह्लां च ततः परम् ।
बुद्धिं विनाशयोच्चार्य शक्तिवाराहमुच्चरेत् ॥
बाराहं बगलाबीजं तारवर्मास्त्रसंयुतम् ।
इति प्रथमास्त्रम् ॥

### २ उल्कामुखी

तारं च स्थिरमायां च शक्तिवाराहमेव च ।
बगलामुखि पदं चोक्त्वा सर्वशब्दं समुच्चरेत् ॥
दुष्टानां पदमुच्चार्य पूर्वबीजत्रयं वदेत् ।
वाचं मुखं पदं चोक्त्वा पूर्वबीजत्रयं वदेत् ॥
स्तम्भयद्वितयं चोक्त्वा पूर्वबीजत्रयं वदेत् ।
जिह्वां कीलययुग्मं च पुनर्बीजत्रयं वदेत् ॥
बुद्धिं नाशययुग्मं च पुनर्बीजत्रयं वदेत् ।
वह्निजायासमायुक्तः उल्कामुख्या अयं मनुः ॥
इति द्वितीयास्त्रम् ।

### ३ जातवेदमुखी

तारं च स्तब्धमायां च प्रसादं च ततः परम् ।
पुनर्लिखेत् स्तब्धमायां प्रणवं च ततः परम् ॥
बगलामुखि शब्दान्ते सर्वदुष्टा पदं वदेत् ।
नकारं दीर्घसंयुक्तं बिन्दुना भूषितं तथा ।
बीजपञ्चकमुच्चार्य पञ्चबीजं तथोच्चरेत् ॥
बुद्धिं नाशययुग्मञ्च पञ्चबीजं तथोत्तरम् ।
जातवेदमुखीमन्त्रो जगदाश्चर्यकारकः ॥
इति तृतीयास्त्रम् ॥

### ४ ज्वालामुखी

तारं च स्तब्धमायां च वह्निबीजं च पञ्चकम् ।
प्रस्फुरद्द्वितयं चैव तद्बीजं च त्रयोदशम् ॥
बगलामुखि शब्दान्ते वदेत् बीजं त्रयोदशम् ।
सर्वशब्दं तथोच्चार्य दुष्टानां पदमुच्चरेत् ॥
बीजं त्रयोदशं चोक्त्वा वाचं मुखं पदं वदेत् ।
स्तम्भयद्वितयं चोक्त्वा पुनर्बीजं त्रयोदश ॥
जिह्वां कीलययुग्मं च पुनर्बीजं तथैव च ।
वह्निजायासमायुक्तो ज्वालामुख्या मनुस्त्वयम् ॥
इति चतुर्थास्त्रम् ॥

### ५ बृहद्भानुमुखी

मायास्तम्भनवाणं च आश्चर्यं च कलौ युगे ।
तारं ह्लां ह्लीं तथोच्चार्य ह्लूं ह्लैं ह्लौं च ततः परम् ॥
ह्लः इत्युच्चरेत्पुत्र ह्लां ह्लीं ह्लूं च ततः परम् ।
ह्लैं ह्लौं ह्लश्च तथोच्चार्य तदग्रे बगलामुखि ॥
आद्यबीजं मनोः संख्या उद्धरेत्पुनरादरात् ।
सर्वशब्दं तथोचार्य दुष्टानां पदमुचरेत् ॥

वाचं मुखं पदं चोक्त्वा स्तम्भयद्वयमुच्चरेत् ।
जिह्वां कीलय उच्चार्य पूर्ववद् बीजमुच्चरेत् ॥
बुद्धिं नाशय उच्चार्य पूर्ववद् बीजमुच्चरेत् ।
वह्निजायासमायुक्तो बृहद्भानुमुखीमनुः ॥
इति पञ्चमास्त्रम् ॥

## २ अथ शताक्षरोद्धारः

स्तब्धमायां च वाग्बीजमायामन्मथमेव च ।
श्रीबीजं शक्तिवाराहं शक्तिबीजं स्वमेव च ॥
बगलामुखि चोच्चार्य सर्वशब्दं ततो वदेत् ।
दुष्टानां पदमुच्चार्य वाचं मुखं पदं वदेत् ॥
स्तम्भयद्वयमुच्चार्य प्रस्फुरद्द्वयमुच्चरेत् ।
विकटाङ्गी पदं चोक्त्वा घोररूपी पदं वदेत् ॥
जिह्वां कीलय उच्चार्यं महच्छब्दं ततो वदेत् ।
पश्चाद् भ्रमकरी चैव बुद्धिं नाशय उच्चरेत् ॥
विराडपि पदं चोक्त्वा सर्वप्रज्ञामयोच्चरेत् ।
प्रज्ञां नाशय उच्चार्य उन्मादं कुरुयुग्मकम् ॥
मनोपहारिणी चोक्त्वा स्तब्धमायां समुच्चरेत् ।
शक्तिवाराहबीजं च रमाबीजं ततः परम् ॥
कामराजं च हृल्लेखां वाग्भवं तदनन्तरम् ।
स्तब्धमायां तथोच्चार्यं वह्निजायासमन्वितम् ॥
शताक्षरमहामन्त्रं बगलायाः सुपावनम् ।

बगलापंचाक्षरः

प्रणवं पूर्वमुद्धृत्य स्थिरमायां वधूं ततः ।
हुं फट् संयोजयेत् पश्चात् पंचार्णबगलामनुः ॥
( बृहत्पद्धतौ मायायुक्तं चेति विशेषः । )

त्र्यक्षरः

तारेण सम्पुटं कृत्वा स्थिरमायां जपेत्सुधीः ।
सर्वशास्त्रेषु पाण्डित्यं जायते अचिरात्प्रिये ॥

एकादशाक्षरः

प्रणवं स्थिरमायां च कामशक्तियुतां क्रमात् ।
बगलामुखि संयोज्य ठद्वयेन युतां स्मरेत् ॥

ॐकारैकठरहितो वा नवाक्षरः ।

## ३ श्रीबगलामालामन्त्रः

ॐ नमो भगवति ॐ नमो वीरप्रतापविजयभगवति बगलामुखि मम सर्वनिन्दकानां सर्वदुष्टानां वाचं मुखं पदं स्तम्भय स्तम्भय ब्राह्मीं मुद्रय मुद्रय बुद्धिं विनाशय विनाशय अपरबुद्धिं कुरु कुरु आत्मविरोधिनां शत्रूणां शिरो–ललाट–मुख–नेत्र–कर्ण–नासिकोरु–पद–अणुरेणु–दन्तोष्ठ–जिह्वा–तुल–गुह्य–गुद–कटि–जानु–सर्वाङ्गेषु केशादिपादपर्यन्तं पादादि-केशपर्यन्तं स्तम्भय स्तम्भय खें खीं मारय मारय, परमन्त्र–परयन्त्र–परतन्त्राणि छेदय छेदय, आत्ममन्त्रयन्त्रतन्त्राणि रक्ष रक्ष, ग्रहं निवारय निवारय, व्याधिं विनाशय विनाशय, दुःखं हर हर दारिद्र्यं निवारय निवारय सर्वमन्त्रस्वरूपिणि, सर्वतन्त्रस्वरूपिणि, सर्वशिल्पप्रयोग-स्वरूपिणि, सर्वतत्त्वस्वरूपिणि, दुष्टग्रह–भूतग्रह–आकाशग्रह,–पाषाणग्रह–सर्वचाण्डालग्रह–यक्षकिन्नरकिम्पुरुषग्रह–भूतप्रेतपिशाचानां शाकिनी–डाकिनीग्रहाणां पूर्वदिशां बन्धय बन्धय, वार्तालि मां रक्ष रक्ष, दक्षिणदिशां बन्धय बन्धय, किरातवार्तालि मां रक्ष रक्ष, पश्चिमदिशां बन्धय बन्धय, स्वप्नवार्तालि मां रक्ष रक्ष, उत्तरदिशां बन्धय बन्धय, कालि मां रक्ष रक्ष, ऊर्ध्वदिशं बन्धय बन्धय, उग्रकालि मां रक्ष रक्ष, पातालदिशं बन्धय बन्धय, बगलापरमेश्वरि मां रक्ष रक्ष, सकलरोगान् विनाशय विनाशय, सर्वशत्रुपलायनाय पञ्चयोजनमध्ये राजजनस्त्रीवशतां कुरु कुरु, शत्रून् दह दह, पच पच, स्तम्भय स्तम्भय, मोहय मोहय, आकर्षय आकर्षय, मम शत्रून् उच्चाटय उच्चाटय, हुं फट् स्वाहा ।

इति बगलामालामन्त्रः ।

### ४ बगलाशावर मन्त्रः

ॐ मलयाचल बगला भगवती महाक्रूरी महाकराली राजमुखबन्धनं ग्राममुखबन्धनं ग्रामपुरुषबन्धनं कालमुखबन्धनं चौरमुखबन्धनं व्याघ्रमुखबन्धनं सर्वदुष्टग्रहबन्धनं सर्वजनबन्धनं वशीकुरु हुं फट् स्वाहा।

इति अङ्गमन्त्रोद्धारः।

## १३ मन्त्रोत्कीलनम्

ॐ अस्य श्रीबगलामुखी—उत्कीलनमन्त्रस्य सदाशिव ऋषिः तस्मै नमः शिरसि, जगत्सृष्टिसाधनीभूतबृहद्गायत्रीछन्दसे नमो मुखे, श्रीब्रह्मास्त्रोत्कीलनायै क्लीं ब्लूं ग्लौं ह्लीं ग्लौं ब्लूं क्लीं सं सं सं सूच्यग्रेणोत्कीलनसूचीमुख्यै देवतायै नमो हृदये, ॐ ऐं क्लीं ह्लीं ह्लीं ऐं अं बीजाय नमो गुह्ये, ॐ ह्लीं अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः त्रीन् मूलमुच्चार्य ॐ ऐं ह्लीं ह्लीं ह्लीं ऐं ओं ब्लीं सं सं सं रुद्रसूच्यग्रेण ब्रह्मग्रन्थीनुत्कीलय ॐ अं ह्लीं आं इं ब ईं ग उं ला ऊं मु ऋं खि ॠं स ऌं र्वं ॡं दु एं ष्टा ऐं नां ओं वा औं चं अं मु अः खं अः प अं दं औं स्त ओं म्भ ऐं य एं जि ॡं ह्वां ऌं वी ॠं ल ऋं ऊं बु उं द्धिं ईं वि इं ना आं श अं य ह्लीं ॐ क्षं ॐ स्वाहा।

ॐ ऐं क्लीं क्लीं ह्लीं क्लीं ऐं ओं ब्लीं सं सं सं रुद्रसूच्यग्रेण ब्रह्मग्रन्थिम् उत्कीलय उत्कीलय, ॐ ब्लूं ह्लौं लं ह्लीं ह्लां ॐ इति कीलकाय नमो, नाभौ हस्तं दत्वा उच्चरेत्। ॐ ह्लीं ह्लीं ह्सौं ॐ बगलामुखीमहामन्त्रे उत्कीलनार्थे जपे विनियोगाय नमः, इति सर्वाङ्गे व्यापकं कृत्वा शिरसि प्रणमेत्।

अथ करादिन्यासः। ॐ इं लं हंसः ह्लां सोहं लं ईं ॐ उत्कीलिन्यै नमः अङ्गुष्ठाभ्यां नमः, ॐ इं लं हंसः ह्लीं सोहं लं ईं ॐ महोत्कीलिन्यै नमः तर्जनीभ्यां नमः, ॐ इं लं हंसः ह्लूं सोहं लं ईं ॐ रुद्रसूच्या उत्कीलिन्यै नमः मध्यमाभ्यां नमः, ॐ इं लं हंसः ह्लैं सोहं लं ईं ॐ ब्रह्मग्रन्थि उत्कीलिन्यै नमः अनामिकाभ्यां नमः, ॐ इं लं हंसः ह्लौं

सोहं लं ईं ॐ योगिन्यै उत्कीलिन्यै नमः कनिष्ठिकाभ्यां नमः, ॐ इं लं हंसः ह्लः सोहं लं ईं ॐ सर्वोत्कीलिन्यै नमः करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादिन्यदासः ।

## ध्यानम्

"रुद्रसूचीमुखीं ध्याये सर्वाभरणभूषिताम् ।
वरदाऽभयसूच्यग्रनखदंष्ट्राभयानकाम् ॥
चतुर्भुजां त्रिनयनां वरदाऽभयकुण्डिकाम् ।
शूलाग्रान् खरतीक्ष्णाग्रान् कुर्वतीं ग्रथिताक्षरान् ॥
वर्णमालाविभूषाङ्गीं सर्ववर्णात्मिकां शिवाम् ।
प्रोद्यश्वतां मनून् सर्वान् नानावर्णविजृम्भितान् ॥
विविच्य वरदे मन्त्रान् मालायां कुसुमानिव ।
प्रवेशय मनुं देहि प्रकटीकुरु सर्वदा ॥
अभयं टङ्कवरदं पाशं पुस्तकमङ्कुशम् ।
शूलं सूच्यग्रमादाय देहि मे, प्रणमामि त्वाम् ॥"
इति ध्यात्वा जगद्धात्रीं जगदानन्दरूपिणीम् ।
ग्रन्थित्रयविशेषज्ञं शिवं ध्यात्वा जपेन्मनुम् ॥

ॐ इं लं हंसः ह्लीं उत्कीलिन्यै नमः, ॐ ईं लं हंसः ॐ वः ॐ ह्लीं बगलामुखि इत्यादि मूलं ह्लीं लं ईं वः उत्कीलिन्यै स्वाहा इत्येकवारं न जपेत् । ॐ ईं हंसः रं सं रं ह्लः ॐ ह्लीं बगलामुखि इत्यादि मूलं ॐ ईं लं हंसः हं ॐ वः उत्कीलिन्यै स्वाहा इति सकृज्जपेत् । एवं वारत्रयं जप्त्वा पुनः अकारादि क्षकारान्तं उच्चार्य ॐ ईं हंसः ॐ वः मूलं ॐ वः सः हं लं इं लं क्षं लं हं क्षकारमारभ्य अकारान्तमुच्चार्य ॐ वः ह्लां इं लं हंसः मूलं सोहं लं इं ॐ वः उत्कीलिन्यै स्वाहा सकृदुच्चार्य– अथ जागरणम् ॐ ईं लं हंसः सोहं ॐ वः वः वः ॐ हंसः सोहं लं ईं ॐ मम हृदये चिरं तिष्ठ तिष्ठ स्वाहा हृदये हस्तं दत्वा त्रिवारं जपेत् । पुनः ॐ ह्लीं हंसः मूलं ॐ अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः हंसः ह्लीं ॐ इति सकृज्जपेत् जीवनम् ।

## अथ मन्त्रशुद्धिः

अकारादि क्षकारान्तं ॐ ह्लीं हंसः सोहं ह्लीं सः सोहं मूलं क्षकारादि-अकारान्तं मम विद्याशुद्धिं कुरु स्वाहा। (इति विद्या शुद्धिः) ॐ ह्रूं ह्रूं ह्रूं क्लीं क्लीं क्लीं ऐं ऐं ऐं ह्लीं ह्लीं ह्लीं क्रीं क्रीं क्रीं रुद्रसूच्यग्रेण उत्कीलय उत्कीलय अं १५ बगलाशापोद्धारं कुरु कुरु मूलं अं १५ क्रीं क्रीं क्रीं ह्लीं ह्लीं ह्लीं ऐं ऐं ऐं क्लीं क्लीं क्लीं ह्रूं ह्रूं ह्रूं ॐ रुद्रसूच्यग्रेण बगलाशापविमोक्षं कुरु कुरु स्वाहा। (इति शापमोचनम्) पुनः मूलं अष्टवारं जप्त्वा ब्राह्मीः मुद्राः प्रदर्श्य पंच मुद्राभिः प्रणमेत्।

—::०::—

## अथ अन्य प्रकारोत्कीलनादिः

उत्कीलनम्—

मृद्बीजं च मनोरादौ वनान्ते प्रणवं जपेत्।
मन्त्रोऽयं बगलामुख्या मन्त्रोत्कीलनसिद्धिदः॥

संजीवनम्—

मृत्स्नाबीजं जपेद्देवि प्रणवं च वनाञ्चले।
बगलामन्त्रराजस्य भवेत् सञ्जीवनं परम्॥

शापोद्धारः—

तारं मृत्स्नां च बगले रुद्रशापं विमोचय।
तारं मृद्वनं देवि विद्धेयं शापहारिणी॥

सम्पुटीकरणम्—

रसनां मृत्तिकाबीजं मनोरन्ते पठेत्सुधीः।
श्रीदेव्या बगलामुख्या मन्त्रः सम्पुटिकाभिधः॥

इति देवीरहस्योक्तप्रकारः

—:०:—

## १४ जपप्रकारवर्णनम् । उक्तं च कुण्डिकातन्त्रे

### श्री पार्वत्युवाच

भगवन् सर्वदेवेश लोकानां हितकारक ।
चतुर्वर्गप्रदं देव चैतन्यं मे प्रकाशय ॥

### श्री शंकर उवाच

शृणु देवि प्रवक्ष्यामि चैतन्यं परमाद्भुतम् ।
रहस्यं परमं पुण्यं गोपनीयं त्वया पुनः ॥
चिच्छक्त्या ध्वनितं देवि परिणामक्रमेण तु ।
वर्णभावं समात्यज्य निर्मलं विमलात्मकम् ॥
षट्चक्रं च तथा भित्वा शब्दरूपं सनातनम् ।
नादविन्दुसमायुक्तं चैतन्यं परिकीर्तितम् ॥
अथवाऽन्यप्रकारेण श्रूयतां पद्मलोचने ।
विना येन न सिध्येत्तु जपपूजादि किञ्चन ॥
अनाहतस्य मध्ये तु ग्रथितं वर्णमुत्तमम् ।
सुषुम्नावर्त्मना देवि कण्ठदेशं विनिर्गतम् ॥
चैतन्यं च महादेवि योगिनां योगरूपकम् ।
सहस्रारे वर्णरूपं परिणामक्रमेण तु ॥
कर्णिकामध्यसंस्थे तु नादविन्दुसमन्वितम् ।
एवं संचिन्तयेद्देवीं चैतन्यं च पुनः पुनः ॥
मन्त्राक्षराणि चिच्छक्तौ ग्रथितानि महेश्वरि ।
तानि संचिन्तयेद्देवि सहस्रारदले तथा ॥
चैतन्यमन्त्ररूपा च चेतन्यानन्ददायिनी ।
चैतन्यनादशक्तिश्च चैतन्यवर्णरूपकम् ॥
मणिपूरे सदा चिन्त्यं मन्त्राणां प्राणरूपकम् ।
अथवान्यऽप्रकारेण श्रूयतां वरवर्णिनि ॥

कामवीजं रमावीजं शक्तिवीजं सुरेश्वरि ।
एतानि पूर्वमुच्चार्य मातृकास्त दनन्तरम् ।।
पुटितं मूलमन्त्रं च शतमष्टोत्तरं जपेत् ।
कोटिकोटिगुणं चैव लभते नात्र संशयः ।।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
न सिध्यति वरारोहे कल्पकोटिशतैरपि ।।
ईं बीजेनैव पुटितं मूलमन्त्रं जपेद्यदि ।
तदेव मन्त्रचैतन्यं भवत्येव सुनिश्चितम् ।।

—:०:—

सरस्वतीतन्त्रे प्रथमपटले ।

### श्री ईश्वर उवाच

मन्त्रार्थं परमेशानि सावधानावऽधारय ।
मूलाधारे मूलविद्यां भावयेदिष्टदेवताम् ।।
शुद्धस्फटिकसंकाशां भावयेत्परमेश्वरीम् ।
धारयेदक्षरश्रेणीमिष्टविद्यां सनातनीम् ।।
मुहूर्तार्धं विभाव्यैतां पश्चाद् ध्यानपरो भवेत् ।
ध्यानं कृत्वा महेशानि मनसा कमलेक्षणे ।।
स्वाधिष्ठानं ततो गत्वा भावयेदिष्टदेवताम् ।
वन्धूकारुणसंकाशां जवसिन्धुरसन्निभाम् ।।
विभाव्यअक्षरश्रेणीपद्ममध्यगतां पराम् ।
शुद्धस्फटिकसंकाशां शिरःपद्मोपरि स्थिताम् ।।
ततो जीवो महेशानि पक्षिणा सह पार्वति ।
हृत्पद्मं प्रययौ शीघ्रं नीरजाऽऽयतलोचने ।।
इष्टविद्यां महेशानि भावयेत्कमलोपरि ।
विभाव्यअक्षरश्रेणीं महामरकतप्रभाम् ।।

ततो जीवो वरारोहे विशुद्धं प्रययौ प्रिये ।
हृत्पद्मगहनं गत्वा पक्षिणा सह पार्वति ॥
इष्टविद्यां महेशानि आज्ञांशे परिचिन्तयेत् ।
पक्षिणा सह देवेशि खञ्जनाक्षि शुचिस्मिते ॥
इष्टविद्यां महेशानि साक्षाद् ब्रह्मस्वरूपिणी ।
विभाव्यअक्षरश्रेणीं हरिद्वर्णां वरानने ॥
आज्ञाचक्रे महेशानि षट्चक्रे ध्यानमाचरेत् ।
षट्चक्रे परमेशानि ध्यानं कृत्वा शुचिस्मिते ॥
ध्यानेन परमेशानि यद् रूपं समुपस्थितम् ।
तदेव परमेशानि मन्त्रार्थं विद्धि पार्वति ॥

'अनेन क्रमेण मन्त्रार्थं विद्यत्' । श्री बगलायाः
कुल्लुकामन्त्रस्तु मन्त्रराज एव ।

कुल्लुकाविषये उक्तम्

मातङ्गी बगला लक्ष्मी धूमोच्छिष्टा क्रमे शृणु ।
तारकूर्चनारसिंहैः पञ्चानां कुल्लुका मता (ॐ हूं क्ष्रौं)

शक्ति संगमे—

अज्ञात्वा कुल्लुकामेतां यो जपेदधमः प्रिये ।
तस्मात्सर्वप्रयत्नेन धारयेन्मूर्ध्नि कुल्लुकाम् ॥

सेतुः—

विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च ।
वैश्यानां चैव फट्कारो माया शूद्रस्य कथ्यते ॥
अजप्त्वा हृदि देवेशि यो वै मन्त्रं समुच्चरेत् ।
सर्वेषामेव मन्त्राणामधिकारो न तस्य हि ॥

बगलामहासेतुः 'स्त्रीं'

आदौ जप्त्वा महासेतुं जपेन्मन्त्रमनन्यधीः ।
धने धनेशतुल्योऽसौ वाण्यां वाणीश्वरो भवेत् ॥

वक्ष्यामि निर्वाणं शृणुष्वाऽवहिताऽनघे ।
प्रणवं पूर्वमुच्चार्य मातृकाद्यं समुद्धरेत् ॥
ततो मूलं महेशानि ततो वाग्भवमुद्धरेत् ।
मातृकास्तु समस्तास्तु पुनः प्रणवमुच्चरेत् ॥
एवं पुटितमूलं तु प्रजपेन्मणिपूरके ।
एवं निर्वाणं महेशानि यो न जानाति पामरः ॥
कल्पकोटिसहस्रेण तस्य सिद्धिर्न जायते ।

## मुखशोधनम्

अपरैकं प्रवक्ष्यामि वगलामुखशोधनम् ।
वाग्भवं भुवनेशीं च वाग्बीजं सुरवन्दिते ॥
मुखशोधनमात्रेण जिह्वाऽमृतमयी भवेत् ।
अन्यथा मुखविड्युक्ता जिह्वा भवति सर्वदा ॥
भक्षणैर्दूषिता जिह्वा मिथ्यावाक्येन दूषिता ।
कलहे दूषिता जिह्वा तत्कथं प्रजपेन्मनुम् ॥
देवो यदि जपेन्मन्त्रमकृत्वा मुखशोधनम् ।
पतनं तस्य देवेशि किं पुनर्मर्त्यवासिनाम् ॥
मायया पुटितो मन्त्रो जपतः सप्तधा पुनः ।
स प्राणो जायतेऽदेवि सर्वत्रा यं विधिः स्मृतः ॥
तथैवं दीपनं वक्ष्ये सर्वमन्त्रे च पार्वति ।
वेदादिपुटितं कृत्वा सप्तवारं जपेन्मनुम् ॥
दीननीयं समाख्याता सर्वत्र परमेश्वरि ।
वेदादिपुटितं कृत्वा प्रयत्नेन सुरेश्वरि ॥
दशधा प्रजपेन्मन्त्रं सूतकद्वयमुच्यते ।
अथोच्यते जपस्यात्र क्रमश्च परमाद्भुतः ॥
यं कृत्वा सिद्धसंघानामधिपो जायते नरः ।
नतिर्गुर्वादिनामादौ ततो मन्त्रशिखां भजेत् ॥

ततोऽपि मन्त्रचैतन्यं मन्त्रार्थभावना ततः ।
गुरुध्यानं शिरःपद्मे हृदीष्टध्यानमाहरन् ॥
कुल्लुकां च ततः सेतुं महासेतोरनन्तरम् ।
निर्वाणं च ततो देवीयोनिमुद्राविभावना ॥
अङ्गन्यासं प्राणायामं जिह्वाशोधनमेव च ।
प्राणयोगं दीपिनीं च अशौचभङ्गमेव च ॥
भ्रूमध्ये वा नसोरग्रे दृष्टिसेतुं जपं पुनः ।
सेतुमशौचभङ्गं च प्राणायाममिति क्रमः ॥
कुल्लुकां मूर्ध्नि संजप्य हृदि सेतुं विचिन्तयेत् ।
महासेतुं विशुद्धौ च कण्ठदेशे समुद्धरेत् ॥
मणिपूरे तु निर्वाणं महाकुण्डलिनीमधः ।
स्वाधिष्ठाने कामबीजं राकिणीमूर्ध्नि संस्थितम् ॥
विचिन्त्य विधिवद् देवीं मूलाधारान्तिकां शिवे ।
विशुद्धान्तं स्मरेद्देवीं विसतन्तुतनीयसीम् ॥
वेदिस्थानं हि जीवान्तं मूलमन्त्रावृतं मुहुः ।

इति जपविधिः ।

—:०:—

## १५ कूर्मचक्रविधानम्—

कूर्मस्थितिमविज्ञाय यो जपादिविधौ स्थितः ।
स नाप्नोति फलान्युक्तान्यन्यथा नाशमेति च ॥
तस्मात्कूर्मविभागं तु विज्ञाऽखिलमाचरेत् ।
स चतुर्धा ततो लोके तत्प्रकारान् शृणु प्रिये ॥
प्रथमस्तु परः कूर्मस्ततो देशगतस्तथा ।
ग्रामगो गृहगश्चेति चतुर्धा तद्व्यवस्थितिः ॥
देशं ग्रामं गृहं वस्तु नवधा विभजेत्ततः ।
प्रागादि पश्चिमान्तं तु कादिमान्तानि विन्यसेत् ॥

अक्षराणि समान्येव चत्वारि पर्योर्न्यसेत् ।
ईशे द्वयमथो मध्ये स्वरात् प्रागादि विन्यसेत् ॥
ईशान्ते द्विद्विशः पश्चात् नामाद्यर्णं यतो भवेत् ।
तन्मुखे पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः ॥
पुच्छमेकमथो मध्ये पृष्ठमेवं षडङ्गकम् ।
मुखे सर्वार्थसिद्धिः स्यात् करयोरल्पसिद्धिकृत् ॥
कुक्षोरू नित्यनैष्फल्यं पादयोः सर्वदुःखकृत् ।
पुच्छे मृत्युस्तु नियतः पृष्ठे सर्वार्थदायकम् ॥
तस्मात् तत्साधु विज्ञाय कुर्यात् सर्वं समीरितम् ।
व्यञ्जनं देशकूर्मे स्याद् गृहकूर्मे स्वरास्तथा ॥
ग्रामादिकूर्मे द्वितयं परकूर्मे न तत् त्रयम् ।
नित्यं पूर्वमुखो यस्मात् तेन तत्सिद्धिमीरिताः ॥
एवं कूर्मविभागस्ते कथितोऽयं चतुर्विधः ॥ इति

पुरश्चरणं कुर्वता साधकेन सिद्धिमपश्यता कूर्मचक्रसहायेन सिद्धि कर्तव्या । मन्त्रग्रहणराशिनक्षत्रादिचक्रमकडमादिविभागमृणिधनादि शोधनमपि गुरुमुखाज्जानीयात् । यद्यपि बगलामन्त्रे एष विचारो नास्ति सर्वदोषमुक्तत्वात् । उक्तं हि—

"बगलामन्त्रराजस्य सिद्धयादीन्नैव चिन्तयेत्"

उक्तं च मुण्डमालायाम्—

काली, तारा, महाविद्या षोडशी, भुवनेश्वरी ।
भैरवी, छिन्नमस्ता च, विद्या धूमावती, तथा ॥
बगलामुखी, सिद्धविद्या मातङ्गी च, तथा रमा ।
नात्र सिद्धयाद्यपेक्षाऽस्ति नक्षत्रादिविचारणा ॥
कालादिशोधनं नास्ति नच मित्रादिशोधनम् ।
सिद्धविद्यान्तरा नात्र चोङ्गसेवापरिश्रमः ॥ इति ।

तथाप्यत्र नियमसामान्यादलेखि ।

—:oo:—

## १६—अथ स्वप्नविज्ञानम्—

सिद्धिचिह्नानि प्रोक्तानि वासनाकथने मम ।
आनुकूल्यस्य चिह्नानि शृणु साधयतस्तदा ॥
स्वप्ने पोतेषु वनितावृन्दैः सम्मेलनं निशि ।
गजादिसौधशृङ्गेषु विहारो राजदर्शनम् ॥
गजानामङ्गनानां च दर्शनं नृत्यगीतयोः ।
उत्सवं च सुरामांसदर्शनं स्पर्शनं तथा ॥
निन्द्यानि शृणु देवेशि विघ्नानर्थकराणि च ।
कृष्णवर्णैर्भटैः स्वप्ने प्रहारस्तैललेपनम् ॥
मैथुनं परनारीभिरिन्द्रियच्यवनं तथा ।
राष्ट्रक्षोभो वह्निर्वायुर्जलभी बन्धुनाशनम् ॥
गुरावुपेक्षा सम्पत्तिवसूनां व्याधिनाशनम् ।
अन्यमन्त्रार्चनश्रद्धा विघ्नो नित्यार्चनेऽनिशम् ॥
नराणां यच्च दुष्पुण्यैः कृतैर्बहुषु जन्मसु ।
श्रद्धा स्थैर्यं सम्प्रदायसिद्धिर्नित्यार्चनं भवेत् ॥

सम्प्रदायार्थः —

समः सम्यक्त्वमुदितं प्राणोत्कर्षश्च दायतः ।
वस्तु तेनोत्तमा विद्या साऽस्तु नः सम्प्रदायतः ॥

—:००:—

## १७—मन्त्राणां दश संस्काराः—

अप्रबुद्धमन्त्रः संस्कारेण प्रबुद्धः क्रियते, अतः संस्काराणामुपयोगः । यथा हि—

मन्त्राणां दश संस्काराः कथ्यन्ते सिद्धिदायिनः ।
निर्दोषतां प्रयान्त्याशु ते मन्त्राः साधु संस्कृताः ॥
जननं जीवनं चैव ताडनं बोधनं तथा ।
अभिषेकोऽथ विमलीकरणाऽऽप्यायने पुनः ॥

तर्पणं दीपनं गुप्तिः दशैता मन्त्रसंस्क्रियाः ।
प्रणवान्तरितं कृत्वा मन्त्रवर्णं जपेत् सुधीः ॥
मन्त्रार्णसंख्यया तद्धि जीवनं सम्प्रचक्षते ।
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसि ॥
प्रत्येकं वायुवीजेन ताडनं तदुदाहृतम् ।
विलिख्य मन्त्रवर्णांस्तु प्रसूनैः करवीरजैः ॥
मन्त्राक्षरेण संख्यातैर्हन्यात् तद् बोधनं मतम् ।
स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया ॥
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद् विशुद्धये ।
संचिन्त्य मनसा मन्त्रं ज्योतिमन्त्रेण निर्दहेत् ॥
मन्त्रे मलत्रयं मन्त्री विमलीकरणं हि तत् ।
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ॥
वारिवीजेन विधिवत्; एतदाप्यायनं मतम् ।
तारव्योमाग्नियुक् ज्योतिमन्त्र एव उदाहृतः ॥
मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं मतम् ।
तारमायारमायोगो मनोर्दीपनमुच्यते ॥
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ।
संस्कारा दश मन्त्राणां सर्वतन्त्रेषु गोपिताः ॥
यत् कृत्वा सम्प्रदायेन मन्त्री वाञ्छितमश्नुते ।
रुद्धकीलितविच्छिन्नसुप्तशप्तादयोऽपि च ॥
मन्त्रदोषाः प्रणश्यन्ति संस्कारैरेभिरुत्तमैः ।

इति ।

—:०:—

## १८—मृत्युञ्जय-मन्त्रविधिः

तारः स्थिरा सकर्णेन्दुः भृगुः सर्गसमन्वितः ।
अक्षरात्मा निगदितः मन्त्रो मृत्युञ्जयाभिधः ॥

ॐ जूं सः क्वचिद् 'हौं जुं सः तथा हौं जूं सः' इत्यादि गुरुपरम्परया ज्ञातव्यम् । अस्य मृत्युञ्जयमहामन्त्रस्य कहोल ऋषिः दैवीगायत्री छन्दः मृत्युञ्जयो महादेवो देवता—इत्यादि विनियोगः । सां सीमित्यादि षडङ्गन्यासः ।

ध्यानम्

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तं स्थितम् ।
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ॥
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्वलम् ।
कान्त्या विश्वविमोहनं पशुपतिं मृत्युञ्जयं भावये ॥

इति तान्त्रिकमृत्युञ्जयः ।

ॐ भूर्भुवः स्वः ॐ जूं सः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । हौं ॐ जूं सः ॥

इति वैदिकः ।

हौं ॐ जुं सः ॐ भूर्भुवः स्वः त्र्यम्बकमित्यादि हौं ॐ जुं सः इति द्वितीयः । प्रत्येकेन बीजेन सार्धं प्रणवं संयोज्य चतुर्दश प्रणवात्मकं मृत्युञ्जयाख्यं महामन्त्रं दाक्षिणात्या आमनन्ति, तद् यथा—
ॐ हौं ॐ जूं ॐ सः ॐ भूः ॐ भुवः ॐ स्वः ॐ त्र्यम्बकमित्यादि ॐ स्वः ॐ भुवः ॐ भूः ॐ सः ॐ जूं ॐ हौं ॐ । इति

—:o:—

## १९—सिद्धमन्त्रप्रयोगः

अथान्यत्सम्प्रवक्ष्यामि सुलभं क्रौञ्चभेदन ।
महोत्पाते महाघोरे सङ्कटे वैरिसङ्कुले ॥
केवलं मूलमन्त्रेण प्रयोगं च समाचरेत् ।
स्वगृहे शुभनक्षत्रे घटिकां संग्रहेच्छुचिः ॥
साध्यनामायुतं चैव षट्त्रिंशद्वर्णाकं मनुम् ।
पङ्क्तित्रयं लिखेद् भित्तौ अर्कसंख्या पृथक् पृथक् ॥

तस्योपरि लिखेद् रेखा ऊर्ध्वाधः शूलसंयुताः ।
लिखित्वा साधकश्रेष्ठः प्राणान् संस्थाप्य यत्नतः ॥
पूजयेद् परया भक्त्या पीतद्रव्येण पुत्रक ।
सन्ध्याकाले वाऽर्धरात्रौ तत्र स्थित्वा जपेन्मनुम् ॥
स्तम्भयेत्सकलान् लोकान् किं पुनः क्षुद्रमानुषान् ।
अथान्यत्सम्प्रवक्ष्यामि माण्डूकाख्यं प्रयोगकम् ॥
यस्य श्रवणमात्रेण त्रैलोक्यं स्तम्भयेत् क्षणात् ।
भृगौ प्रभातसमये स्नात्वा सम्यग् विधानतः ॥
पीतद्रव्याणि संगृह्य नदीतीरे च साधकः ।
मण्डूकं च गृहीत्वा तु तत्रैव च प्रपूजयेत् ॥
तन्त्रोक्तविधिना वत्स पीतद्रव्येण भूर्जके ।
षट्कोणं च लिखेत्स्पष्टं मध्ये साध्यं च योजयेत् ॥
कोणषट्के लिखेन्मन्त्रं षट्त्रिंशदक्षरात्मकम् ।
तस्योपरि लिखेन्मन्त्रं गायत्रीं बगलाऽऽह्वयाम् ॥

ॐ बगलामुख्यै च विद्महे स्तम्भिन्यै च धीमहि तन्नो देवी प्रचोदयात् ।

शताक्षरमहामन्त्रं तस्योपरि च वेष्टयेत् ।
एवं लिखितमन्त्रस्य गुटिकां कारयेच्छुभाम् ॥
पीतसूत्रेण संवेष्टय मण्डूकस्यानने क्षिपेत् ।
पीतोपचारैः सम्पूज्य कलशे निःक्षिपेत्ततः ॥
आच्छाद्य पूर्णपात्रेण स्थापयेद्देवतालये ।
प्रत्यहं पूजयेन् मन्त्रं शतं वाथ सहस्रकम् ॥
जप्त्वा मनोरथान् सर्वान् पूरयेद् बगलामुखी ।

इति साङ्ख्यायने षट्त्रिंशः पटलः ।

पाण्डवी चेटिकाऽपि बगलावत्साध्यते, तदुक्तं मेरुतन्त्रेऽष्टादशे प्रकाशे—ॐ पाण्डवीबगले ततश्च बगलामुखि शत्रोः पदं स्तम्भय द्वि क्लीं ह्लीं भुवंचरे वदेत् । स्फीं स्वाहेति त्रिंशार्णो मन्त्रः ।

ध्यानम्

पीताम्बरां पीतवर्णां पीतगन्धानुलेपनाम् ।
प्रेतासनां पीतवर्णां विचित्रां पाण्डवीं भजे ॥

—:०:—

अयुतत्रितयं जप्त्वा कुसुम्भकुसुमैर्हुनेत् ।
एवं कृत्वा पुरश्चर्यां पश्चात्साधनमाचरेत् ॥
वत्सरादौ प्रतिपदि शुक्रवारे जपेन्निशि ।
अयुतं, तद्दशांशेन कुसुम्भकुसुमैर्हुनेत् ॥
प्रसन्ना जपतो देवी वस्त्रमेकं ददाति च ।
वैरिणोद्वेगतो बद्धं गतिस्तम्भः प्रजायते ॥ इति

अथ वल्लीसिद्धिः

अथवा मुक्तकेशस्तु चितायां परमेश्वरि ।
बगलां पूजयेद् यत्नादुपचारैर्यथोचितैः ॥
मन्त्रः— 'ॐ नमो बगले ह्लीं स्वाहा ।
अष्टोत्तरसहस्रं तु जपेदनन्यमानसः ॥
ततो देवि समानीय गोधिकां गृहसम्भवाम् ।
पूजयेत्तां प्रयत्नेन पुनर्जापं समाचरेत् ॥
ततः प्रभृति देवेशि वल्लिकाशब्दविद् भवेत् ।
अतीतानागतां वार्तां लीलया वक्ति सर्वदा ॥

अथ वश्यम्--

कृष्णवर्णाया वेश्याया आगारं प्रज्वलितं दृष्ट्वा ततोऽग्निमानीय अर्धरात्रौ कज्जलं कुर्वन्निमं मन्त्रं पठेत्, अष्टोत्तरशतं जपेत् । तेनाक्ते नयने दृष्ट्वा तत्कार्यसिद्धिः—

"ॐ बगलामुखि सर्वस्त्रीहृदयं मम वश्यं कुरु ऐं ह्लीं स्वाहा ।"

अथ स्वप्नविद्या—

शनौ भौमे वा पीताचारेण सौभाग्यार्चनं विधाय अष्टोत्तरशतं विद्याजपं कुर्यात् तेन शुभाऽशुभं रात्रौ वदति—

"ॐ ह्लैं ह्लूं वाग्वादिनि सत्यं सत्यं ब्रूहि वद वद बगलामुखि ह्लैं ह्लूं नमः स्वाहा।"

## बगलादीपदानविधिः—

मेरुतन्त्रे

अथातः सम्प्रवक्ष्यामि बगलादीपमुत्तमम्।
कृतेन येन विघ्नौघो विलयं याति मन्त्रिणः॥
शुद्धानि खलु बीजानि पक्षतुं मुद्गरेण वा।
एकीकृत्य विधातव्यो दीपः सुस्निग्धशोभनः॥
षट्त्रिंशत्तन्तुभिः कार्या दृढा वर्तिः सुरञ्जिता।
गव्यमाज्यं च कौसुम्भं तैलं वा दीपकर्मणि॥
एतान्यानीय पूर्वं तु ततो दीपं प्रदापयेत्।
हरिद्रया रक्तवस्त्रं परिधाय शुचिः क्षमी॥
पीतासनोपविष्टश्च पीतमाल्यानुलेपनः।
उत्तराभिमुखो भूत्वा हरिद्रालिप्तभूतले॥
त्रिकोणं कारयित्वा तु दीपं संस्थाप्य यत्नतः।
घृतमापूर्य वर्तिं च दीपं प्रज्ज्वालयेत्सुधीः॥
मूलमन्त्रं समुच्चार्य चेति दीपं ततो वदेत्।
संकल्पन्यासपूर्वं तु जपेदष्टोत्तरं शतम्॥
एवं रात्रोपकुर्वाणो मासेनैकेन साधकः।
असाध्यान् साधयेत् कामान् वशयेदात्मनो रिपून्॥
क्षोभयेत् स्तम्भयेच्चापि द्वेषयेत् प्रक्षिपेदपि।

—:०:—

२०—यन्त्रसंस्कारविधिः—

वामकेश्वरतन्त्रे—

भैरव्युवाच

चक्रं चेदं महादेव त्वत्प्रसादान् मया श्रुतम् ।
इदानीं श्रोतुमिच्छामि प्रतिष्ठाकर्मनिर्णयम् ॥

ईश्वर उवाच

शृणु देवि महाभागे जगत्कारिणि केलनि ।
तस्योद्यापनकर्माङ्गं सर्वकर्मविनिर्णयम् ॥
स्नात्वा संकल्पयेन् मन्त्री गुरोर्वचनमाचरेत् ।
पञ्चगव्यं ततः कृत्वा शिवमन्त्रेण मन्त्रितम् ॥
(पंचाक्षरेण, हौं वा)
तत्र चक्रं क्षिपेन् मन्त्री प्रणवेन समाकुलम् ।
तदुद्धृत्य ततश्चक्रं स्थापयेत् स्व पात्रके ॥
पञ्चामृतेन दुग्धेन शीतलेन जलेन वा ।
चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमेन च ॥
पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् ।
ततो धूपान्तरैः कुर्यात् पञ्चामृतविधिं ततः ।
हाटकैः कलशैर्देवीमष्टभिर्वारिपूरितैः ॥
कषायजलसम्पन्नैः कारयेत् स्नानमुत्तमम् ।
स्नानं समाप्य तां देवीं स्थापयेत् स्वर्णपात्रके ॥
"यन्त्रराजाय विद्महे महायन्त्राय धीमहि ।
तन्नो यन्त्रं प्रचोदयात् ।"
स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रितम् ।
अष्टोत्तरशतं देवि देवताभावसिद्धये ॥
आत्मशुद्धिं ततः कृत्वा षडङ्गैर्देवतां यजेत् ।
तत्रावाह्य महादेवीं जीवन्यासं च कारयेत् ॥

**जीवन्यासमन्त्रः शारदायाम्**—

प्राणप्रतिष्ठा मन्त्रस्य विधानमभिधीयते ।
येन प्रजपिता मन्त्राः प्राणवन्तो भवन्ति ते ।।
पाशाङ्कुशयुता शक्तिर्वाणविन्दुविभूषिता ।
याद्याः सप्त सकारान्ताः व्योमसद्येन्दुसंयुतम् ।।
तदन्ते हंसमन्त्रः स्यात् ततोऽमुष्याः पदं वदेत् ।
'प्राणा इह' वदेत् पश्चात् 'इह प्राणास्ततः' परम् ।।
'अमुष्या जीव इह' स्थितिस्ततोऽमुष्याः पदं वदेत् ।
सर्वेन्द्रियाणि अमुष्या वाङ् मनश्चक्षुरन्ततः ।।
श्रोत्रघ्राणपदे प्राणा इहाऽऽगत्य सुखं चिरम् ।
तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः ।।

( अमुष्याः स्थाने मन्त्रदेवतानाम लिखेत् । ) ततः प्राणशक्तिं ध्यात्वा उपचारैः षोडशभिः महामुद्राभिः सदाफलताम्बूलैः नैवेद्यनिकरैः देवीं तत्र समर्चयेत् ।

पट्टसूत्रादिकं दद्यात् वस्त्राऽलङ्कारमेव च ।
मुकुटं चामरं घण्टां यथायोग्यं महेश्वरि ।।
सर्वमेतत् प्रयत्नेन दद्यादात्महिते रतः ।
ततो जपेत् सहस्रं च सकलेप्सितसिद्धये ।।
बलिदानं ततः कुर्यात् प्रणमेच्चक्रराजकम् ।

**बलिदानक्रमः समयाचारतन्त्रे :**—

सर्वासां देवतानां च बलिदानं शृणुष्व मे ।
येन कृत्वाऽऽशु लभते यथोक्तं फलमुत्तमम् ।।
नित्यं तु भोजने काले मूलमन्त्रेण साधकः ।
कारयेद् बलिदानं च भोजनात् प्रथमं प्रिये ।।
ततश्चानन्तरं कुर्याद् भोजनं स्थिरमानसः ।
बलिं समुद्धरेद् यत्नादेकान्ते स्थापयेत्तदा ।।
स्थापयित्वा बलिं तत्र विहरेच्च यथासुखम् ।

( इति नित्यबलिः, एवमेव रात्रौ कार्यम् तदनन्तरं किंचिज्जपादिकमनुष्ठेयम् ।)

बलिश्च द्विविधो ज्ञेयः सात्त्विको राजसस्तथा ।
सात्त्विको बलिराख्यातो मांसरक्तविवर्जितः ॥
राजसो मांसरक्तादियुक्तः कार्यो विधानतः ।
साधकास्त्रिविधाः प्रोक्ताः सात्त्विका राजसास्तथा ॥
तामसाश्च तथा देवि, तेषां वक्ष्यामि लक्षणम् ।
सात्त्विकैः सात्त्विको युक्तो लक्षणैश्चैव सुन्दरि ॥
सात्त्विकं बलिदानादि नित्यं कुर्यात् प्रयत्नतः ।
राजसो राजसगुणैर्युक्तः सत्यं वरानने ॥
बलिदानं राजसं तेषां तामसानां तु न किंचन ।

श्रद्धादिविरहितं नाममात्रमेव भवति । पशुबलिदानं यथाधिकारं कार्यम् । क्वचिद् ब्राह्मणानां पशुबलिदानं, क्वचिच्च निषेधः ।

"क्षौद्रं वृषलजातीनां सर्वेषां पशवो यथा"

वैकल्पिकत्वाद् ब्राह्मणवर्जमेवाऽवगन्तव्यम् । एतद्विशेषविवरणं ताराकर्पूरप्रकाशिकायाम् ।

**श्रीबगलामुख्या बलिमन्त्रः—**

"ॐ ऐं ह्रीं क्लीं श्रीं ह्रूं ह्लीं बगलामुखि सर्वशत्रुस्तम्भिनि सर्वराजवशङ्करि एष ते बलिः, गृह्ण गृह्ण ममाभीष्टं कुरु कुरु हुं फट् स्वाहा ।"

पुनश्च वटुकयोगिनीक्षेत्रपालगणेशानां च बलिं समर्पयेत्, शक्तश्चेद् दिग्पालबलिं च कुर्यात् तत्तन्मन्त्रैरिति संक्षेपः । तदनन्तरमष्टोतरशतं हुत्वा सम्पाताज्यं विनिःक्षिपेत् ।

होमकर्मण्यशक्तश्चेद् द्विगुणं जपमाचरेत् ।
धेनुमेकां समानीय स्वर्णशृङ्गाद्यलङ्कृताम् ।
गुरवे दक्षिणां दद्यात् ततो देव्या विसर्जनम् ।

**अथ प्रयोग :**—कृतनित्यक्रियः स्वस्तिवाचनपूर्वकं संकल्पं कुर्यात् ॐ अद्येत्यादि अमुकेत्यादि अमुकदेव्याः पूजनार्थम् अमुकमन्त्रसंस्कारम करिष्ये इति संकल्प्य पंचगव्यमानीय 'हौं'' इति मन्त्रेणाऽष्टोत्तरश मभिमन्त्रयेत् । पूर्ववत् शोधनं कृत्वा स्नापयेत् । तत्र क्रमः—प्रथमं क्षीरे ततो जलेन स्नापयित्वा धूपं दद्यात्, एवं दध्ना घृतेन मधुना शर्करया च ततोऽष्टभिः कलशैः कुङ्कुमरोचनामिश्रितैस्तोयैः स्नापयेत्, सर्वत्र स्ना मूलमन्त्रेण । ततो यन्त्रमुत्तोल्य कुशाग्रेण यन्त्रं स्पृष्ट्वा 'यन्त्रराजायेति गायत्र्या अष्टोत्तरशतमभिमन्त्र्य प्राणप्रतिष्ठां कुर्यात् । ॐ अस्य श्रीप्राण प्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छन्दां चैतन्यं देवता प्राणप्रतिष्ठायां विनियोगः । प्राणशक्तिं ध्यायेत् ।

**ध्यानम्**—

रक्ताब्धिपोतारुणपद्मसंस्थां पाशाङ्कुशाविक्षुधनुश्च बाणान् ।
शूलं कृपाणं दधतीं कराब्जै रक्तां त्रिनेत्रां प्रणमामि देवीम् ।।

इति ध्यात्वा—आं ह्रीं क्रौं यं रं लं वं शं षं सं हौं हसः, अमुक देवतायाः प्राणा इह प्राणाः—एवं आमित्यादि पूर्वोक्तत्रयोदशवर्णा पठित्वा अमुकदेवताया जीव इह स्थितः, पुनरपि आमित्यादि पूर्वोक्तत्रयोद वर्णान् पठित्वा अमुकदेवतायाः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राण प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहेति प्राणान् प्रतिष्ठाप्य प्रकृत देवतामावाह्य षोडशोपचारादिना सम्पूज्य षडङ्गेन संपूजयेत् । तत पट्टसूत्रादिकं दत्त्वा अष्टोत्तरसहस्रं जपेत् । शक्तिश्चेद् बलिं दद्यात् ततोऽष्टोत्तरशतं होमं कृत्वा प्रत्याहुतिसम्पातं दद्यात् । होमार्थेऽसम द्विगुणं जपं कुर्यात् ।

इति यन्त्रसंस्कारविधिः ।

**उक्तं सांख्यायने**—

पूजायन्त्रक्रमश्चैव एवमेव कुमारक ।
शालग्रामशिलायां च वह्निमण्डलमध्यगे ।।

कन्यायां वाऽथवा पुत्र पूजयेद् बगलामुखीम् ।
उत्तमा युवतीपूजा मध्यमा वह्निमण्डले ।।
अधमा च शिलापूजा क्रम एवं कुमारक ।

**पीठस्थापने विशेषः**—रुद्रयामले

पीठस्य स्थापने देवि यतीनामधिकारिता ।।
सर्वज्ञोऽपि गृही देवि नाचरेत् पीठस्थापनम् ।

**पूरश्चर्यार्णवे—**

दक्षसंस्थापितं यन्त्रं तथा पुण्यात्मनां मतम् ।
सान्निध्यं सर्वदेवानामवश्यं मन्त्रतो भवेत् ।।
दक्षो यतिः शुचिर्दक्ष इति प्रमाणात् । (इति)

—:०:—

**२१–षोडशोपचारमन्त्राः—**

प्रसीद जगतां मातः संसाराऽर्णवतारिणि ।
मया निवेदितं भक्त्या आसनं सफलं कुरु ।।१।।

**आसनपरिमाणम्—**

चतुरङ्गुलविस्तारं रौप्यनिर्माणपीठकम् ।
अलङ्कारं यथायोग्यं पुरुषस्तु निवेदयेत् ।।२।।
मूलप्रकृतिरूपेण सूयते सचराचरम् ।
पूजामहं विधास्यामि स्वागतं ते महेश्वरि ।।३।।
सुगन्धि परमामोदं परं वागीश्वरेश्वरि ।
पाद्यमेतन् मया दत्तं प्रसीद भुवनेश्वरि ।।४।।
दूर्वातण्डुलमिश्रं च कर्पूराऽगुरुपूरितम् ।
अर्घ्यं दत्तमिदं गृह्ण मत्तस्त्रिभुवनार्ऽचिते ।।५।।
आपो नारायणः साक्षात् अप्सु सर्वं चराचरम् ।
निवेदयामि ते देवि अद्भिराचमनीयकम् ।।६।।

वाजिमेधफलाऽवाप्त्यै मया दत्तं वरानने ।
मधुपर्कं प्रतीच्छस्व मातर्मे भुवनेश्वरि ।।७।।
( पुनराचमनीयकमाचमनमन्त्रेण दद्यात् ।)
शंखस्थमुदकं पुण्यं सुगन्धि सुमनोहरम् ।
निवेदितं महादेवि स्नानीयं प्रतिगृह्यताम् ।।८।।
त्वं देवि परमेशानि परब्रह्मस्वरूपिणि ।
गृह्ण वस्त्रमिदं देवि यज्ञसूत्रमिदं शुभे ।।९।।
ज्योतिषां ज्योतिरेका त्वम् अनादिनिधनेऽनघे ।
मया दत्तमलङ्कारमलङ्कुरु नमोऽस्तु ते ।।१०।।
सुगन्धि दुर्गमं नान्यं कुमुदोत्पलमालिनम् ।
सितपीताऽरुणादानं गृह्ण पुष्पं वरानने ।।११।।
धूपं गुग्गुलसंयुक्तं चन्दनाऽगुरुचर्चितम् ।
दशाष्टाङ्गसमुद्भूतं गृहाण परमेश्वरि ।।१२।।
परं ज्योतिः परं ब्रह्म जगदेकं सनातनि ।
भूतये मम देवेशि दीपोऽयं प्रतिगृह्यताम् ।।१३।।
यद् दत्तं परया भक्त्या फलमूलादिकं मया ।
गृहाण परमेशानि नैवेद्यं सुमनोहरम् ।।१४।।
नैवेद्यं विविधं रम्यं नानाफलसमन्वितम् ।
शर्करासंयुतं कृत्वा पायसं च निवेदयेत् ।।१५।।
अशेषजगदाधारभूते त्रैलोक्यवन्दिते ।
प्रदक्षिणमहं वन्दे विद्वत्सु पादपङ्कजम् ।।१६।।
धान्यं मुद्गकलायं च रजोवस्य तिलस्य च ।
प्रकटाऽनेकफलयुक् रचनां विनिवेदयेत् ।।१७।।

## प्रार्थना

प्राणान् रक्ष यशो रक्ष पुत्रदारधनानि च ।
सर्वरक्षाकरी यस्मात् त्वं देवि भुवनेश्वरि ।।१८।।

इति मन्त्रैः श्रीसूक्तैर्वा यन्त्रं संपूजयेत् । ततः पश्चाद् दक्षिणां दद्यात् ।

इति यन्त्रसंस्कारविधिः ।

**यन्त्रसंस्कारसामग्री**—(१) यन्त्रम् (२) पञ्चगव्यम् (३) पात्रम् (४) शीतलजलम् (५) कुङ्कुमकस्तूरी (६) पञ्चाऽमृतम् (७) दुग्धम् (८) जलम् (९) धूपम् (१०) दधि (११) घृतम् (१२) मधु (१३) शर्करा (१४) कलशम् (१५) रोचना (१६) कुशाः (१७) षोडशोपचाराणि (१८) पट्टसूत्राणि (वस्त्रम्) (१९) अष्टोत्तरशताहुतिदानम् (२०) दक्षिणा ।

इति यन्त्रसंस्कारसामग्री ।

—:०:—

## २२–बटुकादिबलिदानविधि :—

श्रीभगवत्याः पूजनस्य साङ्गतायै गणपत्यादिदेवताभ्यो माषदधिभक्तद्रव्यैः पञ्चमहाभूतबलिदानं करिष्ये, इति संकल्प्य भूमौ सिन्दूरेण विन्दुत्रिकोणवृत्तचतुरस्रात्मकं यन्त्रं विलिख्य वलिपात्राधारमण्डलाय नमः इति गन्धपुष्पैः सम्पूज्य अन्नव्यञ्जनयुतमाधारं बलिं च निधाय 'ॐ वलिद्रव्याय नमः' इत्यनेन गन्धपुष्पैः सम्पूज्य पूर्वे 'गं गणपतये नमः' इति सम्पूज्य बलिमुपनीय गां गीं गूं गैं गौं गः गणपतये वर वरद सर्वजनं मे वशमानय सर्वोपचारसहितं बलिं गृह्ण गृह्ण स्वाहा इति वामाङ्गुष्ठमध्यमाभ्यां बलिमुत्सृजेत् ।

### प्रार्थना

सर्वदा सर्वकार्याणि निर्विघ्नं साधयेन्मम ।
शान्तिं करोतु सततं विघ्नराजः स्वशक्तितः ॥

दक्षिणे पूर्वरीत्या यन्त्रं विलिख्य सम्पूज्य च क्षं क्षेत्रपालाय नमः इति सम्पूज्य 'क्षां क्षीं क्षूं क्षैं क्षौं क्षः क्षेत्रपालाय नमः' बलिमुपनीय 'भो क्षेत्रपाल इमं बलिं गृह्ण गृह्ण सर्वकामान् पूरय पूरय स्वाहा', वामाङ्गुष्ठतर्जनीभ्यां बलिमुपनीय उत्सृजेत्, दक्षहस्तेन जलं त्यजेत् ।

## प्रार्थना

योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालः सकिङ्करः ।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ।।

पश्चिमे पूर्वविधिना यन्त्रं विलिख्य बटुकबलिपात्राऽऽधारमण्डलाय नमः इति सम्पूज्य 'बं बटुकाय नमः' इति सम्पूज्य बलिमुपनीय बल्यन्नं च तत्र निधाय 'ॐ एहि एहि देवीपुत्र, बटुकनाथ, कपिलजटाभारभास्वर, त्रिनेत्र, ज्वालामुख, सर्वविघ्नान् नाशय नाशय सर्वोपचारसहितं बलिं गृह्ण गृह्ण स्वाहा' । उत्सर्जनं जलदानं च पूर्ववत् ।

## प्रार्थना

करकलितकपालः कुण्डली दण्डपाणिः ।
तरुणतिमिरनील – व्यालयज्ञोपवीती ।।
क्रतुसमयसपर्या – विघ्नविच्छेदहेतुः ।
जयति बटुकनाथः सिद्धिदः साधकानाम् ।।

उत्तरे पूर्ववद् यन्त्रं विलिख्य 'योगिनीबलिपात्राधारमण्डलाय नमः' इति गन्धपुष्पैः सम्पूज्य तदुपरि अन्नव्यञ्जनयुतमाधारं बलिं च निधाय 'ॐ' बलिद्रव्याय नमः' इति सम्पूज्य उत्तरे 'यां योगिनीभ्यो नमः' इति सम्पूज्य बलिमुपनीय 'यां सर्ववर्णयोगिनीभ्य इमं बलिं गृह्ण गृह्ण हुं फट् स्वाहा ।' वामाङ्गुष्ठाऽनामिकाभ्यां बलिमुत्सृजेत्, दक्षहस्तेन जलमुत्सृजेत् ।

## प्रार्थना

द्विभुजा रक्तवसनाः सर्वाऽऽभरणभूषिताः ।
योगिन्यः सर्वदा पान्तु गृहेऽरण्ये सदा मम ।।
ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वाऽनले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ।।
क्षेत्रे पीठोपपीठे दिशि च कृतपदा धूपदीपादिकेभ्यः
प्रीता देव्यः सदा नः शुभविधिबलिना पान्तु वीरेन्द्रवन्द्याः ।।

स्ववामे चतुष्कोणं यन्त्रं विलिख्य 'ह्रीं सर्वभूतेभ्यो नमः' इति पूर्ववत् सम्पूज्य बलिमुपनीय 'ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्य इमं बलिं गृह्ण गृह्ण हुं फट स्वाहा ।' उत्सर्जनं जलदानं च पूर्ववत् ।

प्रार्थना

भूता ये विघ्नकर्तारो दिवि भूम्यन्तरिक्षगाः ।
पातालतलसंस्थाश्च शिवयोगेन भाविताः ।।
क्रूराद्याः शतसंख्याकाः पाखण्डाद्या व्यवस्थिताः ।
ध्रुवाद्याः शतसंख्याकाः इन्द्राद्याशाव्यवस्थिताः ।।
तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ।
नगरे वाऽथ संग्रामे, अटव्यां वा सरित्तटे ।
वापीकूपेषु वृक्षेषु श्मशाने च चतुष्पथे ।।
नानारूपधरा ये च बहुरूपधराश्च ये ।
ते सर्वे चैव सन्तुष्टा बलिं गृह्णन्तु मे सदा ।।

इति पञ्च बलिदानं कृत्वा दिग्पालबलिमपि कुर्यात् । बृहत्पद्धतौ–मन्त्रानुसन्धानं कर्त्तव्यं दिग्पालानाम् । प्रधानबलिः बिन्दुं त्रिकोणं च निर्माय गन्धादिभिः सम्पूज्य बलिमुपनीय तं च सम्पूज्य श्रीबगलामन्त्रेण (मन्त्रो यन्त्रसंस्कारप्रकरणे कथितः) 'भो बगलामुखि, सर्वेश्वरि, इमं बलिं गृहीत्वा मामनुगृहाण' इति सम्प्रार्थ्य हस्तौ पादौ च प्रक्षाल्य स्तोत्रं पठेत् ।

इति बलिदानविधिः ।

अनुष्ठानं पुरश्चरणं वा कर्तव्यं भवेत् तदा औदुम्बरप्लक्षादिकाष्ठ-निर्मितान् दशाङ्गुलपरिमितान् कीलान् दश दिक्षु बलिदानात् पूर्वं 'ॐ नमः सुदर्शनायाऽस्त्राय हुं फट्' इत्यनेन अष्टोत्तरशतमभिमन्त्रितं निखनेत् ।

ॐ ये चाऽत्र विघ्नकर्तारो भुवि दिव्यन्तरिक्षगाः ।
विघ्नभूताश्च ये चाऽन्ये मम मन्त्रस्य सिद्धिषु ।।

मयैतत् कीलितं क्षेत्रं परित्यज्याऽविदूरतः ।
अपसर्पन्तु ते सर्वे निर्विघ्ना सिद्धिरस्तु मे ॥

इति मन्त्रद्वयेन कीलारोपणं कार्यम् । सर्वेभ्यो बलिं दत्त्वा पञ्च महाभूतबलिं दद्यात्—इति ।

—:०:—

**२३—यन्त्रतर्पणप्रयोगः—**

ईश्वर उवाच

पूजयेद् यन्त्रराजं च षोडशाद्युपचारकैः ।
तद्यन्त्रोपरि सन्तर्प्य तत्तर्पणविधिं शृणु ॥
गुडोदकैस्तर्पणेन प्रकुर्यात् तर्पणाविधिम् ।
कृत्याशान्तिर्भवेत् तस्य पञ्चाऽयुतेन सर्वशः ॥
हेतुना तर्पणं कुर्यात् पूर्वसंख्यं सुबुद्धिमान् ।
वश्यं संमोहनं चैव भवेत् तर्पणमादरात् ॥
मोहिनीद्रव्यसंमिश्रजलेनैव तु तर्पणम् ।
नेत्राऽयुते कृते सम्यग् जिह्वास्तम्भनकृद् भवेत् ॥
गतेर्भङ्गं च वाङ् मौनं गात्रश्रोत्रे तथा क्षिकम् ।
क्षुधा तृष्णा च निद्रा च स्तम्भनं भवति ध्रुवम् ॥
निम्बार्कपत्रजद्रावैर्मिश्रितं कूपवारिणा ।
पञ्चाऽयुतं तर्पणेन सद्यो विद्वेषणं भवेत् ॥
वज्रार्कक्षीरमिश्रं च करकाम्भस्तर्पणेन च ।
उच्चाटनं भवेच्छीघ्रमयुतत्रयमादरात् ॥
प्रेतान्नं प्रेतभूमिं च प्रेताङ्गारं च पुत्रक ।
समं समं रवौ ग्राह्यं जलेनैव तु मिश्रणम् ॥
निशायुतं तर्पणेन पक्षाद् रिपुविनाशनम् ।
हयारिपत्रजद्रावैर्मिश्रितं मारणं भवेत् ॥
कस्तूरीमिश्रितं तोयं राज्यलाभाय वै ध्रुवम् ।
चन्दनाम्भस्तर्पणेन तापं कृत्रिमजं हरेत् ॥

कर्पूरमिश्रितं तोयं पञ्चाशत् शतमादरात् ।
नित्यं च तर्पयेद् धीमान् मासमेकमतन्द्रितः ॥
पुराणज्वरमत्युग्रं पित्तरोगं विनश्यति ।
पैष्ट्या तर्पणमात्रेण अयुतं मुनिसंख्यया ॥
कुवेरसदृशः श्रीमान् जायते नात्र संशयः ।
माध्वीद्रव्येण संमिश्रं पूजितं शुद्धवारिणा ॥
तत्राऽयुतं तर्पणेन लक्ष्मीवान् जायते ध्रुवम् ।
गोक्षीरतर्पणेनैव ईप्सितां निधिमाप्नुयात् ॥
तक्रेण तर्पणेनैव पित्तरोगविनाशनम् ।
हरिद्राम्भस्तर्पणेन स्त्रीणामाकर्षणं भवेत् ॥
आरनालेन संतर्प्य जलदोषः प्रशाम्यति ।
स्यमन्तकुसुमेनैव वासितं जलतर्पणम् ॥
पुत्रवान् जायते मर्त्योऽयुतं चात्र न संशयः ।
कदलीफलगोक्षीरं शर्करा च समं समम् ॥
पलाष्टकं च प्रत्येकं मिश्रितं जलतर्पणम् ।
मूकत्वं कुरुते वक्तॄन् रिपून् सर्वाननेकशः ॥
जलेन मिश्रितं पुत्र शोणितं खरवाजिनाम् ।
वेदाऽयुतं तर्पणेन उन्मादी जायते नरः ॥
काकरक्तेन संमिश्रं वारिणा तर्पणेन च ।
श्वानवच्च वदेच्छत्रुर्म्रियते नाऽत्र संशयः ॥
मार्जाररक्तमिश्रेण वारिणा तर्पणं चरेत् ।
क्षयरोगी भवेच्छत्रुर्म्रियते मासषट्कके ॥
उरगशोणितेनैव मिश्रितं तर्पयेज्जलम् ।
निशासहस्रमानेन शीघ्रं रिपुविनाशनम् ॥
जपसंख्या यत्र नोक्ता भवेत् पञ्चाऽयुतं सुत ।
दिनसंख्या यत्र नोक्ता पक्षमेकं न संशयः ॥

**मार्जनम्—**

मार्जयामीति पदमन्ते प्रयोज्यम् जलेन दुग्धेन वाऽन्यस्य कस्यचिद् द्रव्यस्य भवति । विधानानुसारं ज्ञातव्यम् ।

इति सांख्यायने एकादशः पटलः ।

—:०:—

**यन्त्रराजोद्धारः**

**क्रौंचभेदन उवाच**

नीलकण्ठाय नित्याय निराभास्याय शाश्वते ।
निर्विकल्पाय देवाय पशूनां पतये नमः ।।
सर्वाऽऽश्चर्यकरं यन्त्रं बगलाया वद प्रभो ।।

**ईश्वर उवाच**

शृणु स्कन्द महाबुद्धे जगतां हितकारक ।
अधुना कथयिष्यामि यन्त्रराजस्य विस्तरम् ।।
यस्य स्मरणमात्रेण सर्वाघौघविनाशनम् ।
यन्त्रोद्धारं प्रवक्ष्यामि लयाङ्गसहितं तव ।।
शून्यं त्रिकोणवलयं रसकोणसमन्वितम् ।
वलयं वसुपत्रं च वलयं द्वादशारकम् ।।
षोडशारं च वृत्तं च द्वात्रिंशद्दलपङ्कजम् ।
तस्योपरि लिखेत् पुत्र वृत्तत्रयसुशोभितम् ।।
चतुर्द्वारसमायुक्तं भूगृहत्रयशोभितम् ।
धारणाऽऽख्यमिदं यन्त्रं देवानामपि दुर्लभम् ।।
आब्रह्मस्तम्बपर्यन्तं धारणात् सुखकारकम् ।
लयाङ्गं तस्य यन्त्रस्य विस्तराद् वच्मि सांप्रतम् ।।
इन्द्रादिलोकपालांश्च दिशि कोणे प्रपूजयेत् ।
आयुधानि च तत्रैव वामावर्तेन पूजयेत् ।।
गणेशं पूर्वदिग्भागे क्षेत्रपालं च दक्षिणे ।
पश्चिमे वटुकं चैव उत्तरे योगिनीं तथा ।।

नैर्ऋत्यवरुणयोर्मध्ये पूजयेद् ब्रह्मभारतीम् ।
ईशाने पूर्वदिग्मध्ये पूजयेद् अनन्तकं ततः ॥
वृत्तत्रये स्तब्धमायाम् अन्तराले च वाग्भवम् ।
द्वात्रिंशत्पत्रके वत्स पूजयेद्दलदेवताम् ॥
विश्वा च मोहिनी विद्या विरागा रागिणी तथा ।
विद्यावती वेगवती वामती वरवर्णिनी ॥
विशिष्टा विमला विद्या बिश्वेशी विश्वरक्षिणी ।
विमला विजया वाणी वाग्देवी वसुरूपिणी ॥
विश्वम्भरप्रिया विद्या वरदाऽऽद्या वशंकरी ।
विश्वाधारा विश्वकर्त्री विरूपाक्षा महोदरी ॥
वासुकी वागुरा वामा वरेण्या वाक्प्रदायिनी ।
वज्रहस्ता विशालाक्षी पूजयेद् अन्तपत्रके ॥
गन्धपुष्पाक्षतैः सम्यग् अन्तराले च मन्मथम् ।
पूजयेद् भक्तियोगेन सर्वकामार्थसिद्धये ॥
षोडशारे यजेद् वत्स राज्ञी रामा मनोरमा ।
रक्ता च रागिणी रम्या रञ्जिता रञ्जिनी रमा ॥
रेवती रुक्मिणी रक्ता रक्ताक्षी रणमर्दिनी ।
रम्भा रौद्री रतिश्चैव पूजयेत् स्वरपत्रके ॥
शक्ति तस्याऽन्तराले तु गन्धपुष्पादिनाऽर्चयेत् ।
द्वादशारे यजेत् पुत्र कालीं तारां सुकोमलाम् ॥
छिन्नशीर्षां शिवां शान्तां धूमां त्रिपुरसुन्दरीम् ।
भैरवीं भवहन्त्रीं च मङ्गलां मधुमालिनीम् ॥
वाग्भवं चैव वाराहमन्तरालेषु पूजयेत् ।
तस्योपरि यजेद् वत्स ब्राह्मादि मातृकाऽष्टकम् ॥
लज्जावीजान्तराले हि पूजयेच्च यथाविधि ।
षडङ्गं पूजयेत् पुत्र द्वादशारेषु बुद्धिमान् ॥
षट्कोणस्याऽन्तरालेषु अस्त्रमन्त्रं प्रपूजयेत् ।

त्रिकोणे पूजयेत् पुत्र रतिं वाणीं रमां तथा ॥
तस्यान्तराले भुवनां दुर्गां त्रिपुरसुन्दरीम् ।
बिन्दौ यजेत् स्तम्भिनीं हि मूलमन्त्रेण साधकः ॥
पीतद्रव्यैर्लिखेद् यन्त्रं भूर्जत्वचि सुबुद्धिमान् ।
भृगुवारे चाऽर्धरात्रौ सौभाग्यार्चनपूर्वकम् ॥
पीतोपचारैः सम्पूज्य पीतद्रव्येण होमयेत् ।
तर्पणं मार्जनं कृत्वा ब्राह्मणान् भोजयेत् ततः ॥
सुवासिनीं कुमारीं च तोषयित्वा विधानतः ।
एवं यः कुरुते मन्त्री यन्त्रपूजनमुत्तमम् ॥
स्वदेहरक्षणार्थं तत् स्वर्णस्थं धारयेद् बुधः ।
मूर्ध्नि कण्ठे बाहुदेशे धारयेत् साधकोत्तमः ॥
ब्रह्मास्त्रं यन्त्रराजं च धृत्वा च विचरेद् भुवि ।
तस्य दर्शनमात्रेण त्रैलोक्यं स्तम्भयेत् क्षणात् ॥
खलाः पापरताः क्रूरा दृष्ट्वा साधकमुत्तमम् ।
दूरादेव पलायन्ते भयविह्वलचेतसः ॥
वादिनां चैव राज्ञां च अमात्यांश्चैव सेवकान् ।
चमूनां चाश्वपादानां सभाविद्याविवादिनाम् ॥
स्तम्भयेत् सकलान् लोकान् किमन्यच्छ्रोतुमिच्छसि ॥

इति सांख्मायने षट्त्रिंशत्पटले ।

इदं यन्त्रमुत्तराम्नायकं साधकैर्लिख्यते, अस्मिन् यन्त्रे सर्वाः स्वरव्यञ्जन शक्तयः पूज्यन्ते, कालीतारादिमहाविद्याश्च बगलाविद्याया अङ्गत्वे पूज्यन्ते । केचित् सर्वाम्नायेषु बगलाया अङ्गत्वमेव नाङ्गीकुर्वन्ति, प तेषां भ्रान्तिमेवेदं साधयति ।

इति श्रीबगलारहस्ये मन्त्रयन्त्रविधानात्मकः
प्रथमः परिच्छेदः ।

# अथ द्वितीयः परिच्छेदः

१—दीक्षाविधिः—

उक्तं सांख्यायने—

कौञ्चभेदन उवाच

नमस्ते पार्वतीनाथ नमः पन्नगभूषण ।
वद दीक्षाविधिं तात तत्सर्वं स्तम्भनास्त्रकम् ॥

ईश्वर उवाच

पुस्तके लिखितान् मन्त्रान् अवलोक्य जपति यः ।
स जीवन्नेव चाण्डालो मृतः श्वा चैव जायते ॥
दीक्षामार्गं विना मन्त्रं यो जपेत् स नराधमः ।
दीक्षाविधिं विना पुत्र शैवं शाक्तं च वैष्णवम् ॥
यो जपेत् तं दहत्याशु देवता च जुगुप्सति ।
दीक्षाविधिं विना मन्त्रं यो जपेत् कोटिकोटिशः ॥
न स सिद्धिमवाप्नोति सिन्धुसैकतवर्षवत् ।
तस्मात् सर्वप्रयत्नेन दीक्षां कुलगुरोर्मुखात् ॥
उपदेशक्रमेणैव मन्त्रग्रहणमादरात् ।
वेदवेदाङ्गपारीणं वेदान्तार्थविशारदम् ॥
वैदिकाऽऽचारसंयुक्तं कुर्याद् गुरुमतन्द्रितः ।
गर्भकौलाऽऽगमासक्तं नानाकौलपरायणम् ॥
अष्टपाशविनिर्मुक्तं कुर्याद् गुरुमतन्द्रितः ।
पुरश्चरणकृन् मन्त्री मन्त्राऽऽगमविशारदम् ॥
उद्धर्तुं चैव संहर्तुं समर्थं सत्यवादिनम् ।
प्रधानज्ञं पराऽज्ञानहारिणं नीतिकोविदम् ॥

श्री विद्यामन्त्रयन्त्रज्ञं कुर्याद् गुरुमतन्द्रितः ।
चक्रपूजासमायुक्तं व्यासपूजाविशारदम् ॥
गुरुं यत्नात् प्रकुर्वीत सततं सिद्धिवाञ्छया ।
गुरोः शुश्रूषया विद्या पुष्कलेन धनेन वा ॥
अथवा विद्यया विद्या चतुर्थो नास्ति कश्चन ।
शुश्रूषया गुरुं सम्यक् तोषयेच्छिष्यमन्वहम् ॥
प्रसन्नचेतसा दत्तं मन्त्रमुत्तममर्भक ।
स्वल्पं वा बहुलं वाऽथ शिष्यद्रव्यं गुरुः स्वयम् ॥
गृहीत्वा मन्त्रमादत्ते विक्रीतं तदुदाहृतम् ।
राजसं चैव तद् विद्याद् रोगदं भुवि पुत्रक ॥
विद्याप्रतिनिधिं विद्यां यद् दत्तं तामसं स्मृतम् ।
मोक्षार्थी च गुरुं यत्नाच्छुश्रूषणेन तोषयेत् ॥
शुश्रूषणेन यल्लब्धं तद् विद्या सर्वसिद्धिदम् ।
न देया विद्यया विद्या वित्तकांक्षी तथैव च ॥
सच्छिष्याय प्रदातव्या धनदेहाद्यवञ्चिते ।
दुरालस्यसमायुक्तं दुर्गुणेन समन्वितम् ॥
सर्वदा वर्जयेच्छिष्यं गुरुसेवाऽभिमानिम् ।
अष्टपाशसमायुक्तं भ्रष्टाऽऽचार समन्वितम् ॥
सर्वदा वर्जयेच्छिष्यं गुरुसेवाऽभिमानिनम् ।
कामुकं काञ्चनासक्तं करुणालेशवर्जितम् ॥
सर्वदा वर्जयेच्छिष्यं गुरुसेवाऽभिमानिनम् ।
निर्मत्सरं निरालम्बं नीतिशास्त्रविशारदम् ॥
नित्याऽनित्यविवेकं च शिष्यत्वेनैव कल्पयेत् ।
शुद्धभक्तिसमायुक्तं धनदेहाद्यवञ्चकम् ॥
अष्टपाशविनिर्मुक्तं शिष्यत्वेनैव कल्पयेत् ।
गुरुशिष्यौ उभौ मोहादपरीक्ष्य परस्परम् ॥
उपदेशं ददन् गृह्णन् प्राप्नुयातां पिशाचताम् । इति

आणवी दीक्षा तु दशविधा, तद् यथा—

आणवी वहुधा दीक्षा नादेयी शाम्भवी पुनः ।
एकधैव तु विद्वद्भिः पठ्यते शास्त्रकोविदैः ।।

**राघवभट्ट :**—

"आणवी वहुधेत्युक्त्वा तद्भेदमधुनोच्यते ।
स्मार्ती च, मानसी, हौत्री चाक्षुषी, स्पार्शिकी तथा ।।
वाचिकी, मान्त्रिकी, यौगी, शास्त्री, चेदभिषेचिका ।

(१) **स्मार्ती**—

विदेशस्थं गुरुं स्मृत्वा शिष्यं पापत्रयं क्रमात् ।
विश्लेष्य लयभागाऽङ्गविधानेन परे शिवे ।।
सम्यग् योजनरूपैर्या स्मार्ती दीक्षेति कथ्यते ।

(२) **मानसी**—

स्वसन्निधौ समासीनमालोक्य मनसा शुचिः ।
मलत्रयादुपायैर्या, विज्ञेया सा तु मानसी ।।

(३) **यौगी**—

योगोक्तक्रमतो योगी शिष्यदेहं प्रविश्य तु ।
गृहीत्वा तस्य चात्मानं स्वदेहयोजनात्मिका ।।
योगदीक्षेति सा प्रोक्ता मलत्रयविनाशिनी ।

(४) **चाक्षुषी**—

शिवोऽहमिति निश्चित्य वीक्षणं करुणाऽऽर्द्रया ।
दृशा, सा चाक्षुषी दीक्षा सर्वपापप्रणाशिनी ।।

(५) **स्पार्शिकी**—

स्वयं परशिवो भूत्वा निःसन्दिग्धमना गुरुः ।
शिवहस्तेन शिष्यस्य स्वमन्त्रं मूर्ध्नि संस्पृशेत् ।।
स्पर्शदीक्षेति सा प्रोक्ता शिवाऽभिव्यक्तिकारिणी ।

**शिवहस्तलक्षणम्—यथा सोमशम्भौ**

गन्धैर्मण्डलकं स्वीयैर्विदध्याद् दक्षिणे करे।
विधिना त्वर्चयेद् देवमित्थं स्याच्छिवहस्तकम् ॥
( स्वीयैर्गन्धैः स्वस्वगन्धाष्टकैरित्यर्थः । )

(६) **वाचिकी—**

गुरुवक्त्रं निजवक्त्रं विभाव्य गुरुमादरात्।
गुरुवक्त्रप्रयोगेण दिव्यमन्त्रादिकं शिशोः ॥
मन्त्रन्यासादिभिः सार्धं दद्यात्, सेयं च वाचिकी।

(७) **मान्त्री—**

दीपवातो यथा मन्त्रन्यासे संयुक्तविग्रहः।
स्वयं मन्त्रतनुर्भूत्वा संक्रमं मन्त्रमादरात् ॥
दद्यात् शिष्याय, सा दीक्षा मान्त्री मलविघातिनी।

(८) **हौत्री—**

कुण्डे वा स्थण्डिले वाऽपि निःक्षिप्याऽग्नि विधानतः।
लयभागक्रमेणैव प्रत्यध्वानं यथाक्रमम् ॥
मन्त्रवर्णकला तत्र पदं विष्टपमेव च।
संशोध्य होमरूपैर्या हौत्री दीक्षा समीरिता ॥

(९) **शास्त्री—**

योग्यशिष्याय भक्ताय शुश्रूषाऽर्चापराय च।
सार्धं शास्त्रपदा द्रव्या, शास्त्री दीक्षेति सोच्यते ॥

(१०) **अभिषेचिका—**

शिवं च शिवपत्नीं च कुम्भे सम्पूज्य सादरम्।
शिवकुम्भाऽभिषेकात्मा दीक्षा स्यादभिषेचिका ॥

**वर्णमयी दीक्षा—शारदायाम्—**

अथ वर्णमयीं दीक्षां वक्ष्ये चाऽऽगमचोदिताम्।
पुं प्रकृत्यात्मना वर्णाः शरीरमपि तादृशम् ॥

यतस्तस्मात्तनौ न्यस्येत् वर्णान् शिष्यस्य देशिकः ।
तत्तत्स्थानयुतान् वर्णान् प्रतिलोमेन संहरेत् ।।
आज्ञया देवताभावाद् द्विविधा देशिकोत्तमः ।
तदा विनीय तत्तोयं शिष्यो दिव्यतनुर्भवेत् ।।
परमात्मनि संयोज्य तच्चैतन्यं गुरूत्तमः ।
तस्मादुत्पादितान् वर्णान् न्यस्येच्छिष्यतनौ पुनः ।।
सृष्टिक्रमेण विधिवच्चैतन्यं च नियोजयेत् ।
जायते देवताभावः पराऽऽनन्दमयः शिशोः ।।
एषा वर्णमयी दीक्षा प्रोक्ता ज्ञानप्रदायिनी ।

इति वर्णमयी दीक्षा ।

कलामयी वेधमयी च दीक्षा तन्त्रे विस्तरेणोपदिष्टा अनुपयुक्तत्वादत्र नोल्लिख्यते । मूलसूत्रम्—दीक्षास्तिस्रः शाक्ती, शाम्भवी, मान्त्री च । तत्र शाक्ती शक्तिप्रवेशनात्, शाम्भवी चरणप्रवेशनात्, मान्त्री मन्त्रोपदिष्टा, सर्वाश्च कुर्यादिकैकम् इत्येके, एतद् व्याचक्षते श्रीशङ्कराचार्याः, शाक्तीति शक्तिः कुण्डलिनी परिचिद्रूपा तस्याः क्रियासमभिव्याहारेण कुलाऽकुलभेदाद् ब्रह्मनाड्यां परशम्भुमेलनं शक्तिप्रवेशः । शाम्भवी चरणविन्यासात् ते चरणाश्चत्वारः, शुक्लरक्तमिश्रपरस्वरूपाः । मान्त्री मन्त्रोपदिष्टा चरणद्वयं शिवशक्तिरूपम् । तत्र सत्वप्रधानः शुक्लः, रजःप्रधानो रक्तः, तमःप्रधानो मिश्रः, गुणाऽतीतो निर्वणः साक्षात्परमानन्द-निर्भरः सदाशिवरूपः सहस्रदलपद्मकर्णिकामध्यवर्तिचन्द्रमण्डलगत–पीयूषधाराप्लाव्यमानश्चिन्तनीयः ।

षडन्वयमहारत्ने—

त्रिविधा सा भवेद् दीक्षा प्रथमा आणवी मता ।
शाक्तेयी शाम्भवी चाऽन्या सद्योमुक्तिविधायिनी ।।
गुरुणा ज्ञानमार्गेण क्रियते ज्ञानचक्षुषा ।
शाक्ती ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु ।।

मान्त्री क्रियावती दीक्षा कुम्भमण्डलपूर्विका ।
गुरोरालोकमात्रेण स्पर्शात् संभाषणादपि ॥
सद्यः संज्ञा भवेजन्तोर्दीक्षा सा शाम्भवी मता ।
मन्त्रवर्णाऽनुसारेण साक्षात् कृत्वेष्टदेवताम् ॥
गुरुश्चोद्बोधयेच्छिष्यं मन्त्रदीक्षेति कथ्यते ।

एतासां सर्वासां दीक्षाणां कैवल्याऽन्तं समानमेव फलम्. तदुक्तम्—

सर्वासामेव दीक्षाणां मुक्तिः फलमखण्डितम् ॥ इति

—:००:—

### ३—मान्त्रीदीक्षा—प्रयोगपद्धतिः —

ददाति क्षिणोति च इति निरुक्त्या दीक्षाशब्दार्थः ब्रह्मज्ञानस्य प्रदानं समस्तपापानां च विनाशनमिति गम्यते । इममेवार्थमाश्रित्याऽनेके प्रकाराः दीक्षायास्तन्त्रगन्थेषु दृश्यन्ते । मान्त्री आणवी शाम्भवी वेधादि भेदैर्भिन्नाः, तासु मान्त्री दीक्षा सर्वासु मन्त्रसाधने विशेषोपयोगमाधत्ते। सैव क्रियामयीति व्यपदिश्यते, मन्त्रग्रहणं दीक्षां विना न सम्भवति, अदीक्षितस्य प्रच्छन्नपापक्षयाऽभावात् , प्रक्षीणपापस्यैव मन्त्राधिकारात्, "दिव्यं भावं ददातीति दीक्षास्वरूपत्वाच्च । उक्तलक्षणलक्षितगुरोः सकाशात् दीक्षां गृहीत्वा मन्त्रग्रहणं कर्तव्यम् ।

—:००:—

**दीक्षाप्रकारः—**

सुदिनवारनक्षत्रकरणक्षेत्रेषु यथाशात्रं परिशोध्य दीक्षा दातव्या सर्वसमृद्ध्यर्थं पापनिवृत्त्यर्थं च । सर्वसम्मतत्वात् साधारणत्वाच्च क्रियामयी दीक्षा संक्षेपतः प्रदर्श्यते । साधकहिताय शुभाऽनुकूलसमये शास्त्रोक्तविधिना आदौ वास्तुपूजामारभेत ।

यथा—'ततो भूमितले शुद्धे तुषाराऽङ्गारवर्जिते, पुण्याहं वाचयित्वा विप्राऽऽशिषा शास्त्रोदितं मण्डपं विरचय्य तन्मध्ये वेदिकायां वा स्थण्डिले वा सर्वतोभद्रात्मकं मण्डलम् अन्यद् वा यथाशास्त्रं विरचय्य

चतुर्दिक्षु शास्त्रोक्तलक्षणयुक्तानि कुण्डानि प्रकल्पयेत्। अथवोत्तरस्यां दिशि चतुरस्त्रं सर्वसाधारणं सर्वसम्मतम् एकं कुण्डं मेखलत्रययुतं तत्पश्चिमायां दिशि मेखलोपरि यथोक्तां योनिं परिकल्प्य गुरुः शुद्धात्मा प्राङ्मुख :उदङ्मुखो वा मृद्वासने उपविश्य समाहितो मौनी भवेत्। गोमयेनोपलिप्य कुण्डमध्ये नाभिस्थाने स्वगृह्योक्तप्रकारेण षड्रेखा षट्कोणं त्रिकोणं वा विलिख्य स्थापयेत्। दक्षिणभागे पूजाद्रव्याणि यत्नतः, शुभोदकसमायुक्तं पूर्णकुम्भं ततः पुरः, ततः सुमनसः पात्रं, परितो घृतप्रज्वालितान् दीपान् शुभान्, पुरतः शङ्खं साधारं, परितोऽङ्कुरपत्राणि अन्यान्यपि यथाक्रमं पश्चात् स्थापयित्वा निजवाम-दक्षिणपार्श्वयोर्गुरुं गणेशं च नत्वा भूतशुद्धिमाचरेत्। यथोक्तम्—

प्राणायामं ततः कृत्वा मातृकास्तत्र विन्यसेत्।
षडङ्गन्यासं च ततः कृत्वा ( कल्पोक्तविधिना )
तत्तन्यासान् समारभेत।

तत्र मण्डपमध्ये धर्माऽऽदिपीठपूजानन्तरमात्मपूजां विधाय हेमरजत-ताम्रमृण्मयकलशानां मध्येऽन्यतमं यथालाभं सम्यक् प्रक्षालितानन्तरं कर्पूराऽगुरुधूपितं शोभनाऽऽकृतिं सुलक्षणं त्रिसूत्रवेष्टितं नववस्त्रयुग्मेन च गन्धादिभिरभ्यर्चितं नवरत्नोदरं दूर्वाक्षतसमन्वितं तारमुच्चार्य मन्त्री कर्णिकायां मध्येऽधोमुखं स्थापयेत्, पश्चात् उत्तानं कृत्वा पीठस्य कलशस्य चैक्यं संसाधयेत् धिया प्रोक्तकषायोदकैस्तीर्थोदकैर्वाऽन्यैः शुद्धतरैर्वा जलैः कर्पूरगन्धवासितैः प्रतिलोमेन मातृका जपन् तथैव मूलमन्त्रं च जपन् देवताबुद्ध्या कलशं पूरयेत्, ततः शङ्खे कषायाऽम्बुपूरिते शुद्धजलेन वा अष्टगन्धं समालोड्य आवाहयेत् च कलाः सुधीः।

तद् यथा—'ॐ अं अमृतायै नमः अमृतमावाहयामि' इत्यमृतमावाह्य जलगन्धादिभिः सम्पूज्य 'अमृतायाः प्राणा इह प्राणाः' इत्यादि प्राणप्रतिष्ठा-क्रमेण प्राणप्रतिष्ठां कृत्वा 'ॐ आं मानदायै नमः ॐ इं पूषायै नमः ॐ ईं तुष्टैच नमः ॐ उं पुष्टैच नमः ॐ ऊं रत्यै नमः ॐ ऋं धृत्यै नमः

ॐ ॠं शशिन्यै नमः ॐ लृं चन्द्रिकायै नमः ॐ ॡं कान्त्य न
ॐ एं ज्योत्स्नायै नमः ॐ ऐं श्रियै नमः ॐ ओं प्रीत्यै नमः ॐ
गदायै नमः ॐ अं पूर्णायै नमः ॐ अः पूर्णामृतायै नमः ।'

एतासां च पूर्वोक्तप्रकारेण प्राणप्रतिष्ठां पूजां च कृत्वा, अनन्तर
'ॐ कं मं तपिन्यै नमः तपनीमावाहयामि इत्यावाह्य तपिन्याः प्राण
प्राणाः' इत्यादि प्राणप्रतिष्ठां पूजां च कृत्वा 'ॐ खं बं तापिन्यै न
ॐ गं फं धूम्रायै नमः ॐ घं पं मरीच्यै नमः ॐ ङं नं ज्वालिन्यै न
ॐ चं धं रुच्यै नमः ॐ छं दं सुषुम्णायै नमः ॐ जं थं भोगदायै न
ॐ झं तं विश्वायै नमः ॐ ञं णं बोधिन्यै नमः ॐ टं ढं धरण्यै न
ॐ ठं डं उमायै नमः ।'

एतासां पूर्वप्रकारेण प्रतिष्ठाँ पूजां च कृत्वा 'ॐ यं धूम्रायै न
ॐ रं अर्चिष्यै नमः ॐ लं उष्मायै नमः ॐ वं ज्वलिन्यै नमः ॐ
ज्वालिन्यै नमः ॐ षं विस्फुलिङ्गायै नमः ॐ सं सुश्रियै नमः ॐ
सुरूपायै नमः ॐ लं कपिलायै नमः ॐ क्षं हव्यवाहनायै नमः ।'

इत्यभ्यर्च्य प्राणप्रतिष्ठां च कृत्वा अनन्तरम्—'ॐ कं सृष्ट्यै न
ॐ खं ऋद्ध्यै नमः ॐ गं स्मृत्यै नमः ॐ घं मेधायै नमः ॐ
कान्त्यै नमः ॐ चं लक्ष्म्यै नमः ॐ छं धृत्यै नमः ॐ जं स्थिरायै न
ॐ झं स्थित्यै नमः ॐ ञं सिद्ध्यै नमः ॐ अं नमः ।'

इत्यादिप्रकारेण सम्पूज्य प्रत्येकं प्राणप्रतिष्ठां च कृत्वा अनन्तरम्—
'ॐ टं जरायै नमः ॐ ठं पालिन्यै नमः ॐ डं शान्त्यै नमः ॐ ढं ऐश्वर्
नमः ॐ णं कृत्यै नमः ॐ तं कामिकायै नमः ॐ थं वरदायै न
ॐ दं ह्लादिन्यै नमः ॐ धं प्रीत्यै नमः ॐ नं दीर्घायै नमः ।'

इति जलादिभिः सम्पूज्य प्रत्येकं प्राणप्रतिष्ठां च कृत्वा आसां प्रत्येकम्-

"प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमेष्वधिक्षियन्ति भुवनानि विश्वा ।"

इति पठित्वा ऋचमावाहयामीत्यावाह्य ऋचं पूजयामीति पूजयित्वा 'ऋचः प्राणा इह प्राणा' इत्यादि प्रकारेण प्राणप्रतिष्ठां कृत्वा अनन्तरम् 'ॐ पं तीव्रायै नमः ॐ फं रौद्रायै नमः ॐ बं मद्रायै नमः ॐ भं निद्रायै नमः ॐ मं तन्द्रायै नमः ॐ यं क्षुधायै नमः ॐ रं क्रोधिन्यै नमः ॐ लं क्रियायै नमः ॐ वं उल्कायै नमः ॐ शं मृत्यवे नमः।'

इत्यादिप्रकारेण जलादिभिः सम्पूज्य प्रत्येकं "त्र्यम्बकं यजामहे" इति ऋचं पठित्वा ऋचमावाहयामीत्यावाह्य प्राणप्रतिष्ठां च कृत्वा अनन्तरम् 'ॐ षं पीतायै नमः ॐ सं श्वेतायै नमः ॐ हं अरुणायै नमः ॐ लं असितायै नमः ॐ क्षं अनन्तायै नमः।'

इत्यादिप्रकारेण प्रत्येकमावाह्य सम्पूज्य प्राणप्रतिष्ठां च कृत्वा अनन्तरम् 'ॐ अं निवृत्त्यै नमः ॐ आं प्रतिष्ठायै नमः ॐ इं विद्यायै नमः ॐ ईं शान्त्यै नमः ॐ उं इन्धिकायै नमः ॐ ऊं दीपिकायै नमः ॐ ऋं रेचिकायै नमः ॐ ॠं भाविकायै नमः ॐ ऌं सूक्ष्मायै नमः ॐ ॡं असूक्ष्मायै नमः ॐ एं मृडायै नमः ॐ ऐं ज्ञानायै नमः ॐ ओं अमृतायै नमः ॐ औं आप्यायिन्यै नमः ॐ अं व्यापिन्यै नमः ॐ अः व्योमरूपायै नमः।

इत्यादिप्रकारेणाऽऽवाह्य सम्पूज्य प्राणप्रतिष्ठां च कृत्वा प्रत्येकम्—

ॐ "विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते॥"

इति पठित्वा ऋचमावाहयामीत्यावाह्य सम्पूज्य, ऋचः प्राणा इह प्राणा इत्यादि प्राणप्रतिष्ठां कृत्वा चतुर्नवतिमन्त्रान् शङ्खजले मूलमन्त्रमुच्चारयन् कलशे निःक्षिपेत्।

अनन्तरम् अश्वत्थादिकोमलपल्लवैः इन्द्रवल्लीसमाबद्धैः सुरतरुधिया कुम्भमुखे निधाय वेष्टयेत् नूतनसूक्ष्मवासोभ्यां च शेषमपि साऽक्षतं सफलं रजतादियथालाभसुरद्रुमफलबुद्ध्या, पुनः कलशगतं देवं साऽङ्गं साऽऽवरणं साध्यमन्त्राऽनुरूपः सकलीकृत्य च गुरूपचारैः समाचरेत् नैवेद्याऽन्तान् तत्तन्मुद्रासहितान्।

मुद्राश्च—

आवाहनम् , स्थापनम् , संनिधापनम् , सन्निरोधनम् , अवगुण्ठनम्
सकलीकरणम् , अमृतीकरणम् इत्यादीनि ।

ततो नैवेद्यमनुद्धृत्य होमकर्म समारभेत । सकलीकरणन्यासः—का सकलीकरणन्यासः ? उपलिप्य कुण्डं, स्वासने उपविश्य, आचान्त प्राणानायम्य, न्यासपूर्वकं 'स्वगृह्योक्तप्रकारेण षट्रेखा विलिखेत् , अथव षट्कोणं वृत्तं त्रिकोणं वा विलिख्य तत्र ऋतुमतीं शिवां शिवेनाऽधिष्ठिता सकलजननीशक्तिं विचिन्त्य दीक्षाङ्गभूतहोमं करिष्ये, इति संकल्प तद्योनौ मणिभवगृहोच्छ्रितमेव वह्नितारमुच्चारयन् स्वाभिमुखं क्षिपे मन्त्रिवरः । ततः किंचित् पिङ्गल लोहिताक्ष सर्वकर्माणि साधय साध हन हन दह दह पच पच स्वाहेति मन्त्रेणाऽग्निं प्रज्वाल्य—

"अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् ॥

इत्युपस्थाय—'ॐ श्र्यूं पद्मरागायै नमः' इति लिङ्गे न्यसेत् 'ॐ श्र्यूं सुवर्णायै नमः' इति गुदे 'ॐ श्र्यूं भद्रलोहितायै नमः' इति मूर्ध्नि 'ॐ ह्र्यूं श्यामायै नमः' इत्याऽऽस्ये 'ॐ ल्र्यूं श्वेतायै नमः' इति नासिकायाम् 'ॐ प्र्यूं धूमिन्यै नमः इति नेत्रयो; 'ॐ व्र्यं करालयै नमः' इति सप्त जिह्वाः सर्वाङ्गेषु विन्यस्य ।

ततः 'ॐ सहस्रार्चिषे हृदयाय नमः' 'ॐ स्वस्ति पूर्णाय शिरसे स्वाहा' 'ॐ उत्तिष्ठ पुरुषाय शिखायै वषट्' 'ॐ धूमव्यापिने कवचाय हुम्' 'ॐ सप्तजिह्वाय नेत्रत्रयाय वौषट्' 'ॐ धनुर्धराय अस्त्राय फट्' इति तत्तत्स्थानेषु षडङ्गन्यासं कृत्वा वह्नेरपि तदनन्तरं षडङ्ग विधातव्यम् ।

'ॐ अग्नये जातवेदसे नमः' इति मूर्ध्नि 'ॐ अग्नये सप्तजिह्वाय नमः' इति वामांसे 'ॐ अग्नये हव्यवाहनाय नमः' इति वामपार्श्वे 'ॐ अग्नये वैश्वानराय नमः' इति लिङ्गे 'ॐ अग्नये अश्वोदरजाय नमः' इति वामकटिभागे ॐ अग्नये कौमारतेजसे नमः' इति दक्षिणकटिभागे

'ॐ अग्नये विश्वमुखाय नमः' इति दक्षिणपार्श्वे, 'ॐ अग्नये देवमुखाय नमः' इति दक्षिणांसे न्यसेत् । अष्टमूर्तेर्वह्नेरेवं विन्यस्य, ततः परिसमूहन–परिस्तरण–परिषेकादिकं कृत्वा "ॐ वैश्वानर जातवेद इहाऽऽवह लोहिताक्ष सर्वकर्माणि साधय साधय स्वाहा ।" इत्यनेन जलगन्ध-पुष्पधूपदीपनैवेद्यादिभिरग्निं सम्पूज्य वक्ष्यमाणक्रमेण ध्यायेत् ।

## ध्यानम्

दक्षिणाधःकरमारभ्य प्रादक्षिण्येन वरद शक्तिकाभयसहितं चतुर्बाहुं त्रिनेत्रम् अरुणजटाबद्धमौलिं शुभ्रवस्त्रम् अरुणसर्वालङ्कारभूषितम् अम्भोजसंस्थं वह्निं ध्यायेत्—

जिह्वा ज्वालारूपी ज्ञेया वरदाऽभय हस्तकाः स्वस्वनामसदृशा । अङ्गानि मूर्तयश्च शक्तिस्वस्तिकहस्ता ध्यातव्या । तेनाऽऽज्येन स्रुचा व्याहृतिभिर्व्यस्ताभिः समस्ताभिर्हुत्वा 'ॐ वैश्वानर जातवेद इहाऽऽवहेति पूर्वोक्तमन्त्रेण त्रिभिर्हुत्वा, अनन्तरं वह्नेर्गर्भाधान–पुंसवन–सीमन्त–जातकर्म–नामकरण – निष्क्रमणा–ऽन्नप्राशन–चौलो–पनयन– प्राजापत्य–सौम्याग्नेयवैश्यदेवताख्यानि वेदव्रतानि चत्वारि समावर्तन–विवाहाऽन्तानि त्रीण्येतानि प्रत्येकं साधयन् प्रणवेनाऽष्टावाहुतीराज्येन जुहुयात् । पुनर्जिह्वामन्त्रैरङ्गमन्त्रैर्मूर्तिमन्त्रैश्च प्रत्येकमेकैकवारम् आज्येन स्वस्वनाम-पूर्वकं चतुर्थीनमोन्तैर्हुत्वा मध्यस्थायां जिह्वायां महागणपतिमन्त्रेण वक्ष्यमाणप्रकारेण दशाहुतीर्हुत्वा यथा––

'ॐ स्वाहा, ॐ श्रीं स्वाहा, ॐ श्रीं ह्रीं स्वाहा, ॐ श्रीं ह्रीं क्लीं स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये बर वरद सर्वजनं मे वशमानय स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये बर वरद स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद

सर्वजनं स्वाहा, ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये सर्वजनं मे वशमा
स्वाहा ।

इत्थं दश त्रीँश्चाऽऽहुतीर्हुत्वा पुनः समस्तेन मन्त्रेण चतुर्वारम् आज
जुहुयात् । पुनः साध्यमन्त्रेण पञ्चविंशतिवारान् हुत्वा ॐ ह्रीं बगलामु
इत्यादि मन्त्रराजेन हुत्वा महाव्याहृतिभिर्हुत्वा—

**महाव्याहृतयश्च**—'ॐ भूरग्नये च पथिव्यै च महते च स्वा
ॐ भुवो वायवे चाऽन्तरिक्षाय च महते च स्वाहा, ॐ स्वः आदित्याय
दिवे च महते च स्वाहा, ॐ भूर्भुवः स्वः चन्द्रमसे च नक्षत्रेभ्य
दिग्भ्यश्च महते च स्वाहा ।'

पुनर्ब्रह्मार्पणमनुना एकामाज्याहुतिं दत्वा इतः पूर्वं प्राणबुद्धि
धर्माऽधिकारतो जाग्रत्स्वप्नसुषुप्तिषु अवस्थासु मनसा वाचा कर्मणा हस्ता
पद्भ्यामुदरेण शिश्ना यत् स्मृतं यत् प्रोक्तं यत् कृतं, तत् सर्वं ब्रह्मा
भवतु स्वाहा ।' इति ब्रह्मार्पणमनुः ।

अनन्तरं 'पूर्णाहुतिमुत्तमां जुहोति सर्वं वै पूर्णाहुतिः सर्वमेवाऽऽप्नो
अथो इयं पूर्णाहुतिः, अस्यामेव प्रतितिष्ठति' इत्यनेन पूर्णाहुतिं हु
परिषेचनपूर्वकं होमं समाप्य अग्निमात्मन्यारोप्य देशिकः पश्चात् मण्ड
बलिमाहरेत् ।

पयोऽम्भसा राशिनक्षत्रतिथिकरणादीनां चतुर्थीनमोऽन्तैः स्वस्वनाम
मन्त्रैः बलिमाहरेत् 'एष बलिर्न मम' इति । ततो वा नैवेद्यमुद्धृत्य पूर्व
गन्धादिभिः परिपूज्य मुखवासादिकं दत्वा दण्डवत् प्रणमेद् भुवि । इति ।

होमद्रव्यप्रमाणम्—

घृतं कर्षमात्रम्, शुक्तिमात्रं पयः, तत्समं मधु, पञ्चगव्यं च, दुग्धा
अक्षमात्रम्, दधि प्रसृतिमात्रम्, लाजाः स्युर्मुष्टिसम्मिताः, तावत् पृथु
सक्तवः, गुडं पलार्धमात्रकम्, शर्कराऽपि ग्रासार्धमात्रम्, इक्षु पर्वावधि
एकैकं पत्रपुष्पाणि तथा अपूपा अपि, कदल्यादि फलानि च—

मातुलुङ्गं चतुःखण्डं पनसं दशधा विदुः ।
अष्टधा नारिकेलं स्यात् त्रिखण्डं विल्वमुच्यते ॥
तथैवोर्वारुकमपि ।

फलान्यन्यानि खण्डानि समिधः स्युर्दशाऽङ्गुलाः ।
दूर्वात्रयं समुद्दिष्टं गुडूची चतुरङ्गुला ।

व्रीहियवमाषमुद्गकोद्रवगोधूमकलाया अपि मुष्टिमात्रकाः । तण्डुलाः, स्तदर्धं, तिलसर्षपा : चुलुकमात्रं लवणम् । मारीच्यानपि विंशतिः । गुग्गुलं बदरमात्रम् । रामठं तत्समम् । चन्दनाऽगरुकर्पूर-कुंकुमानि तितिणिबीजमानानि समुद्दिष्टानि देशिकैः ।

**इति होमसामग्री ।**

**होमाभावेऽनुकल्पः**—होमाभावेऽथवा पुष्पैः पूरयित्वा अञ्जलिम् इष्टदेवताप्रीत्यै दद्यात् मूलमन्त्रमुच्चारयन् ।

ततोऽन्यमण्डले शिष्यमुपवेश्य यथाविधि ।
नदत्सु पञ्चवाद्येषु सार्धं विप्राऽऽशिषा गुरुः ॥

विधिवत्कुम्भमुद्धृत्य तत्स्थपल्लवान्तर्हितशिरसं सुरसं सुस्थिरं सुनियतं प्राङ्मुखोपविष्टं देवतामनुस्मरन् गुरुः शिष्यमभिषिञ्चेत् । तद्विधिर्वक्ष्यते ।

यथार्थवत्प्रतिलोममातृका जपन् तथैव मूलमन्त्रमपि । अनन्तरं गुरुणाभिषिक्तो वाससी परिधाय शिष्यः आचम्य च स्वलंकृतो नमस्कृत्य गुरुं, तस्मै यथाशक्ति दक्षिणां प्रदाय निविश्य गुरुसन्निधौ पूर्वाऽभिमुखो मौनी भवेत् । ततः सुदेशिकः शिष्यं समवहितं दत्तदक्षिणं दिव्यदृष्ट्या विलोक्य तस्मिंश्च परदेवतामावाह्य सकलीकृत्य तयोरैक्यधिया स्मरन् गन्धपुष्पाद्यैरलंकृत्य तस्मै विद्यां यथावद् दद्यात् । सत्सम्प्रदायविधिना (दक्षिणाम्नायेन) ऋष्यादिध्यानपूर्वकं मन्त्रं दक्षिणकर्णे वदेत् । गुरोर्लब्धां विद्यां पुनर्जपेत् तत्संनिधावेव शतावधि अष्टाविंशतिधा वा । गुरुदेवता-मन्त्राणामैक्यं सम्भावयन् प्रणमेद् दण्डवद् भूमौ गुरुं देवतात्मकम् ।

तथा च तत्पादौ मूर्ध्नि योजयेत् । शरीरमर्थं प्राणांश्च सर्वं तस्मै निवेदयेत् । अथवा गन्धपुष्पाद्यैर्वस्त्रालङ्कारा‌द्यैश्च गुरुं सम्प्रीणयेत् बित्तशाठ्यं विना । ततः प्रभृति गुरोः प्रियं कुर्वीत अनन्यधीः ।

ऋत्विग्भ्यो दक्षिणां दद्यात् यथावित्तं विशालधीः ।
ब्राह्मणान् तर्पयेत् पश्चाद् दक्षिणाभिर्यथेच्छया ।।

संक्षेपतोऽसौ विधिवच्च दीक्षा क्रियावती लोकहिताय पुण्या ।
ददाति पुँसामिह दिव्यभावं क्षिणोति पापानि भवेच्च दीक्षा ।।

**इति प्रयोगपद्धतिः**

—:०:—

**४—क्रमदीक्षा—**

अस्यां दीक्षायां प्रयोगप्रकारस्तु पूर्वोक्तदीक्षावत् । केवलो मन्त्रोपदेशक्रम एव विशेषः ।

'काली, च सुन्दरी, तारा क्रमदीक्षाऽभिगामिनी ।'

इति वचनानुसारेण तिसृणां विद्यानामेव क्रमोपदेशः, तथापि पुरश्चर्यार्णवे बगलामुख्या अपि क्रमो दृश्यते, गुरूपदेशप्रणाली चैतादशी । **उक्तं च—**

बगलाया महेशानि साम्राज्यपरमे स्थिता ।
चन्द्रवेदसूक्ष्ममेरुमन्त्रहीनं शिवाऽन्तरम् ।।
हृदयं च शतार्णं च पञ्चास्त्रं कुल्लुका तथा ।
गायत्रीक्रमयोगेन साम्राज्यपरमेष्ठ्यधृक् ।।

अनेन क्रमेण विद्योपदेशो भवति । चन्द्र १ वेद ४ सूक्ष्ममेरु ८ षट्त्रिंशदक्षरी विद्या, गणेशो, वटुकः, मृत्युञ्जयः, दक्षिणा काली, सौभाग्यविद्या हृदयम् , शताक्षरम् , पञ्चास्त्रं, कुल्लुका तथा ब्रह्मास्त्रगायत्री इति क्रमः । एवं क्रमं प्राप्य अभिषेकः । छिन्नमस्ताया अपि क्रमो दृश्यते पुरश्चर्यार्णवे एतस्या दिव्यचीनाचारत्वात् तारायामन्तर्भावः, बगलायाः सुन्दर्यामिति क्रमत्रयमेव वदन्ति ।

क्रमदीक्षा महेशानि पञ्च विद्यासु भेदतः ।
तदङ्गमन्त्रा गायत्रीकुल्लुकापञ्चकं शिवे ॥

इत्यादि प्रसङ्गेन उक्तम् । बगलाया महात्रिपुरसुन्दरीरूपत्वात् ऐक्यम् । अत एवोर्ध्वाम्नाये त्रिकूटेषु व्युत्क्रमरूपेषु ( ऐं ह्रीं श्रीं सौं क्लीं ऐं ह्लीं श्रीं पूर्वं संयोज्य त्रिकूटं, ततः पश्चात् ह्लीं ऐं क्लीं श्रीं इति पराषोडशीरूपम् ) स्थिरमायाबीजं संयोज्य पराषोडशी भवति । पीताम्बरात्वं च क्वचिद् ध्याने पठ्यते । यथा—

"ध्यायेत् पद्मासनस्थां विकसितवदनां पद्मपत्राऽऽयताक्षीम्
हेमाभां पीतवस्त्रां करकलितलसद्धेमपद्मां वराङ्गीम् ॥
सर्वाऽलङ्कारयुक्तां सततमभयदां भक्तनम्रां भवानीम्
श्रीविद्यां शान्तमूर्तिं सकलसुरनुतां सर्वसम्पत्प्रदात्रीम् ॥ इति ।

उक्तं सांख्यायने—

"बगलां सुन्दरीं ध्यायेद् द्विभुजां सर्वसिद्धिदाम् ।"
**पञ्चब्रह्ममयैः पीठनिलयाम् ।**

इत्यनेन यथा षोडश्याः पञ्चप्रेतासनस्थत्वमुच्यते तथा बगलायाः ।

"पीतवासोमते पुत्र पञ्चप्रेतगतां स्मरेत् ।"

इत्यादि प्रमाणैरैक्यमुभयोर्गम्यते ।

क्रमदीक्षाविधिर्यत्र तत्र पूर्णाभिषेचनम् ॥

इति प्रमाणेन बगलाया अपि पूर्णाभिषेकः षडम्नायविद्योपदेशश्च । एतत् सर्वं षोडशीवत् कर्तव्यम् । पूर्वाम्नाये ब्रह्मास्त्रगायत्री, हृदयम्, नवाक्षरम्, एकादशाक्षरम्, अन्ये षोडशीवत् । दक्षिणाम्नाये षट्त्रिंशदक्षरी, एकाक्षरी, चतुरक्षरी, अष्टाक्षरी । अन्यत् पूर्ववत् । पश्चिमाम्नावे–त्र्यक्षरः शताक्षरः मालामन्त्रः शावरमन्त्रः परप्रयोगभक्षिणी, अन्यत् पूर्ववत् । उत्तराम्नाये–पञ्चास्त्रम्, बगलास्त्रम्, कवचविद्या शेषं पूर्ववत् । ऊर्ध्वाम्नाये ऐं ह्रीं श्रीं क्लीं स क ल ह्रीं ह स क ह ल ह्लीं क ए ई ल ह्लीं इति पराषोडशी हंसः सोहं ह्लौं ह्लौं बगलागायत्री, अन्यत् पूर्ववत् । दिव्यौघ—मानवौघ–

गुरव एक एव, केवलं सिद्धौघा भिन्नाः तदग्रे वक्ष्यन्ते। अनुत्तराम्नाये ऐक्यमेव। इति क्रमो वर्षत्रयेण ग्रहीतव्यः।

इति क्रमदीक्षाविधिः।

—:०:—

**५—अभिषेकविधिः—**

## क्रौञ्चभेदन उवाच

पूजाधारणयन्त्रज्ञ सर्वशास्त्रविशारद।
अभिषेकविधिं तात वद मे करुणाकर॥

## ईश्वर उवाच

आश्विने कार्तिके चैव चैत्रे मासि कुमारक।
कर्तव्यस्त्वभिषेकश्च मानवैः सिद्धिकाङ्क्षिभिः॥
गुरौ रवौ भृगाविन्दौ वारकेषु कुमारक।
मन्त्राऽभिषेकः कर्तव्यः सद्यः सिद्धिकरो भुवि॥
एवं शुभे दिने सम्यक् पूर्वाह्ने समुपोषितम्।
स्नापयेत् पञ्चगव्येन ततश्चाऽऽमलकेन तु॥
रोहिण्यां श्रवणे चैव स्वात्यां चैव विशाखयोः।
मन्त्राऽभिषेकः कर्तव्यः सद्यःसिद्धिविधायकः॥

**स्नानान्तरविधिः—**

ततः शिष्यं समानीय देवतासन्निधौ पुनः।
अयुतं प्रजपेन् मन्त्रं गायत्रीं वेदमातरम्॥
देवस्येशानभागे तु गोमयेन बिलेखिते।
रङ्गावल्या लिखेद् यन्त्रं रक्तपीतसिताऽसितैः॥
षोडशाऽङ्गुलमानं तु लिखेद् बिन्दुमनन्यधीः।
तस्योपरि लिखेद् वृत्तमष्टपत्रं सुशोभितम्॥
प्रियङ्गुशालिगोधूमचणकार्धकमाषकम्।
कुलत्थमुग्दनीवारान् क्रमान् मध्यादि विन्यसेत्॥

प्रस्थं चैव चतुर्विंशत् प्रत्येकं धान्यमेव च ।
अर्चयेत् स्थूलकलशं मध्ये संस्थाप्य बुद्धिमान् ॥
अष्टपत्रं न्यसेत् पुत्र कलशाऽष्टकमादरात् ।
क्षालितं वासितं शुद्धं कलशं तु समर्चयेत् ॥
षोडशैरुपचारैश्च धूपाद्येनैव विन्यसेत् ।

आपोवातेन —

( ॐ आपो वा इदं सर्वं विश्वाभूतानि आपः प्राणा वा आपः पशवः आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दास्यापो ज्योतींष्यापो यजूंषि आपस्सत्यमापस्सर्वा देवता आपो भूर्भुवस्सुवरापः ॐ )

पूर्येत नदीजलमकल्मषम् ।
निःक्षिपेन् नव भाण्डेषु नवरत्नं कुमारक ।
कस्तूरीं चन्दनोपेतां नवभाण्डेषु निःक्षिपेत् ॥
मध्ये देवीं समावाह्य चिन्मयीं बगलामुखीम् ।
प्राणस्थापनमार्गेण केरलोक्तविधानतः ॥
वाणीं चैव रमां गौरीं शचीं स्वाहां रतिं तथा ।
दुर्गां छायां समभ्यर्च्य पूर्वाऽद्यष्टकसिद्धये ॥
अर्चयेत् पूर्वके पत्रे केरलोक्तविधानतः ।
नवीननवसंख्याकवस्त्रेणैव च वेष्टयेत् ॥
सुगन्धपत्रपुष्पाऽऽदीन् विन्यसेत् कलशान्तरे ।
तत्र शिष्यं समानीय ऋत्विग्वरणमाचरेत् ॥
वेदवेदाऽङ्गपारीणान् अष्टौ विप्रान् यथाविधि ।
प्रार्थयेद् युग्मसंयुक्तमर्चयेद् वस्त्रभूषणैः ॥
शक्रादिदिक्षु मन्त्रैश्च प्रथमं कलशाऽर्चनम् ।
लक्ष्मीश्रीसूक्तकाभ्यां च द्वितीयं कलशाऽर्चनम् ॥
पौरुषेणैव सूक्तेन तृतीयं कलशाऽर्चनम् ।

नारायणानुवाकेन चतुर्थं कलशं तथा ॥

(नारायणोपनिषदन्तर्गतं सहस्रशीर्षं देवमित्यादि)।

पञ्चब्रह्ममयैर्मन्त्रैः पञ्चमं कलशं तथा ॥

( सद्योजातादि । )

षष्ठं चाम्भस्यपारेण ब्रह्मवल्या तु सप्तमम् ।

(नारायणोपनिषदन्तर्गतं प्रथमानुवाकमारभ्य तृतीयपर्यन्तम् ब्रह्मवल्ली तैत्तिरीयोप निषद्गता । )

अष्टमं भृगुवल्ल्या तु मार्जयेन् मन्त्रकोविदः ।

( तैत्तिरीयोपनिषदन्तर्गता भृगुवल्ली । )

मध्यस्थं पूर्वकलशं मूलमन्त्रेण मार्जयेत् ।
एवं च मार्जनं कृत्वा नवीनैर्वस्त्रभूषणैः ॥
अलंकृत्य तु तं शिष्यमानीय मण्डपान्तरे ।
वामोरूपरि विन्यस्य मूर्ध्नि स्वाघ्राय चाऽऽदरात् ॥
एवं चैव पुरश्चर्यां मूलमन्त्रं कुमारक ।
सहिरण्योदकेनैव दद्याच्छिष्याय पुत्रक ॥
स्वहृत्कमलमध्यस्थां विद्यां ज्योतिर्मयीं पुनः ।
शिष्यस्य हृदयं चैव प्रविशन्तीं विभावयेत् ॥
तत्प्रयोगं तत्र मुक्ता तन्मन्त्रार्णक्रमेण तु ।
षट्चक्रभेदनं कृत्वा स्वात्मैक्यं च विभावयेत् ॥
विद्यारूपो भवेत् पुत्र साम्राज्यं परमेष्ठिना ।
एवं मन्त्राऽभिषेकं च कुर्याद् ब्रह्मास्त्रविद्यया ॥
सद्यः सिद्धिर्भवेत् पुत्र पुरश्चर्यां विना भुवि ।

इति सांख्यायने तन्त्रे तृतीयः पटलः ।

—:०:—

## ६—गुरुतत्त्वप्रकरणम्—

दीक्षातत्त्वं संक्षेपत उक्तम्, तच्च गुरुकृपात एव लभ्यते, अत एव प्रसङ्गागतं गुरुतत्त्वं तदुपयोगिविषयं च निरूप्यते। उक्तं च—

गुरुमूलं जगत् सर्वं गुरुमूलं परं तपः।
गुरोः प्रसादमात्रेण मोक्षमाप्नोति सद्वशी॥
गुरुरेकः शिवः साक्षाद् गुरुः सर्वार्थसाधकः।
गुरुरेव परं तत्त्वं सर्वं गुरुमयं जगत्॥
विना गुरुप्रसादेन कोटिपुरश्चरणेन किम्।
गुरुमूलमिदं शास्त्रं नाऽन्यः शिवतमः प्रभुः॥
अत एव महेशानि यत्नतो गुरुमाश्रयेत्।

**प्रोक्तं च रुद्रयामले—**

गुरुं विना यतस्तन्त्रे नाधिकारः कथंचन।
अत एव महेशानि गुरुः कर्त्तव्य उत्तमः॥
गुरुं विना यस्तु मूढः पुस्तकाऽऽदिविलोकनात्।
जपबन्धं समाप्नोति किल्विषं परमेश्वरि॥
न माता न पिता भ्राता तस्य को वा गतिः प्रिये।
गुरुरेको वरारोहे पापं नाशयति क्षणात्॥

**इति गुरुमाहात्म्यम्।**

गुरुस्तु द्विविधः प्रोक्तो दीक्षाशिक्षाप्रभेदतः।
आदौ दीक्षागुरुः प्रोक्तः शेषे शिक्षागुरुर्मतः॥
यन्मुखात्तु महामन्त्रः श्रूयतेऽभ्यस्यतेऽपि वा।
स गुरुः परमो ज्ञेयः तदाज्ञा सिद्धिदायिनी॥
प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा।
शिक्षको बोधकश्चैव षडेते गुरवः स्मृताः॥
पञ्चैते कार्यभूताः स्युः कारणं बोधको भवेत्।

इति मन्त्रदातुः श्रैष्ठ्यम् । गुरुमन्त्रदेवतानां चैक्यमेव विभावनीयं साधकैः, येषु भेदधीकर्तुः सर्वाः क्रिया निष्फला भवन्ति ।

गुरुः परगुरुश्चैव परापरगुरुस्तथा ।
स्वगुरुः परमेशानि साक्षाद् ब्रह्म न संशयः ॥

**बृहन्नीलतन्त्रे उक्तम्—**

परापरगुरूणां च निर्णयं शृणु पार्वति ।
आदौ सर्वत्र देवेशि मन्त्रदः परमो गुरुः ॥
परापरगुरुस्त्वं हि परमेष्ठी त्वहं गुरुः ।
सर्वं गुरुमुखाल्लब्धं सफलं स्यान् न चाऽन्यथा ॥

स्त्रीगुरुरपि कुलाचारे प्रशस्ता, परन्तु विधवाया निषेधः । पुत्रिणी चेत् तदा गुरुत्वेन ग्राह्या । गुरुशिष्यलक्षणानि पूर्वोक्तानि ज्ञातव्यानि । ननु इष्टदेवगुरुदेवयोर्मध्ये प्रथमं को ध्येयः ? उच्यते, सर्वसम्मतत्वात् गुरुरेव प्रथमं ध्येयः । संक्षेपेण तद्विधिः प्रदर्श्यते—

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिम्
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ॥
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतम्
भावाऽतीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥

कुलवृक्षप्रणामाऽनन्तरं गुरुध्यानमुक्तम् ।

**कुलवृक्षाश्च—**

हरीतकी तथा धात्री निम्बाऽश्वत्थकदम्बकाः ।
उम्बरुर्वटविल्वौ च तिंतिडी नवमः स्मृतः ॥
ब्राह्मे मुहूर्ते उत्थाय कुलवृक्षं प्रणम्य च ।
शिरःपद्मे सहस्रारे चन्द्रमण्डलमध्यके ॥
अकथादित्रिरेखीये हंसमन्त्रसुपीठके ।
ध्यायेन् निजगुरुं वीरो रजताऽचलसन्निभम् ॥
पद्मासीनं स्मितमुखं वराऽभयकराम्बुजम् ।
शुक्लमाल्याऽम्बरधरं शुक्लगन्धानुलेपनम् ॥

वामोरुस्थितया रक्तशक्त्याऽऽलिङ्गितविग्रहम् ।
तथा स्वदक्षहस्तेन धृतचारुकलेवरम् ।।
वामेनोत्पलधारिण्या सुरक्तवसनस्रजा ।
सितरक्तप्रभां बिभ्रत् शिवदुर्गास्वरूपिणम् ।।
परानन्दरसापूर्णं स्मरेत् तन्नामपूर्वकम् ।
तारत्रयं समुच्चार्य 'ह स ख फ्रें' ततः परम् ।।
'ह स क्ष म ल व र यूं ह स ख फ्रें ह सौः' ततः ।

'अमुकानन्दनाथश्रीपादुकां पूजयामि नमः । अमुकीं देव्यम्बाश्रीपादुकां पूजयामि नमः ।' इत्यादि

अयं श्रीपादुकामन्त्रः सर्वेप्सितफलप्रदः ।

मिथुनं चिन्तयित्वा ततः वाग्भवम् अष्टोत्तरशतं जपेत् । वाग्भवेन प्राणायामत्रयं विधाय गुह्येत्यादिना जपं निवेद्य स्तवादिकं पठेत् । अजपादि वृहत्पद्धतौ वक्ष्यामः ।

**पादुकापचकम्**

ब्रह्मरन्ध्रसरसीरुहोदरे, नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरकाण्डमण्डितं, द्वादशार्णसरसीरुहं भजे ।।१।।
तस्य कन्दलितकर्णिकापुटे, क्लृप्तरेखमकथादिरेखया ।
कोणलक्षितहलक्षमण्डली भावलक्ष्यमवलाऽऽलयं भजे ।।२।।
तत्पुटे पटुतडित्कडारिमस्पर्धमानमणिपाटलप्रभम् ।
चिन्तयामि हृदि चिन्मयं वपुः विन्दुनादमणिपीठमण्डलम् ।।३।।
ऊर्ध्वमस्य हुतभुक्शिखासखं, तद्विलासपरिबृंहणाऽऽस्पदम् ।
विश्वघस्मरमहोत्सवोत्कटं, व्यामृशामि युगमादिहंसयोः ।।४।।
तत्र नाथचरणारविन्दयोः कुङ्कुमाऽऽसवभ्ररीमरन्दयोः ।
द्वन्द्वमिन्दुमकरन्दशीतलं, मानसं स्मरति मङ्गलाऽऽस्पदम् ।।५।।
निषक्तमणिपादुका नियमिताघकोलाहल—
स्फुरत्किशलयाऽरुणं नखसमुल्लसच्चन्द्रकम् ।।

पराऽमृतसरोवरोदितसरोजसद्रोचिषम्
भजामि शिरसि स्थितं गुरुपदाऽरविन्दद्वयम् ॥६॥
पादुकापञ्चक स्तोत्रं पञ्चवक्त्राद् विनिर्गतम् ।
षडाम्नायफलं प्राप्तं प्रपञ्चे चाऽतिदुर्लभम् ॥ इति

—:०:—

**गुरुमण्डले त्रिकोणस्वरूप विवरणम्—**

वामावर्तेन विलिखेद् अकथादि त्रिकोणकम् ।
अकारादिविसर्गान्ता ब्रह्मरेखा प्रजापतिः ॥
ककारादितकारान्ता विष्णुरेखा परात्परा ।
थकारादिसकारान्ता शिवरेखा त्रिविन्दुतः ॥
त्रिविन्दुं परमं तत्त्वं ब्रह्मविष्णुशिवाऽऽत्मकम् ।
वर्णमयं त्रिकोणं तु जायते विन्दुतत्त्वतः ॥

**वामा ज्येष्ठा रौद्रीति शक्तित्रयम्—**

रजःसत्त्वतमोरेखा योनिमण्डलमण्डिताः ।
उपरिष्टात् सत्त्वरेखा रजोरेखा स्ववामतः ॥
तमोरेखा दक्षभागे रेखात्रयमुदाहृतम् ।
अकथादिपंक्त्या तु ह ल क्ष मण्डितम् ॥ तदुक्तम्—

कर्णिकान्तःपुटे देवि द्वादशार्णसरोरुहे ।
तेजोमये कर्णिकान्तश्चन्द्रमण्डलमध्यगे ॥
अकथादित्रिरेखीये ह ल क्ष त्रयभूषिते ।
हंसपीठमन्त्रमये स्वगुरुं शिवरूपिणम् ॥
चिन्तयेदिति शेषः ।

ॐ ऐं ह्रीं श्रीं परमशिवात्मानन्दनाथः परा शक्त्यम्बा परानन्दनाथः, कौलेश्वरानन्दनाथः, कुलेश्वरानन्दनाथः, इति दिव्यौघाः ।

सिद्धनाथानन्दनाथः, सिद्धानन्दनाथः, परेष्ठिनाथानन्दनाथः, श्रीकण्ठानन्दनाथः, इति सिद्धौघाः ।

गगनानन्दनाथः, विश्वानन्दनाथः, विमलानन्दनाथः, मदनानन्दनाथः, भुवनानन्दनाथः, नीलानन्दनाथः, स्वात्मानन्दनाथः, प्रियानन्दनाथः, इति मानवौघाः ।

गगनानन्दनाथस्य प्रसन्नत्वान् महेश्वरि ।
विख्याता बगलेत्येतद् रहस्यमिति गीयते ॥
अभेदत्वाच्च लकयोर्बगलेति प्रकीर्तिता ।

गगनानन्दस्य पूज्यत्वाद् बगला लकयोरभेदत्वाद् बगलेति श्रीविद्यारत्नसूत्रभाष्यम् । यजुर्वेदमयत्वं च ।

श्रीगुरुमन्त्रश्च—ऐं ह्रीं श्रीं स ह ख फ्रें स ह क्ष म ल व र यूं स ह ख फ्रें स्हौः इत्यमुकीमम्बापादुकां पूजयामीत्यादि । श्रीगुरुस्तोत्रादिकं तन्त्रान्तराद् विज्ञेयम् ।

—:०:—

## ७—श्री बगलामुख्या आचारादिकथनम्—

श्रीगुरुमुखाद् यथाविधि मन्त्रमादाय तद्यन्त्रम् आचारं च गृह्णीयात् इत्येतदर्थमिदं प्रकरणमारभ्यते—

पूर्वाम्नाये यदा मन्त्रस्तदा प्राचीदिशि स्थितः ।
सदाशिवोऽहं भगवानाचारः परिकीर्तितः ॥
एवं वै दक्षिणाम्नायो दक्षिणस्यां दिशि स्थितः ।
एवमेवोत्तराम्नाये उत्तरस्यां दिशि स्थितः ॥

इति क्रमेण सर्वेषामुपदेशो ज्ञातव्यः । यद्यपि बगलामुखी महाविद्या षडाम्नायेषु उपदिश्यते । यथा—

षट्प्रयोगमयी विद्या षडाम्नायप्रपूजिता ॥ (षड्विद्यागमपूजिता ।)
तिरस्कृताऽखिला विद्या त्रिशक्तिमयमेव च । (सां० त० १ प० १ व)

तथापि स्थितिक्रमस्य मुख्यत्वाद् दक्षिणाम्नाय एव मुख्यत्वेन गृह्यते (ऊर्ध्वाम्नाये भगवत्या ध्यानं चतुर्भुजात्मकं केवलं मुक्त्यर्थमेव गृह्यते ।) तथाहि—

श्रीविद्या भेदसहिता तारा च त्रिपुरा तथा ।
भुवनेशी चाऽन्नपूर्णा पूर्वाम्नाये प्रकीर्तिताः ॥
बगलामुखी वशिनी त्वरिता धनदा तथा ।
महिषघ्नी महालक्ष्मीर्दक्षिणाम्नायकीर्तिताः ॥

इति प्रमाणाद् दक्षिणाम्नाये बगला परिगणिता । तदाचार प्रदर्शितो निरुत्तरे—

पूर्वाम्नायोदितं कर्म पाशवं कथितं प्रिये ।
यदुक्तं दक्षिणाम्नाये तदेव पाशवं स्मृतम् ॥
पश्चिमाम्नायजं कर्म पशुवीरसमाश्रितम् ।
उत्तराम्नायजं कर्म दिव्यवीराश्रितं प्रिये ॥
दिव्योऽपि वीरभावेन साधयेत् पितृकानने ।

इत्यनेन बगलायाः पाशवाचारः । निर्वाणतन्त्रे प्रशस्यते चाऽयम्—

दिव्यवीरमयो भावः कलौ नास्ति कदाचन ।
केवलं पशुभावेन मन्त्रसिद्धिरनुत्तमा ॥

कुत्रचित् कौलाचारोऽपि । यथा—

कुलीना भैरवी देवी कुलीना छिन्नमस्तका ।
कुलीना सुन्दरी साक्षात् कुलीना महिषमर्दिनी ॥
कुलीना भुवना बाला कुलीना बगलामुखी ।
धूमावती कुलीना च मातङ्गी कुलनायिका ॥

इत्यादि ।

सांख्यायने चोक्तम्—

सांख्यायनमते देव्या वामाचारविधिर्मतः ।
सांख्यायनमते देवी कलौ जागर्ति केवलम् ॥
सांख्यायनमतेनैव संस्मरेद् यत्नतः सुत ।

इति प्रमाणाद् वामाचारोऽपि ।

पूजनक्रमे चोक्तं तत्रैव—

सृष्टिस्थित्यन्तसंहारैः पूजा च त्रिविधा कलौ।
केरले सृष्टिपूजा च गर्भकौलाऽऽगमक्रमात् ॥
अर्चनं गौडदेशे तु स्थितिमार्गं कुमारक।
कामरूपप्रदेशे तु संहारार्चनमेव च ॥
गुप्तगौडागमं नाम गौडदेशाऽर्चने विधिः।
कामरूपागमं नाम संहारक्रमपूजनम् ॥
गौडागमं चाऽवलम्ब्य सांख्यायनमुनिस्तथा।
उक्तवानागमं चैव स्थित्यर्चां शृणु पुत्रक ॥

इत्यादि बगलापूजने द्रव्यमपि त्रिविधम्—

गौडी माध्वी च पैष्टी च गौडी चैवोत्तमोत्तमा ॥
छागकुक्कुटमत्स्याश्च बगलाप्रीतिकारणम्।

सौभाग्यार्चनमपि तत्रैवोक्तम्, तथापि विस्तरभयान् न लिख्यते। शक्तिसङ्गमे ताराखण्डे द्रष्टव्यम्। यद्यपि कौलपशुमार्गयोर्विरोधः, तथापि देशभेदेन व्यवस्था—

वामदक्षिणमार्गौ हि कालीताराविधौ स्मृतः।
द्राविडो दक्षिणः प्रोक्तः गौडो वामः प्रकीर्तितः ॥

इति प्रमाणाद् गौडद्रविडभेदेन व्यवस्थापनाद् अदोष।

## महाविद्यात्वनिर्णयः—

चामुण्डातन्त्रे—

काली तारा महाविद्या षोडशी भुवनेश्वरी।
भैरवी छिन्नमस्ता च विद्या धूमवती तथा ॥
बगला सिद्धविद्या च मातङ्गी कमलाऽऽत्मिका।
एता दश महाविद्याः सिद्धविद्याः प्रकीर्तिताः ॥

इति प्रमाणात् महाविद्यात्वं सिद्धविद्यात्वं च बगलायाः सिध्यति। नामार्थश्च तन्त्रान्तरे—

बकारे वारुणी प्रोक्ता गकारे सिद्धिदा स्मृता।

लकारे पृथिवी चैव चैतन्या या प्रकीर्तिता ॥
जगन्माता जगद्धात्री जगतामुपकारिणी ।

**भैरवनिर्णयः—**

बगलाया दक्षभागे एकवक्त्रं प्रपूजयेत् ।
महारुद्रेति विख्यातं जगत्संहारकारकम् ॥

'ॐ नमो भगवते महारुद्राय हुं फट् स्वाहा' इति तन्मन्त्रः ।

'ॐ हुं गं ग्लौं हरिद्रागणपतये वर वरद सर्वजनहृदयं स्तम्भ स्तम्भय स्वाहा ।' केचित् लक्ष्मीगणेशं ब्रुवते । 'ॐ श्रीं गं सौम्या महागणपतये वर वरद् सर्वजनं मे वशमानय स्वाहा' इति गणेशः ।

ॐ ह्रीं बटुकायाऽऽपदुद्धारणाय कुरु कुरु बटुकाय ह्रीं ॐ स्वाहा इति बटुकः ।

ॐ में में विडालमुखी स्वाहा—इति यक्षिणी ।

**वीररात्रि निर्णयः—**

चतुर्दशी भौमयुता मकारेण समन्विता ।
कुलऋक्षसमायुक्ता वीररात्रिः प्रकीर्तिता ॥

इति वीररात्रि निर्णयः ।

—:०:—

## ८—मालिकाकरणम्—

### क्रौंचभेदन उवाच

नमस्ते वृषभाऽऽरूढ नमः पन्नगभूषण ।
लक्षणं वद मे देव बगलामालिकां शिव ॥

### ईश्वर उवाच

भृगुवारे तु संगृह्य आरामसन्निशाम्बरम् ।
छायाशुष्कं सप्तरात्रं कृत्वा तु तदनन्तरम् ॥
भूमावपतितं चैव कपिलामूत्र गोमयम् ।
पुनरेककराद् ग्राह्यं भाण्डमध्ये विनिःक्षिपेत् ॥

नदीजलसमायुक्तं कुर्यान् मण्डलमेव च ।
हरिद्रास्तत्र निःक्षिप्य पूजयेद् बगलामुखीम् ॥
चुल्हिकोपरि तद् भाण्डं रवौ रात्रौ विनिःक्षिपेत् ।
द्विगुणं जलसंयुक्तं कुर्यान् मेलनमेव च ॥
अश्वत्थस्येन्धनेनैव कुर्यान् मृदु यथा भवेत् ।
गोमयाद्धि हरिद्राकं विभज्य तदनन्तरम् ॥
क्षालयेद् वारिणा सद्यश्छायाशुष्कं तु कारयेत् ।
हरिद्रा मणिमयं कृत्वा अष्टोत्तरशतं तु बा ॥
पुण्यस्त्रीनिर्मितं सूत्रमेकैकं छेदयेत् सुधीः ।
तां मालिकां रवौ वारे अभिषिञ्च्याऽमृतेन तु ॥
अर्चयेन् मूलमन्त्रेण षौडशैरुपचारकैः ।
निवेदयेत् पायसं च शर्कराऽऽज्यसमन्वितम् ॥
सहस्रं प्रजपेदादौ पञ्चाशद् वर्णमादरात् ।
एकाक्षरमहामन्त्रैर्बगलानामपावनैः ॥
अयुतं प्रजपेन् मन्त्रं मालिकासिद्धिमाप्नुयात् ।
एवं च मालिकां कुर्यान् मन्त्रसिद्धिमपेक्षताम् ॥
हरिद्रा वस्त्रमाच्छाद्य सिद्धचर्थं जपमाचरेत् ।
हरिद्रामयपुष्पाणि हरिद्रामयचन्दनम् ॥
समर्पयेदलंकृत्य जपं रात्रौ समाचरेत् ।
देवीभूत्वा जपेद् देवीमर्चनाविधिवद् यदि ॥
प्रमादान् मालिका भूमौ पतिता चेत् कुमारक ।
पुनः पूजा प्रकर्तव्या पूर्ववज् जपमाचरेत् ॥
अथ वक्ष्ये प्रयोगं च मालिकालक्षणं ततः ।
पञ्चविंशतिभिर्मोक्षे त्रिंशद् वै पौष्टचकर्मसु ॥
वशीकरणसम्मोहे कलासंख्या च मालिका ।
विंशतिः स्तम्भने विद्याद् विना मेरुं च मालिकाम् ॥
द्वेषोच्चाटनकर्माणि मालिका चाऽर्कसंख्यया ।

ज्वररोगादिपीडार्थं पञ्च चैव चतुर्दश ॥
भृगुवारे च संगृह्य द्रव्याण्येतानि पुत्रक ।
हरिद्रां पङ्कजं चैव कस्तूरीं च मृगाङ्ककम् ॥
श्रीखण्डं चाऽगुरुं चैव रोचनां कुसुमं समम् ।
मर्दयेत् शीतलेनैव जलेनैव कुमारक ॥
तेन कुर्यात् पुत्तलीं च चतुरङ्गुलमानतः ।
सदा च सुन्दरीं देवीं द्विभुजां बगलामुखीम् ॥
हस्ते वज्रधरां देवीं पानपात्रं च बिभ्रतीम् ।
पीतवर्णां मदाऽऽघूर्णामर्धचन्द्रां च पुत्तलीम् ॥
प्राणप्रतिष्ठां कुर्याद् वै संस्थाप्य विधिनाऽर्भक ।
अखण्डतण्डुलेनैव हरिद्राऽक्षतमेव च ॥
कृत्वा चैकाक्षरीमन्त्रैरक्षतान् मूर्ध्नि निःक्षिपेत् ।
प्रत्यहं युग्मपूजां च कुर्याच्चैव विचक्षणः ॥
एवं कृत्वा तत्त्वलक्षं देवीप्रत्यक्षमाप्नुयात् ।
यस्मै कस्मै न दातव्यं न वक्तव्यं कदाचन ॥
एवं पूजाविधिं कृत्वा दुर्वासा मुनिराट् पुरा ।
तत्त्वलक्षप्रकारेण ग्रन्थोक्तं फलमाप्नुयात् ॥

इति सांख्यायने चतुर्विंशतिः पटलः ।

—:०:—

## ६—योगविधिवर्णनम्—

योगशास्त्रस्य चित्तवृत्तिनिरोधपर्यवसितत्वात् अस्मिन्नेवा[rtl] पतञ्जलिना सूत्रितत्वाच्च "योगश्चित्तवृत्तिनिरोधः" इति चित्तवृत्ती[rtl] निरूद्धे सत्येव योगसिद्धेः। प्रकृतोपयोगिमन्त्रसाधने योगस्य कारणत[rtl] मवेक्ष्य किञ्चित् प्रस्तूयते। यतश्चित्तैकाग्र्यमापन्ने मन्त्रार्थसाक्षात्कारः आदौ — अहिंसासत्यमस्तेयब्रह्मचर्याऽपरिग्रहशौचसन्तोषाऽऽदियमनियमा अनुतिष्ठन् साधको जपादि कुर्वन्नासनमनुतिष्ठेत्—

आसनं च योगार्णवे—

ततो गुह्ये वामपादपार्ष्णिं तु विनियोजयेत् ।
तस्योपरि महादेवि दक्षपार्ष्णिं निवेशयेत् ॥
ऋजुकायशिरोग्रीवः काकचञ्चुपुटेन च ।
अकारेण वहिर्वायुं जठरे परिपूरयेत् ॥
अङ्गुलीभिर्दृढं बध्वा करणानि समाहितः ।
अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां विलोचने ॥
नासारन्ध्रे मध्यमाभ्यामन्याभिर्वदनं दृढम् ।
बध्वा मे प्राणमनसामेकत्वं तन्मनुं स्मरन् ॥
धारयेन् मारुतं सम्यग् योगोऽयं योगिवल्लभः ।

योनिमुद्रा—

इयं मुद्रा जपविधावपि कर्तव्या । ततः सिद्धासने उपविश्य प्राणायाममाचरेत् । यतो मनसो निरोधः प्राणाधीनत्वात् । हृदयमारभ्य नासाद्वारपर्यन्तं प्राणगतिः । अधोभागे अपानः, नाभिमण्डले समानः,कण्ठेदेशे उदानः, सर्वशरीरवृत्तिः व्यानः । वामे यदा प्रवहति, तदा शीतांशुः, दक्षिणे भास्करः, साम्ये अग्निः । तद्गतिमूलास्तिस्रो नाड्यः । इडा पिङ्गला सुषुम्णेति प्रसिद्धाः । एतास्वेव योगः प्रवर्तते । नाडीत्रयेऽपि सुषुम्णैव मुख्या तन्मध्ये चित्रा नाडी, तन्मध्ये पञ्चभूताऽधिदेवता, ब्रह्मविष्णुरुद्रेश्वरसदाशिवसंज्ञकाः । चित्रायामेव षट्चक्राणां चिन्तनं योगिनः कुर्वन्ति । उक्तं च—

सुषुम्णा संनिविष्टा च तन्मध्ये चित्ररूपिणी ।
तत्रैव ग्रथितं पद्ममूलादि पञ्च पद्मकम् ॥
मूलद्वारं समाऽऽच्छाद्य स्थिता नागस्वरूपिणी ।
वायुना भिद्यते मुक्तं दृढं चित्रा नयेत् ततः ॥ इत्यादि

मूलाऽऽधारे त्वगादिधातुवेष्टितं चतुर्दलं पाण्डुरवर्णं पद्मं,तत्कर्णिकामध्ये योनिः, तन्मध्ये सकलप्रपञ्चनिमित्तोपादानभूता कुण्डलिनी चिन्मयी शक्तिः ।

त्रिगुणिताऽऽदिरूपेण सूर्येन्दुवैश्वानराणां मूलभूता भ्रमति, या त्रिको-
मुत्थिता सुषुम्णा नाम नाडी वीणादण्डाख्यस्य पृष्ठवंशस्य पुरोभागमवलम्ब्य
ब्रह्मरन्ध्रपर्यन्तमूर्ध्वाऽऽकारा तिष्ठति, प्राणायामस्य दृढतराऽभ्यासेन स
जागर्ति, यतोऽविद्यया निद्रिता, तेन सर्पाऽऽकृतिं परित्यज्य सुषुम्णामार्गेण
ऊर्ध्वमुत्क्रामति, आधारात् स्वाधिष्ठानं, ततो मणिपूरं, ततोऽनाहतं, ततो
विशुद्धं, ततः आज्ञां, ततः सहस्रारं प्राप्य परमशिवे लीयते, मन्त्रविज्ञा-
नादरूपा वर्णमयीति द्विधा स्मर्यते। मन्त्रार्थं मन्त्रचैतन्यं च तदैव सम्पद्यते
चक्राणां विशेषविवरणमुपरिष्टाद् वक्ष्यामः। अष्टकुम्भकमभ्यस्य मूलबन्ध-
मुड्डीयानं जालंधराख्यं बन्धत्रयं सम्पाद्य प्राणान् नियन्तुं हठाऽभ्यासि-
प्रशस्तोपायः। प्रच्छर्दनविधारणाभ्यां वा प्राणस्येति सूत्रितत्वाच्च। ता-
धारणासु च योग्यता मनसः। ततः "क्षीयते प्रकाशाऽऽवरणम्" इत्या-
सूत्रैः प्रत्यपादयन् माहात्म्यं प्राणनिरोधस्य। एवमनुष्ठिते विक्षेपाऽभावस्त-
देशबन्धश्चित्तस्य, धारणेति धारणाऽभ्यासः प्रवर्तते, वाह्ये आभ्यन्तरे
तद्विषयः। बाह्ये स्फुटः, आभ्यन्तरे शाम्भवी–आदिमुद्राभिः।

"अन्तर्लक्ष्यो वहिर्दृष्टिर्निमेषोन्मेषवर्जितः"।
एषा हि शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता॥

तथा—

त्यजेत् शैथिल्यमङ्गानां नासाग्रे रोपयेद् दृशौ।
मुखं विवृणुयात् किञ्चिद् दन्तैर्दन्तान् न च स्पृशेत्॥
रसनामन्तरा कुर्याद् अनङ्गे धारयेन् मनः।
इयं सा परमा मुद्रा निरालम्बेति पञ्चमी॥

अनङ्गे आधारस्थयोनिमण्डले। एवं धारणां कुर्वन् ध्यानाऽभ्या-
योग्यतां प्राप्नोति, ध्याने सिद्धे समाधिरिति पतञ्जलिक्रमः। अपरं
योगिनां चिन्तनक्रममेवाऽऽह—

इन्दुर्ललाटदेशे च तदूर्ध्वे वोधिनी स्वयम्।
तदूर्ध्वे भाति नादोऽसौ अर्धचन्द्राऽऽकृतिः परः॥

तदूर्ध्वे च महानादो लाङ्गलाऽऽकृतिरुज्ज्वलः ।
तदूर्ध्वे च कला प्रोक्ता आज्ञीति योगिवल्लभा ॥
उन्मनी तु तदूर्ध्वे च यद् गत्वा न निवर्तते ।
( आज्ञाचक्रादूर्ध्वभागे सर्वमेतदवगन्तव्यम् । )
सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद् विन्दुसमुद्भवः ॥
पराशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः ।
विन्दुर्नादस्तथा वीजं तस्य भेदाः समीरिताः ॥
विन्दुर्नादात्मको वीजं शक्तिर्नादस्तयोर्मिथः ।
समवायः समाख्यातः सर्वाऽऽगमविशारदैः ॥

परशक्तिमयः परः शिवस्तेन शिवशक्तिमयो विन्दुरयं ललाटोर्ध्वे स्थितः विन्दुर्नादात्मकः शिवात्मकः । बीजं शक्तिवोधिनीरूपम् । नादस्तयोः समवायः सम्बन्धः क्षोभ्यक्षोभकरूपः, तेनाऽयं क्रियाशक्तिरूपः । एतत्तयोर्ध्वे महानादः पूर्वोपदर्शितः । तदूर्ध्वे च कला कलाशक्तिराज्ञीति तिर्यग्रेखारूप-मात्राऽऽकारा इयं शक्तिः सृष्टियादावाविर्भूता ।

यत्र गत्वा हि मनसो मनस्त्वं नैव विद्यते ।
उन्मनी सा समाख्याता सर्वतन्त्रेषु गोपिता ॥
सहस्रारकर्णिकायां चन्द्रमण्डलमध्यगा ।
सर्वसंकल्परहिता कला सप्तदशी भवेत् ॥
उन्मनी नाम तस्या हि भवपाशनिकृन्तनी ।
ततो हि व्यापिका शक्तिराञ्जीति यां विदुर्जनाः ॥
समनीमूर्ध्वतस्तस्या उन्मनीं तु तदूर्ध्वतः ।

आज्ञाचक्रादूर्ध्वं द्वितीयविन्दुः शिवरूपः, अर्धमात्रा बोधिनी शिवशक्ति समवायरूपा, अर्धचन्द्राकृतिर्नादः । तदूर्ध्वे समनी, ततः उन्मनीति सप्तकारणरूपाणि वर्तन्ते ।

मूलाधारं स्वाधिष्ठानं, मणिपूरम् , अनाहतम् ।
विशुद्धम् , आज्ञाचक्रं च विन्दुर्भूयः कलापदम् ॥

निबोधिका तथोर्ध्वेन्दुं नादो नादान्त एव च।
उन्मनीं विष्णुवक्त्रं च ध्रुवमाण्डलिकः शिवः॥
इत्येतत् कथितं देवि षोडशाऽऽधारमुत्तमम्।
अकुलेश्वरदेवस्य सम्बन्धः प्रथमः स्थितः॥
रूपाऽतीतः परो विन्दुः शक्त्यावेष्टितभास्करः।
अतो नादो विरोधी च अर्धचन्द्रसमुत्क्रमात्॥
एतत्तु पञ्चमं प्रोक्तं ज्ञानरत्नं महोदयम्।
तत्र तद्दक्षिणं षट्कमाज्ञापूर्वं कुलोद्भवम्॥

इति षडाधाराः। सर्वमेतत् कुण्डलिन्या जागरणे सति ज्ञातुं शक्यते।

—:०:—

## १०—सहस्रार-निर्णयः—

सुषुम्णानाड्यूर्ध्वे सहस्रदलपद्मं शुक्लवर्णम् अधोमुखम्, रक्तकिजल्क-शोभितम् अकारादिक्षकारान्तपञ्चाशद्वर्णैः शुक्लाभैर्विंशत्याऽऽवर्तनेन सहस्रसंख्याकैर्युक्तं सहस्रदलम्, एतत् कर्णिकायां हंसस्ततः परमशिवरूपो गुरुः ततः सूर्यमण्डलं चन्द्रमण्डलं, ततो महावायुः ततो ब्रह्मरन्ध्रम्, ततो महाशङ्खिनी, चन्द्रमण्डले विद्युदाकारं त्रिकोणं तन्मध्ये मृणालतन्तुशत-भागैकभागरूपा सूक्ष्मा चन्द्रस्य षोडशी कला, अधोमुखी रक्तवर्णा, तत्क्रोडे केशाग्रसहस्रभागैकभागरूपसूक्ष्मा निर्वाणकला रक्तवर्णा अधोमुखी, तदधस्ताद् अव्यक्तनादात्मकनिबोधिकाऽऽख्यवह्निः तदुपरि निर्वाणकला क्रोडे परविन्दुः शिवशक्त्यात्मकः। अस्य केशाग्रकोटिभागैकभागरूपसूक्ष्मतेजो-हंसरूपा निर्वाणशक्तिः। अस्या हंसो जीवः, विन्दोर्मध्ये शून्यं ब्रह्मपदम्।

मतान्तरम्—सहस्रदलकर्णिकामध्ये चन्द्रमण्डले अकथादित्रिकोणं तन्मध्ये त्रिकोणसमीपे त्रिविन्दुः तस्याऽधो बिन्दुर्हकारः पुरुषात्मक ऊर्ध्वं विन्दुद्वयरूपविसर्गः सकारः प्रकृतिरूपः। एतदुभयाऽऽत्मको

हंसस्त्रिविन्दुरूपेण प्रकाशते, तन्मध्ये अमा कला, तत्क्रोडे निर्वाणशक्तिः, तस्या मध्ये परं ब्रह्म। उक्तं च—

तेजोरूपा प्रिया तस्य ब्रह्मवर्त्मसुदुर्लभा।
परमं ब्रह्म यत्पादपङ्कजद्युतिवैभवम्॥
अमाषोडशभागेन देवि प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥

अन्यच्च संक्षेपेणाऽऽह उमानन्दः—

तन्मध्ये तु त्रिकोणं तु विद्युदाकारमुत्तमम्।
बिन्दुद्वयं च तन्मध्ये विसर्गरूपमव्ययम्॥
तन्मध्ये शून्यदेशे च शिवः परमसंज्ञकः।

षट् शिवास्तन्त्रशास्त्रेषु निर्दिष्टाः—

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
ततः परशिवो देवि षट् शिवाः परिकीर्तिताः॥

श्रीशङ्कराचार्यैरप्युक्तम्,—"परमशिवपर्यङ्कनिलयाम्"। अयं सुन्दरीक्रमः। बगलाक्रमे उक्तम्—"पीतवासोमते पुत्र पञ्चप्रेतगतां स्मरेत्" "बगलां सुन्दरीं ध्यायेत्", "सुधासिन्धोर्मध्ये" "मध्ये सुधाब्धिमणिमण्डपरत्नवेदी" त्यादिभिरुभयोरभेदः। अस्यामवस्थायां शिवशक्त्योरभेदमनुभवति योगी। इदमेव सामरस्याऽऽख्यं महामाहेश्वरैः कथ्यते। वेदान्तसम्प्रदायविद्भिराचार्यैरपि "तत्त्वमसि" "अहं ब्रह्मास्मि" इति वचनैरिदमेव परमं तत्त्वमुपदिश्यते। उक्तं च सङ्केतपद्धतौ—

अकारः सर्ववर्णाऽऽद्यः प्रकाशः परमः शिवः।
हकारोऽन्त्यः कलारूपो विमर्शाऽऽख्यः प्रकीर्तितः॥
उभयोः सामरस्यं तु परस्मिन् महसि स्फुटम्।

अयमेव परमपुरुषार्थपदवाच्यः यं प्राप्य कृतकृत्यो भवति। उक्तं हि गीतायाम्—

"एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत।"

इति विरम्यते

—:०:—

## ११–षट्चक्रनिरूपणम्—

पूर्वं सुषुम्णा नाडी उक्ता, तदनन्तरे चित्रा नाम नाडी अतिसूक्ष्मा, तस्यामेव षट् चक्राणि ग्रथितानि। तेषु—

(१) प्रथमं मूलाधाराऽऽख्यं चतुर्दलात्मकं पीतवर्णं, वं शं षं सं इति दलागताश्चत्वारो वर्णाः, पूर्वादिक्रमेण तेषां न्यासः, पार्थिवं लं वीजं, चतुष्कोणात्मकं यन्त्रं, डाकिनी देवी, ब्रह्मदेवश्चक्राधिपत्वेन ध्येयः, स्वयम्भू-नामकं लिङ्गाऽऽख्यं ज्योतिः, सार्धत्रिवलयां कुण्डलिनीं तद्वेष्टितां चित्कलां चपलां तत्र चिन्तयेत्। तज्जागरणं हंसमन्त्रेण हुंकारेण वा गुरूपदिष्टमार्गेण, "यतोऽविद्यया सा सुप्ता" विसतन्तुनिभां चित्रान्तर्गतां तां कृत्वा सम्यगभ्यसेत्। मुहूर्तद्वयाऽभ्यासेन प्रकाशानुभूतिः सर्वाः सिद्धयश्चाऽऽवि-र्भवन्ति। यथा शरीरस्य कान्तिः, नादव्यक्तिः, अग्निः प्रदीप्तो भवति, इन्द्रियपाटवम्, नैरुज्यम्, दुःखराहित्यम्, अतीताऽनागतान् जानाति, अश्रुतशास्त्राणि वेत्ति, स्वेच्छाविहारित्वं जायते, स्तम्भक्षोभौ भवतः। बगलाया मुख्यं चिन्तनम् अत्रैव, "वीजं स्मरेत् पार्थिवम्" इति वचनात्।

(२) तदूर्ध्वे द्वितीयं षड्दलाख्यं पद्मं लिङ्गमूले स्वाधिष्ठानाऽऽख्यं बालाऽऽदित्यनिभं बं भं मं यं रं लं इति वर्णैर्युक्तं, विष्णुर्देवः, चक्राधिपा देवी राकिणी, वं वारुणं वीजम्, अर्धचन्द्राकृति यन्त्रम्, एतच्चिन्तनेन विगतजराऽऽमयः, शुचिः, विन्दुधारणे दृढः, मृत्युभीतिरहितः, कान्तिमान्, अश्रुतशास्त्रज्ञानवान्, अनङ्गसदृशो योगी भवति जले चाऽव्याहतगतिः।

(३) तृतीयं मणिपूराऽऽख्यं नीलाञ्जनप्रख्यं त्रिकोणयन्त्रं रं वीजभूषितं दशदलोपेतं डं ढं णं तं थं दं धं नं पं फं इति दश वर्णैः संयुतं, रुद्रो देवः, चक्राधिपा लाकिनी देवी, तत्त्वं वह्निः, एतच्चिन्तनेन वश्याऽऽकर्षण-निर्विषीकरणे तथा तिरस्करिणीविद्यायां सिद्धिः, मृतशरीरोत्थापने प्रवेशे च योगी समर्थो भवति पातालसिद्धिश्चेत्यादयः प्रभावा भवन्ति।

(४) चतुर्थम् अनाहतं चक्रं तृतीयात् मणिपूरकाद् ऊर्ध्वं हृदयस्थितम् इन्द्रगोपकीटनिभं रक्तवर्णं, षट्कोणयन्त्रे वायुवीजं यं, काकिनी

चक्राधिपा देवी, ईश्वरो देवः, कं खं गं घं ङं चं छं जं झं ञं टं ठं इति द्वादशवर्णैर्भूषितं, बाणाऽऽख्यं लिङ्गं चात्रैव, एतस्य चिन्तनेन त्रिकाल-विषयकं ज्ञानं, दूराच्छ्रवणं, योगिनां सिद्धानां च सम्मेलनं सिध्यति।

(५) कण्ठदेशे पञ्चमं विशुद्धाऽऽख्यं पद्मं धूम्राभं वृत्ताऽऽकारेण यन्त्रेण युक्तं हं बीजलसितं, व्योम तत्त्वं, जीववासोऽत्रैव अणुपरिमितः कलिकाकारः, शाकिनी देवी, सदाशिवो देवः, अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः इति क्रमेण वर्णन्यासः, एतस्मिन् युक्त-चित्तो योगी त्रिकालदर्शी, रोगरहितः, सदा युवा, कृष्णकेशः, वीतमृत्युः सन् चिरं जीवति। एतदभ्यासी योगी यदि क्रुध्यति, सम्पूर्णं जगत् संचालयति, तं शमयितुं ब्रह्मादयोऽपि असमर्थाः भवन्ति।

(६) आज्ञानामकं षष्ठं चक्रं भ्रूमध्ये स्थितं शारदीयकमलसंकाशं प्रणवबीजेन युक्तं, मनसो वासोऽत्र, हाकिनी देवी, इतरलिङ्गम् अर्ध-नारीश्वरो देवः, हकारसकारयुक्तः, एतस्मिन् कृताभ्यासो योगी पूर्वजन्म-कृतानि कर्माणि स्मरति, दूरदर्शनं श्रवणं च भवति, मृतश्चेन्मोक्षलाभः। हाकिन्या ऊर्ध्वं त्रिकोणं, प्रणवो मनः इतरलिङ्गम्, निरालम्बया मुद्रया खेचरीति नाम्न्या धारणया परमाऽऽनन्दसुखाप्तिः, एतदुपरि सहस्राराख्यं पद्मम्। कुण्डलिन्या ब्रह्मपदं प्राप्य कुलाऽमृतं रसं निपीय पुनस्तस्याः प्रत्यावर्तनं कार्यम्। यथा—

पीत्वा दिव्यामृतौघं पुनरपि च विशेन् मध्यदेशं कुलस्य
चक्रे चक्रे क्रमेणाऽमृतरसविसरैस्तर्पयेत् कुण्डलीं ताम्॥

तथोक्तं श्रीशङ्कराचार्यैः—

सुधाधाराऽऽसारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा॥
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयम्
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि॥

इत्थं कुलाऽकुलयोर्विस्तारः धारणाध्यानविषयः।

—:०:—

## १२–नादाऽभ्यासवर्णनम् —

सामरस्याऽभिधेयात् परमतत्त्वसकाशात् ज्ञानक्रिययोः सिसृक्षावशात् प्रादुर्भावः ज्ञानक्रियोपाधिमत्योः शिवशक्तयोः प्रथमः समुल्लासः बिन्दुः, तस्मान्नादः, तस्माच्च क्रमेण सर्वा सृष्टिरिति सिद्धान्तः । स्थूलसूक्ष्मभेदेन षट्त्रिंशत्तत्त्वानि जायन्ते इत्यादि प्रस्तारः । अस्मिन् नादाभ्यासनाम्नि योगे नादाभ्यासेनैव परमतत्त्वसाक्षात्कारो मन्यते । स नादो द्विधा वर्णाऽऽत्मको ध्वन्यात्मको वा । वर्णात्ऽऽमकरूपेण विवृतस्य तस्य मन्त्राऽऽत्मकः परिणामः, यस्याऽभ्यासः मानसिकोपांशुवाचकभेदेन जपात्मकः प्रकारो, यस्येयता ग्रन्थेन उपदिष्टोऽपरो नादः, तस्य विधिरिदानीं प्रदृश्यते—योनिमुद्राऽभ्यासशीलस्य योगिनः सुषुम्णाऽन्तर्गतः प्राणो भवति, तेनाऽऽनन्दजनको नादः सहसाऽऽविर्भवति । तदुक्तम्—

आदौ मत्तालिमालागलपथविगलत्तारझंकारहारी
नादोऽसौ वंशिकांस्याऽनिलभरितलसद्वंशनिस्वानतुल्यः ॥
घण्टानादानुकारी तदनु जलनिधिध्वानधीरो गभीरः
गर्जत्पर्जन्यघोषः पर इह कुहरे वर्तते ब्रह्मनाड्याः ॥१॥

विजितो भवतीह तेन वायुः, सहजो यस्य समुत्थितप्रणादः ।
अणिमादिगुणा भवन्ति तस्याऽमितपुण्यस्य महासुखास्पदस्य ॥२॥
सुरराजतनूजवैरिरन्ध्रे विनिरुध्य स्वकराऽङ्गुलिद्वयेन ।
जलधेरिव धीरनादमन्तः प्रसवन्तं सहसा शृणोति मर्त्यः ॥३॥

(कर्णे–सुरराज इन्द्रः तस्य तनूजः अर्जुनः तस्य वैरी कर्णः)

परिभावयतोऽपि नादमेनं त्रिदशाऽधीशतनूजवैरिजातम् ।
सततं भवतीह तस्य जन्तोर्गुणसम्पत्तिरपेतकलमषस्य ॥४॥
शृङ्गाण्यङ्कुलिभिर्निरुध्य विधिवत् कोदण्डयोः पण्डितः
मध्ये बद्धमरुन्निरुध्य वृषभश्रेष्ठं च षष्ठेन्द्रियम् ॥
साक्षात्तत्क्षणमेव पश्यति शनैस्त्र्यन्तगीतं परम्
योगी पश्यति दिव्यरूपममलं ब्रह्माऽऽख्यशुभ्रं महः ॥५॥

—:०:—

**१३–नादसाधनरीतिः —**

नास्ति नादात् परो मन्त्रो, न देवः स्वात्मनः परः ।
नानुसन्धेः परा पूजा, नहि तृप्तेः परं सुखम् ।।

इति प्रमाणान्नादानुसन्धानस्य श्रैष्ठ्यं गम्यते । प्रथमं द्वे मुद्रे कर्णच्छिद्रमुद्रणार्थं निर्मापयितव्ये । तद्द्रव्याण्येवम्—कस्तूरिका एकरत्तिकापरिमिता, जायफलं द्विरत्तिकापरिमितम्, जाबित्री त्रिरत्तिका परिमिता, लवङ्गानि षट्रत्तिकापरिमितानि, एतत् सर्वं चूर्णीकृत्य जम्बुफलाऽऽकृत्या मुद्रानिर्माणं, तदनन्तरं पट्टसूत्रैः संग्रथ्य अभ्यासकाले कर्णयोर्धारणीये । सूर्योदयात् प्रागुत्थाय शौचादिकार्यं कृत्वा स्वस्थेन मनसा अभ्यासः कर्तव्यः । चिणीति प्रथमः, चिंचिणीति द्वितीयः, घंटानाद-स्तृतीयः, शङ्खनादश्चतुर्थः, पञ्चमस्तन्त्रीनादः, षष्ठस्तालनादः, सप्तमो वेणुनादः, अष्टमो मृदङ्गनादः, नवमो भेरीनादः, दशमो मेघनादः । मूलाधारादारम्य सहस्रारपर्यन्तं शुद्धस्फटिकसंकाशं नादस्वरूपं चैतन्याऽऽत्मकं ध्येयत्वेनाऽभिमतम् । हंसमन्त्रस्य अभ्यासः । अभ्यासकर्तुः शरीरोपरि दश प्रभावाश्चेत्थं भवन्ति ।

प्रथमे चिंचिणीगात्रं, द्वितीये गात्रभञ्जनम् ।
तृतीये खेदनं याति, चतुर्थे कम्पते शिरः ।।
पञ्चमे स्रवते तालु, षष्ठेऽमृतनिषेवणम् ।
सप्तमे गूढविज्ञानं, परा वाचा तथाऽष्टमे ।।
अदृश्यं नवमे देहं दिव्यं, चक्षुस्तथाऽमलम् ।
दशमे परमं ब्रह्म भवेद् ब्रह्मात्मसन्निधौ ।।
इति

योगेन स्तब्धछिन्नाऽऽदिदोषदुष्टा मन्त्राश्चैतन्या भवन्ति, सिद्धिश्चाऽऽसीदति । "जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" इत्यत्र पतञ्जलिना मन्त्रेण सिद्धयः प्रतिपादिताः । भोजेन मन्त्रसिद्धेरानुसङ्गिकं प्रतिपादितं तच्च सूत्रकारविरुद्धमेवाऽवगन्तव्यम् । योगो द्विविधः सिद्ध्यात्मको,

मोक्षाऽऽत्मकश्च, सिद्धिरूपो योगो लौकिकैश्वर्यप्रदः, तस्माद् विरक्त मोक्ष इति तत्त्वं लक्ष्यीकृत्य योगप्रवृत्तिः। योगसम्पन्न एव महाविद्यातत्त्व सम्यग् वेत्ति, अतो महाविद्यासाधने उपयुज्यते।

—:०:—

## १४–कुण्डमण्डपविधिः—

कर्मणः सिद्धौ साग्निकानामेवाऽधिकारः। ये च मुमुक्षवस्ते निष्कामतया देवताऽर्पणबुद्ध्या विहितं कर्म कुर्वन्तः सिद्धिं समियन्ति तदुक्तं गीतायाम्—

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः।

अग्निकार्ये कुण्डानामेव विधानं प्रधानम्। आदावतः कुण्डविधि कथ्यते—

विद्वेषे चाऽभिचारे च त्रिकोणं कुण्डमिष्यते।
द्विमेखलं कोणमुखं हस्तमात्रं तु सर्वतः॥
उच्चाटनं तु नैऋत्यां शत्रुपक्षस्य कारयेत्।
उत्सादनं तु वायव्यां देवानामपि कारयेत्॥
शत्रूणां तापने शस्तं योन्याऽऽख्यमग्निकोणगम्।
अर्धचन्द्रं च याम्यायां शत्रूणां मारणे स्थितम्॥
त्रिकोणं नैऋते कुण्डं रिपूणां व्याधिवर्धनम्।
दाहायाऽग्नौ च विद्वेषे कुण्डं पूर्णेन्दुसन्निभम्॥
चतुरस्रं तु कर्तव्यं द्वेषाऽऽदौ तु विचक्षणैः।
कुण्डं सुलक्षणं कृत्वा तत्र कार्याणि साधयेत्॥
चतुरस्रे भवेद् वश्यमाकर्षे च त्रिकोणकम्।
कर्षणे स्तम्भने देवि, विद्वेषं च त्रिकोणके॥
अथैवोच्चाटनं प्रोक्तं षट्कोणे मारणं स्मृतम्।
उदीच्यां पौष्टिके कुण्डं वारुण्यां शान्तिकाऽऽदिषु॥

उच्चाटे चाऽनिले कुण्डे याम्ये च मारणं भवेत् ।
मानहीनाऽऽदिकं दोषं नास्ति कुण्डेऽभिचारके ॥
शुभेषु स्युर्विवाहान्ताः क्रियास्ताः क्रूरकर्मणि ।
मारणान्ताः समुद्दिष्टा वह्न्यागमवेदिनः ॥
ततो राज्ञाऽतिविद्वांसमथर्वश्रुतिपारगम् ।
वहुभिर्द्रविणैर्वस्त्रैर्नानारत्नैर्विभूषणैः ॥
पूजयित्वा ततः पश्चाद् वृणुयाद् विधिना द्विजम् ।
वृतोऽप्युत्साहसंयुक्तः सर्वरक्षापरायणः ॥
यत्नतो मारणं कुर्याद् राज्ञः कर्म हितेच्छया ।
देशरक्षणधर्मेण न स्वयं पापभाग् भवेत् ॥

उक्तं च तन्त्रराजे—

दशास्थितिं च संवीक्ष्य कुर्यान् मारणमात्मवान् ।
अनवेक्ष्य कृतं कर्म स्वात्मानं हन्ति तत्क्षणात् ॥
ब्राह्मणं धार्मिकं भूपं वनितामास्तिकं नरम् ।
वदान्यं सदयं नित्यमभिचारे न योजयेत् ॥
योजयेद् यदि वैरेण प्रत्यगेनं निहन्ति तम् ।
अभिचारस्य विषयानाकर्णय वदामि ते ॥
पापिष्ठान् नास्तिकांश्चौरान् देवब्राह्मणनिन्दकान् ।
प्रजानां घातकान् सर्वक्लेशकर्मसु संस्थितान् ॥
क्षेत्रवित्तधनस्त्रीणामाहर्तारं कुलान्तकम् ।
निन्दकं समयानां च पिशुनं राजघातकम् ॥
विषाऽग्निक्षुरशस्त्राद्यैर्हिंसकं प्राणिनां सदा ।
नियोजयेन् मारणेषु कर्मस्वैतैर्न पातकी ॥
कृत्वाऽऽशु मारणं कर्म तदन्ते स्वधनार्धतः ।
पादतो वा गुरुं विप्रानाराध्य स्वेन निश्चया ॥
अभिषिञ्च्य ततो विद्यां जपेल् लक्षं हविष्यभुक् ।

**कुण्डदिङ्नियमः—**

शान्तिके पौष्टिके चैव होमः स्याद् योग्यसाधनैः ।
कार्यं प्राग्वदनेनाऽथ सौम्येन वदनेन वा ॥
आकृष्यै वायुकुण्डे च कोवेरीदिङ्मुखेन तु ।
नैऋतीदिङ्मुखस्तस्मिन् कुण्डे विद्वेषणे हुनेत् ॥
आग्नेयीदिङ्मुखस्त्वेतत्कुण्डे मारुतकेऽपिवा ।
उच्चाटने हुनेन् मन्त्री मारणे याम्यदिङ्मुखः ॥
जुहुयाद् याम्यकुण्डे तु मन्त्री तत्साधनैस्ततः ।
वज्रलाञ्छितकुण्डे तु ग्रहभूतनिवारणे ॥
वायव्यदिङ्मुखो वश्ये कुण्डे योन्याऽऽकृतौ हुनेत् ।
वज्रलाञ्छितकुण्डे तु स्तम्भे प्राग्वदनो हुनेत् ॥

होमद्रव्यादिकं बगलापटले षट्कर्मदीपिकोक्तविधाने कथितम्, स्रुक्स्रुवादि तथा होममुद्रादि प्रयोगानुकूलं ज्ञातव्यम् ।

**मण्डपकरणम्—**

अथ पूजागृहस्य पूर्वस्यां दिशि ईशाने कौवेर्यां वा चतुरस्रमण्डलं कुर्यात् । नवहस्तपरिमितं सप्त पञ्च वा तोरणादिशोभितं कार्यम् चतुर्द्वारम्, मध्ये अरत्निमात्रोन्नतां वेदिकां रचयेत् । अन्यपूर्वाऽऽद्यष्टदिक्षु चतुरस्रं योनिम् ( अश्वत्थपत्राऽऽकारम् ) अर्धचन्द्राऽऽकारं त्रिकोणं वृत्तं षट्कोणम् पद्माऽऽकारम् अष्टास्रं पूर्वदिशमारभ्य कुर्यात् । आचार्यकुण्डमध्ये वर्तुलं परे तु इन्द्रेशानयोर्मध्ये वृत्तं, वायव्ये पञ्चकोणम्, ईशकोणे मण्डलकोणं वा कुर्यात् ।

(१) प्रथमं प्राच्यग्रसूत्रमास्फाल्य तन्मध्ये हि तं धृत्वा तन्मानेन दक्षिणोत्तरदिक्षु सूत्रचतुष्टयमास्फालयेत् । एवं कृते चतुर्हस्तपादोपेतं समं चतुरस्रं मण्डलं भवति । एतकुण्डं पूर्वदिगान्तम् इदमेव चतुरस्रम् ।

(२) क्षेत्रे क्षिप्त्वा वहिरिह पुरो भूतभागेशमेकम्
कोणाऽर्धाऽर्धं सुनिशितमतिभ्रामयेत् संप्रगृह्य ॥
यावत् कोणं परमपि तथा सूत्रयुग्मस्य पातम्
मध्यात् कुर्याद् भवति तदिदं मन्मथावासकुण्डम् ॥१॥

इत्यादि कुण्डानां विस्तृतं विवरणं कुण्डार्ककुण्डरत्नावल्यादौ प्रतिपादितं, विस्तरभयादुपरम्यते । उक्तं च—

चतुरस्रं विप्राणां राज्ञामिह वर्तुलं कुण्डम् ।
वणिजामर्धशशाङ्काऽऽकारं त्र्यस्रं तु शूद्राणाम् ॥

चतुरस्रं सर्वेषां प्रशस्तमिति केचिदाहुराचार्याः ।

सर्वप्रधानत्वाच्चतुरस्रमेवोद्धृतमत्र ।

—:०:—

## १५ कुण्डविशेषप्रयोगः ( स्थण्डिलम् )

उत्तमं कुण्डहोमं च स्थण्डिलं चैव मध्यमम् ।
स्थण्डिलेन विना होमं निष्फलं भवति ध्रुवम् ॥
षट्कोणं चाष्टकोणं च चतुष्कोणं च पुत्रक ।
त्रिविधं स्थण्डिलं चैव वक्ष्येऽहं तु कुमारक ॥
लक्ष्मीः शान्तिस्तथा पुष्टिर्विद्या विघ्ननिवारणी ।
चतुरस्रे हुनेत् कुण्डे तत्र तत्प्रतिपादिते ॥
वशीकरणसम्मोहे वाणिज्ये द्रव्यसंग्रहे ।
कीर्तिकामस्तु जुहुयाद् गुरुमार्गेण बुद्धिमान् ॥
विद्वेषणे तु जुहुयाद् वर्तुले कुण्डमध्यमे ।
उच्चाटने तु जुहुयात् षट्कोणाख्ये च कुण्डके ॥
मारणे चाष्टकुण्डे च तत्तत्कर्मानुसारतः ।
तत्तद्द्रव्येण जुहुयात् तत्तन्मन्त्रेण मन्त्रवित् ॥
रक्षार्थं स्थण्डिले होमः षट्कर्मसु कुमारक ।
जुहुयाच्छान्तिवश्ये च स्थण्डिले चतुरस्रके ॥
विद्वेषे स्तम्भने चैव जुहुयादष्टकोणके ।
उच्चाटने च वै पुत्र षट्कोणेषु विधीयते ॥
प्रादेशं शतहोमं च अरत्निं च सहस्रकम् ।
हस्तं चाऽयुतहोमे च द्विहस्तं लक्षहोमके ॥

गुणहस्तं कोटिहोमे कुण्डं निम्नोन्नतं सुत ।
स्थण्डिलस्य प्रवक्ष्यामि तान्त्रिकोक्तं च लक्षणम् ॥
अरत्निर्हस्तमात्रं तु द्विरत्निश्च द्विहस्तकम् ।
शतं सहस्रमयुतं लक्षहोमे त्वयं विधिः ॥
सर्वत्रैवोन्नतं पुत्र प्रादेशं स्थण्डिलं स्मतम् ।
लक्षणं स्थण्डिले कुण्डे न ज्ञात्वा निष्फलं भवेत् ॥
शान्तिवश्यस्तम्भनानि विद्वेषोच्चाने तया ।
मारणानि प्रशंसन्ति षट्कर्माणि मनीषिणः ॥
नानारोगैः कृत्रिमैश्च नानाचेष्टाक्रमेण च ।
विषभूतप्रयोगेषु निरासः शान्तिरीरिता ॥
वश्यं जनानां सर्वेषां वात्सल्यं हृद्गतं स्मरेत् ।
स्तम्भनं रोधनं पुत्र सर्वकर्मसु निश्चितम् ॥
मित्रस्य कलहोत्पत्तिर्विद्वेषणमुदाहृतम् ।
बलबुद्धिभ्रमेणोक्तमुच्चाटनमिदं भुवि ॥
प्राणिनां प्राणहरणं मारणं समुदाहृतम् ।
प्रत्येकमेनं वक्ष्यामि होमयागं सुनिश्चितम् ॥
दूर्वाहोमं त्रिमध्वक्तं जुहुयादयुतत्रयम् ।
रोगकृत्याग्रहाऽऽदिभ्यः सद्यः शान्तिकरं भवेत् ॥
स्यमन्तकुसुमैराज्ययुक्तं वाणाऽयुतं तथा ।
जुहुयात् निशीथकाले वश्यं सम्मोहनं भवेत् ॥
बिभीतकसमिद्भिर्वा करञ्जबीजमेव च ।
नेत्राऽयुतं हुनेत् पुत्र स्तम्भनं परमं मतम् ॥
निम्बाऽर्कपत्रहोमेन निम्बतैलेन मिश्रितम् ।
नेत्राऽयुतेन विद्वेषं भवेत् पाषाणयोरपि ॥
उलूककाकयोः पत्रं वाणाऽयुतमनन्यधीः ।
जुहुयात् नग्नतो रात्रौ भवेदुच्चाटनं सुत ॥
तिलतैलेन संसिक्तं शाल्मलीकुसुमं तथा ।

लक्षमेकं हुनेद् रात्रौ प्रेताऽग्नौ प्रेतकानने ॥
नग्नः प्रेतमुखे भूमौ प्रेतकाष्ठं च बुद्धिमान् ।
मृकण्डुसहशस्याऽपि मारणं भवति ध्रुवम् ॥

षट् कर्मणां विशेषविधानम्—

वश्याऽऽकर्षणकर्माणि वसन्ते साधयेत् प्रिये ।
ग्रीष्मे विद्वेषणं कुर्यात्, प्रावृषि स्तम्भनं तथा ॥
शिशिरे मारणं चैव, शान्तिकं शरदि स्मृतम् ।
हेमन्ते पौष्टिकं कुर्यात् चतुःकर्मविशारदः ॥
वसन्तश्चैव पूर्वाह्णो, ग्रीष्मो मध्याह्न उच्यते ।
वर्षा ज्ञेया पराह्णे तु, प्रदोषे शिशिरः स्मृतः ॥
अर्धरात्रौ शरत्काल, ऊषा हेमन्त उच्यते ।
ऋतवः कथिता ह्येते सर्वे येन क्रमेण तु ॥
तद्विहीना न सिध्यन्ति प्रयत्नेनाऽपि कुर्वतः ।
अनन्यकारणात् ते हि ध्रुवं सिद्धयन्ति नाऽन्यथा ॥

तिथ्यादिनिर्णयः—

सप्तमी, तृतीया, पञ्चमी, द्वितीया तथा बुधेज्यकाव्यसौमाश्च—शान्तौ, गुरुचन्द्रयुता षष्ठी, चतुर्थी, त्रयोदशी, नवमी—पौष्टिके,—(धनजनानां वर्धनं पुष्टिः) अष्टमी दशम्यपि मतान्तरे। दशमी एकादशी भानुशुक्रदिने आकर्षणम् । अमावास्या, नवमी, प्रतिपत्, पौर्णमासी, मन्दभानुयुक्ता सती विद्वेषे। मन्दयुक्ता चतुर्दशी, अष्टमी उच्चाटे। चतुर्दशी, कृष्णपक्षीया अष्टमी, अमावास्या—मारणे। बुधचन्द्र-दिनोपेता पञ्चमी, दशमी, पौर्णमासी—स्तम्भने। शुभोदये शुभानि, अशुमोदयेऽशुभानि कुर्यात् । रौद्रकर्माणि रिक्तार्के, मृत्युयोगे च मारणमिति ।

—:०:—

## १६—माहेन्द्रवारुणाऽऽदिनिर्णयः—

स्तम्भनं मोहनं वश्यं माहेन्द्रे वारुणे कार्यम् । ज्येष्ठा, उत्तराषाढा, अनुराधा, रोहिणी—एतन् माहेन्द्रं मण्डलम् । उत्तरा, भाद्रपदा. मूलं, शतभिषा, पूर्वा भाद्रपदा, आश्लेषा—वारुणं मण्डलम् । विद्वेषोच्चाटने वायुं वह्नियोगे साधयेत् । अश्विनी, भरणी, आर्द्रा, धनिष्ठा, श्रवणा, मघा, विशाखा, कृत्तिका, पूर्वा फाल्गुनी, रेवती—वायुमण्डलसंस्थाः । स्वाती, हस्त, मृग, चित्रा, उत्तरा फाल्गुनी, पुष्य, पुनर्वसु—वह्निसंस्थाः ।

**स्वरज्ञानम्**—

विद्विषां मारणं, स्तम्भं, मोहनोच्चाटनं, वशम् ।
सूर्यनाड्यामियात् सिद्धिमत्युग्रं कर्म चाऽखिलम् ॥

तथा—

पौष्टिकं, शान्तिकं, प्रीतिमौषधं च रसायनम् ।
योगाऽभ्यासाऽऽदिकं कर्म सर्वं साध्यं विधौः स्वरे ॥

**भूतोदये षट्कर्मनियमः**—

जलं शान्तिविधौ शस्तं, वश्ये वह्निरुदीरितः ।
स्तम्भने पृथिवी शस्ता, विद्वेषे व्योम कीर्तितम् ॥
उच्चाटे च स्मृतो वायुर्भूम्यग्नी मारणे मतौ ।

मण्डलसहितं पञ्चतत्त्वानां चिन्तनं कर्तव्यम् ।

विशेषः—

परचक्रभयादौ वा तीव्ररूपे महाभये ।
न कालनियमो गम्यः प्रयोगाणां कदाचन ॥

**लग्नोदये कर्तव्यता**—

कुर्याच्च स्तम्भनं कर्म हर्यक्षे वृश्चिकोदये ।
द्वेषोच्चाटादिकं कर्म कुलीरे वा तुलोदये ॥
मेषकन्याधनुर्मीने वश्यशान्तिकपौष्टिकम् ।
मारणोच्चाटने चासौ रिपुभेदविनिग्रहे ॥

**दिङ्नियमः—**

पूर्वे स्तम्भनमुच्चाटमग्नौ सर्वाऽभिचारकम् ।
याम्ये रक्षसि विद्वेषः शान्तिर्वारुणवायवे ॥
कुलोत्सादं मरुद्भागे यक्षे कलहविग्रहौ ।
कुर्वीत नोदितं कर्म यच्चाऽन्यद् ब्रह्मणः पदे ॥

**षट्कर्मणां वर्णभेदः—**

वश्ये चाऽऽकर्षणे क्षोभे रक्तवर्णं विचिन्तयेत् ।
पुष्टौ कर्बुरकं शान्तौ तथा चाऽऽप्यायने सितम् ॥
पीतं स्तम्भनकार्ये हि धूम्रमुच्चाटने सदा ।
उन्मादे शक्रकीटाभं कृष्णवर्णं च मारणे ॥

इति संग्रहः ।

**दिङ्नियमविशेषः—**

जपेत् पूर्वमुखे वश्ये दक्षिणं चाऽभिचारिकम् ।
पश्चिमं धनदं विद्याद् उत्तरं शान्तिकं भवेत् ॥

**जपाङ्गुलिनियमः—**

शान्त्यादिस्तम्भकार्येषु वृद्धाग्रेण च चालयेत् ।
अङ्गुष्ठाऽनामिकाभ्यां तु जपेदाकर्षणे मनुम् ॥
अङ्गुठतर्जनीभ्यां तु विद्वेषोच्चाटयोर्जपेत् ।
कनिष्ठाऽङ्गुष्ठयोगेन मारणे जप ईरितः ॥

**हुंफडादि योजनाप्रकारः—**

शान्तिपुष्टिवशद्वेषाऽऽकृष्टयुच्चाटनमारणे ।
स्वाहा, स्वधा, वषट्, हुं च वौषट्, फट् योजयेत् क्रमात् ॥

**इति माहेन्द्रवारुणादिनिर्णयः ।**

इति श्री बगलामुखीरहस्ये दीक्षादिविधानात्मकः
द्वितीयः परिच्छेदः ।

—:o:—

# अथ तृतीयः परिच्छेदः

## अथ रुद्रयामलोक्तबृहत्पूजापद्धतिः

**श्रीगणेशाय नमः**

नत्वा पीताम्बरां देवीं भुक्तिमुक्तिप्रदायिनीम् ।
साधकानां हितार्थाय पद्धतिर्लिख्यते मया ।।

तत्र ब्राह्मे मुहूर्ते शयनाद् दक्षिणाङ्गेन समुत्थाय रात्रिवस्त्रादिकं परित्यज्य शुचिवस्त्रादिकं संधार्य बद्धपद्मासनः श्रीगुरुं ध्यायेत्, स्वशिरसि सहस्रदलकमलकर्णिकायां श्वेतवस्त्राऽऽभरणभूषितं श्रीगुरुं वराऽभयज्ञान-मुद्रापुस्तककरं, चन्द्रकान्तनिभं, सुप्रसन्नं श्वेतचन्दनपुष्पालङ्कृतं, वामाङ्क-गतया रक्तवर्णया रक्तवस्त्राभरणगन्धमाल्यविभूषितया वामकरधृतलीला-कमलया देव्या दक्षिणभुजेनाऽऽलिङ्गितं, त्रिनेत्रं, शान्तम् अन्तर्मुखं, शिवरूपिणम्, वामतश्चरणाऽरविन्दस्रुतपीयूषधारया स्वात्मानमाप्लुतं विभाव्य, तेन सम्यक् संचिन्त्य च, ऐं अमुकानन्दनाथश्रीपादुकां पूजयामि नमः संकेतनाम्ना वा गुरुभ्यो नमः मानसोपचारैः सम्पूज्य, लं पृथिव्याऽऽत्मकं गन्धं समर्पयामि, हं आकाशात्मकं पुष्पं समर्पयामि, यं वाय्वात्मकं धूपं समर्पयामि, रं वह्न्यात्मकं दीपं समर्पयामि, वं अमृतात्मकं नैवेद्यं समर्पयामि, सं सोमात्मकं ताम्बूलं समर्पयामि, प्रणम्य, ऐं इति वाग्बीजम् अष्टोत्तरशतं जप्त्वा समर्प्य स्तुयात्—

अखण्डमण्डलाऽऽकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।।१।।
नमोऽस्तु गुरवे तस्मै स्वेष्टदेवस्वरूपिणे ।
यस्य वाक् सकलं हन्ति विषं संसारसंज्ञकम् ।।२।।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः ।।३।।

अज्ञानतिमिराऽन्धस्य ज्ञानाऽञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥४॥

ततः स्वहृदि लयं भावयेत् । ततो मूलाऽऽधारादिब्रह्मरन्ध्राऽन्तं, सहस्रसूर्यप्रभं, सुषुम्णाऽन्तर्गतं, दण्डनिभं मूलमन्त्रं ध्यात्वा, तत्तेजोव्याप्तं स्वशिरः संचिन्त्य, मूलेन प्राणायामत्रयं कृत्वा, ऋष्यादिन्यासं च विधाय, स्वहृदि पीताम्बरां ध्यात्वा प्रणमेत् । (अधिकं त्वनया रीत्या कर्तव्यम् ।) गुरुस्मरणाऽनन्तरं तदनुज्ञां गृहीत्वा, मूलाधारे कुण्डलिनीरूपां स्वेष्टदेवतां, तडित्कोटिप्रभाम्, विसतन्तुतनीयसीं, प्रसुप्तभुजगाऽऽकारां, सार्धत्रिवलयोपेतां ध्यात्वा, 'हूं' इति चैतन्यं विधाय, 'हं सः' इति मन्त्रेणोत्थाप्य सुषुम्णा-नाडीमार्गेण षट् चक्राणि भेदयित्वा, सहस्रदलकमलस्थितपरमशिवे संयोज्य, स्वेष्टदेवतारूपेण परिणतां परमशिवेन संगमय्य ध्यायन्, यथाशक्ति प्रजप्य, समर्प्य, प्रणम्य, पुनः कुण्डलिनीरूपेण परशिवान् निःसार्य, तत्संगमाऽमृतलोलीभूतां "सोहम्" इति मन्त्रेण मूलाधारे समानयेत् ।

प्रकाशमानां प्रथमप्रयाणे, प्रतिप्रयाणेऽप्यमृतायमानाम् ।
अन्तःपदव्यामनुसंचरन्तीमानन्दरूपाममलां प्रपद्ये ॥

इति नत्वा स्वतेजसा पूर्णं शरीरं भावयेत् । ततः स्वगुरुदेवताऽऽत्म-नामैक्यं विभाव्य देवं स्तुत्वा —

प्रातःप्रभृति सायाऽन्तं सायादि प्रातरन्ततः ।
यत् करोमि महेशानि तदस्तु तव पूजनम् ॥

इति निजं कृत्यं समर्पयेत् । अथ सहजसिद्धं गुरूपदेशेन ज्ञातम् अजपाजपं कुर्यात् । यथा—

ॐ अस्य श्री अजपामन्त्रस्य हंस ऋषिः, अव्यक्ता गायत्री छन्दः, हंसो देवता, हं बीजं, सः शक्तिः, सोऽहं कीलकम्, मोक्षार्थे जपे विनियोगः । ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः इत्यनेन षडङ्गन्यासः । भूर्भुवः स्वरोमिति दिग्बन्धनं कृत्वा ध्यायेत् ।

अग्नीसोमगुरुद्वयप्रणवकं विन्दुत्रिनेत्रोज्ज्वलम्
भास्वद्रूपमुखं शिवाङ्घ्रियुगलं पार्श्वस्थसूर्यानिलम् ।।
उद्यद्भास्करकोटिकोटिसदृशं हंसं जगद्व्यापिनम्
शब्दब्रह्ममयं हृदम्बुजपरे नीडे सदा संस्मरेत् ।।

मानसोपचारैः सम्पूज्य

"ॐ ह्रीं हं सः सोऽहं स्वाहा ।
हंसहंसाय विद्महे सोऽहं हंसाय धीमहि ।।
तन्नो हंसः प्रचोदयात् "

इत्यात्माष्टाक्षरं गायत्रीं च यथाशक्ति जप्त्वा पूर्वदिनकृतमजपाजपं निवेदयेत् । २१६०० इति सर्वसंख्या ।

**निवेदनक्रमः—**

वं शं षं सं वर्णयुते आधारपद्मे विघ्नराजस्तस्मै ६०० षट् शतम् निवेदयेत्, बं भं मं यं रं लं युक्त स्वाधिष्ठानगतं ब्रह्मणे ६००० षट् सहस्रं निवेदयेत्, डादिफान्तवर्णैर्मणिपूरगतं हरये ६००० षट् सहस्रम् निवेदयेत्, कादिठान्तैर्वर्णैर्युक्ते पद्मेऽनाहते शिवाय ६००० षट् सहस्रम् निवेदयेत्, विशुद्धचक्रेऽपि एवमेव जीवाय १००० एकसहस्रम् निवेदयेत्, आज्ञाचक्रे गुरवे १००० एकसहस्रं निवेदयेत्, ब्रह्मरन्ध्रे परमात्मने १००० एक-सहस्रं समर्प्य ध्यायेत् ।

हंसो गणेशो विधिरेव हंसो हंसो हरिर्हंसमयश्च शम्भुः ।
हंसो हि जीवो गुरुरेव हंसः हंसो ममात्मा परमात्महंसः ।।१।।
देहो देवालयः प्रोक्तो जीवो नाम सदाशिवः ।
त्यजेदज्ञाननिर्माल्यं सोहंभावेन पूजयेत् ।।२।।
अहं देवो न चाऽन्योऽस्मि ब्रह्मैवाऽहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहमात्मानमिति भावयेत् ।।३।।
हकारेण वहिर्याति सकारेण विशेत् पुनः ।
हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।।४।।

## प्रार्थना

त्रैलोक्यचैतन्यमयादिदेवि, पीताम्बरे त्वच्छरणाऽऽज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥१॥
संसारयात्रामनुवर्तमानं, त्वदाज्ञया शाङ्करि पीतवस्त्रे ।
संसारदावाग्निभयप्रमादात् रक्षां कुरु त्वं करुणार्णवेशि ॥२॥
जानामि धर्मं न च मे प्रवृत्तिः जानाम्यधर्मं न च मे निवृत्तिः ।
कयाऽपि देव्या च हृदिस्थयाऽहं यथा नियुक्तोऽस्मि तथा करोमि ॥३॥

इति सम्प्रार्थ्य देव्याज्ञामादाय—

समुद्रमेखले देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

इति भूमिं सम्प्रार्थ्य श्वासानुसारं तस्यां पादौ निधाय पदे पदे फट् मन्त्रं स्मरन् नैऋत्यां दूरं गत्वा

उतिष्ठन्त्वृषयो देवा गन्धर्वा यक्षराक्षसाः ।
परित्यजन्त्विदं स्थानं मूत्रोत्सर्गं करोम्यहम् ॥

इत्यनेन मन्त्रपूर्वकं यथावच्छौचं विधाय, ततः चतुर्दश गण्डूषाः, आचमनकं च विधाय,'क्लीं कामदेवाय सर्वजनप्रियाय नमः'' इति दन्तधावनं कृत्वा, मूलेन मुखं प्रक्षाल्य स्नानार्थं गच्छेत् ।

स्नानविधिः—

तीर्थाद् वहिः कटिशौचं विधाय, स्वगृह्योक्तविधिना स्नात्वा, स्नानान्तर्गततर्पणाऽन्ते अस्त्रेण मृत्तिकामादाय, अस्त्रेणाऽभिमन्त्र्य, मूलेन मूर्धाऽऽदिपादान्तं विलिप्य, तीर्थजलं प्रणम्य, त्रिर्निमज्योन्मज्य, देशकालौ संकीर्त्य, 'श्रीपीताम्बराप्रीत्यर्थं मन्त्रस्नानमहं करिष्ये,' इति संकल्प्य, मूलेन प्राणायामत्रयं कृत्वा, ऋष्यादिषडङ्गन्यासांश्च विधाय स्वपुरतश्चतुरस्त्रे मण्डले

"गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥"

इत्यङ्कुशमुद्रया सूर्यमण्डलात् तीर्थमावाह्य, 'वं' इति धेनुमुद्रयाऽमृतीकृत्य, 'हूँ' इत्यवगुण्ठ्य, फडिति संरक्ष्य, मूलेन एकादशधाऽभिमन्त्र्य, तत्र श्रीपीताम्बरां ध्वात्वा जलमयैरुपचारैः सम्पूज्य, मूलेनाऽष्टवारमभिमन्त्र्य, मूलमन्त्रं जपेत्। हृदि पीताम्बरां स्मरन् त्रिर्निमज्योन्मज्य, स्वशिरसि कुम्भमुद्रया त्रिरभिषिञ्च्य मूलेन, स्वाहाऽन्तेन त्रिराचम्य, मूलेन त्रिःसन्तर्प्य, सूर्यमण्डले विसृज्य गृहेन्दुम्, उदकेन स्नात्वा, मूलेन प्राणायामत्रयं ऋष्यादिषडङ्गन्यासांश्च विधाय, शुद्धोदकेनाऽङ्कुशमुद्रया रवेस्तीर्थान्यावाह्य, मूलेनाऽष्टवारमभिमन्त्र्य, स्वशिरसि कुम्भमुद्रया मूलेन त्रिरभिषिञ्च्य, "ऋतं च सत्यं चेति" त्रिरघमर्षणं कृत्वा, मूलेन त्रिराचम्य, तदनन्तरं धौते वाससी परिधाय, द्वौ करौ च मृद्भिः प्रक्षाल्य, आचम्य, मूलाऽभिमन्त्रितं तिलकं कृत्वा, सर्वकर्माङ्गभूतं त्रिपुण्ड्रं भस्मना कृत्वा, यथाविधि वैदिकीं सन्ध्यां कुर्यात्, अन्ते तान्त्रिकीं च।

तत्र मूलेन ऐं आत्मतत्त्वाय स्वाहा, ऐं विद्यातत्त्वाय स्वाहा, ऐं शिवतत्त्वाय स्वाहा, इति त्रिराचम्य, मूलेन शिखां बद्ध्वा, मूलेनैव प्राणायामत्रयं कृत्वा, मूलमन्त्रस्य ऋष्यादिन्यासं षडङ्गं च विन्यस्य, स्वपुरतः पात्रं जलेनाऽऽपूर्य, धेनुमुद्रया जलममृतीकृत्य, मूलेनाऽष्टवारमभिमन्त्र्य, त्रिःप्रोक्ष्य, सूर्यमण्डले श्रीपीताम्बरां ध्यात्वा, दक्षिणहस्ते जलमादाय वामकरेण च स्पृशन्, लं वं रं यं हं इति वीजैः सप्ताऽभिमन्त्र्य, मूलेन च त्रिरभिमन्त्र्य, तज्जलं वामकरे निधाय, तद्गलितविन्दुभिर्वैदिकमूलमन्त्रेण स्वशिरसि त्रिःप्रोक्ष्य, अवशिष्टं वामकरस्थं जलं वामनासासमीपमानीय, तेजोमयं वामनासारन्ध्रेण स्वदेहान्तःप्रविष्टं ध्यात्वा, तेन जलेन स्वदेहान्तःस्थं सकलकलुषं प्रक्षाल्य, कृष्णवर्णं तज्जलं दक्षिणनासारन्ध्रेण निर्गतं विभाव्य, दक्षिणकरेणाऽऽदाय, स्ववामभागे वज्रशिलां ध्यात्वा "ॐ श्लीं पशु हुं फट्" इति पातास्त्रेण तस्यामास्फाल्य, हस्तौ प्रक्षाल्य, मूलमन्त्रेण त्रिराचम्य, अञ्जलिना जलमादायोत्थाय, वक्ष्यमाणपीताम्बरागायत्रीमुच्चार्य, 'श्रीपीताम्बरे एष तेऽर्घ्यः स्वाहा' इति त्रिरर्घ्यं सूर्याऽभिमुख

प्रक्षिपेत् । वैदिकमूलान्ते श्रीपीताम्बरां तर्पयामि नमः इति त्रिःसन्तर्प्य, पुनः प्राणायामऋष्यादिकरषडङ्गन्यासं विधाय सूर्यमण्डले देवीं ध्यायेत् ।

"ॐ कुलकुमार्यै विद्महे पीताम्बरायै धीमहि ।
तन्नो बगला प्रचोदयात् ।।"

इति गायन्त्रीं यथाशक्ति मूलमष्टोत्तरशतं जप्त्वा, समर्प्य, प्रणम्य, सूर्यमण्डलां देवीं स्वहृदयाद् विसृज्य श्रीगुरुं प्रणमेद्, इति तान्त्रिकसन्ध्या कालत्रये कर्तव्या । इति तान्त्रिकसन्ध्या ।

अथ तर्पणम्—

पूर्वाभिमुखः ॐ देवाँस्तर्पयामि, उत्तराभिमुखः कण्ठलम्बितयज्ञोपवीतः ॐ ऋषींस्तर्पयामि, दक्षिणाभिमुखः पितॄंस्तर्पयामि, तथा ॐ गुरुं तर्पयामि, ॐ परमगुरुं तर्पयामि ॐ परापरगुरुं तर्पयामि, ॐ परमेष्ठिगुरुं तर्पयामि, इति मूलमुच्चार्य श्रीपीताम्बरां तर्पयामि नमः, इत्यष्टोत्तरशतं तदर्धमष्टविंशतिवारं वा श्रीपीताम्बरामुखकमले परमामृतबुद्ध्या जलैः सन्तर्प्य, ततः आवरणदेवताम् एकैकाऽञ्जलिना सन्तर्प्य, देवीं स्वहृदयात् सूर्यमण्डले विसृज्य, गुर्वादीन् नमस्कृत्य, शुद्धोदकपात्रं, पूर्णं कृत्वा आदाय, हृदि स्वेष्टदेवतां स्मरन् मौनी स्वपादमात्रदृष्टिः सन् स्तोत्रादिकं पठन् गृहमागच्छेत् । ततो द्वारस्थितं स्वपापं स्मरेत् ।

ॐ देवि त्वं प्रकृत्याऽचिन्त्ये पापाऽऽक्रान्तमभून् मम ।
तन्निःसारय चित्तान् मे पापं फट् फट् च ते नमः ।।
सूर्यः सोमो यमः कालो महाभूतानि पञ्च च ।
एते शुभाऽशुभस्येह कर्मणो नव साक्षिणः ।।

इति पठित्वा अस्त्रमन्त्रेण क्रोधदृष्टया पार्श्वद्वयमूर्ध्वमधश्च विलोक्य, सुमनो भूत्वा गृहान्ते प्रविश्याऽङ्गणे स्थित्वा, पादौ प्रक्षाल्य चाऽऽचम्य, नेत्राभ्यामपमृज्य ह्लीं आधारशक्तिकमलासनाय नमः इति सम्पूज्य, तत्र प्राङ्मुखः स्वस्तिकाद्यासनेनोपविश्य, सूर्यमन्त्रेण प्राणायामत्रयं कृत्वा, सूर्यमण्डलस्य ऋष्यादिकरषडङ्गं विन्यस्य, यथा वा—शिरसि अजर्षये

नमः, मुखे गायत्रीछन्दसे नमः, हृदये श्रीसूर्यदैवतायै नमः, इति संचिन्त्य ह्रां अङ्गुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां नमः, ह्रूं मध्यमाभ्यां नमः ह्रैं अनामिकाभ्यां नमः, ह्रौं कनिष्ठिकाभ्यां नमः, ह्रः करतलकर पृष्ठाभ्यां नमः। एवं हृदयादिन्यासः।

एवं विन्यस्य ध्यायेत्—

"रक्ताम्बुजासनमशेषगुणैकसिन्धुं, भानुं सहस्रजगतामधिपं भजामि।
पद्मद्वयाऽभयवरान् दधतं कराब्जं माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम्।

एवं सूर्यमण्डले साङ्गावरणं ध्यात्वा सम्पूज्य, स्वपुरतः चतुरस्रवृत्त त्रिकोणात्मकं मण्डलं कृत्वा सम्पूज्य, तत्र प्रस्थग्राहि ताम्रपत्रं साधारं विधाय, सूर्यमन्त्रेणाऽऽपूर्य, तिल–यव–सर्षप–श्यामाक–कुशाग्रं गन्धाक्षत रक्तपुष्पाणि, रक्तचन्दनं च निःक्षिप्य कुशैः कराभ्यां च तत्पात्रमाच्छादय ॐ ह्रां ह्रीं सः इति सूर्यत्र्यक्षरमन्त्रेणाऽष्टोत्तरशतेनाऽभिमन्त्र्य, जानुभ्या मवनीं गतः समन्त्रकराभ्यां समग्रमुत्तोल्य सूर्यं निजेष्टदेवताया अभेदे ध्यायन्. 'ॐ ह्रां ह्रीं हं सः" सग्रहराशिनक्षत्रयोगकरणपरिवृत मनःस्थि श्रीसूर्य एष तेऽर्घ्यः स्वाहा, इति सूर्यायाऽर्घ्यं दत्त्वा तदर्धाम्बु आप्लुत सूर्यं ध्यायन् तन्मन्त्रं यथाशक्ति जप्त्वा, सूर्यं स्तुत्वा प्रणमेत् ततो धेनुमुद्रया जलममृतीकृत्य तेन जलेन पूजामण्डपपश्चिमद्वारं प्रोक्ष्य द्वारस्योर्ध्वशाखायां मध्ये ॐ विघ्नराजाय नमः, तद्दक्षिणे महालक्ष्म्यै नमः वामे सरस्वत्यै नमः, पुनर्मण्डपद्वारं श्रियै नमः, द्वारस्य वामदक्षिणयो शाखयोः गं गणपतये नमः, क्षं क्षेत्रपालाय नमः, शं शंखनिधिवसुधाराभ्यां नमः, पं पद्मनिधिवसुमतीभ्यां नमः, मां मायाशक्तिकायै नमः, चि चिच्छक्त्यै नमः, गं गङ्गायै नमः, यं यमुनायै नमः, धां धात्र्यै नमः इति द्वन्द्वक्रमेणाऽधीशं सम्पूज्य, अधः देहल्यै नमः, तस्याः वामदक्षिणयो ब्रां ब्राह्म्यै नमः, मां माहेश्वर्यै नमः, इति द्वारपालिके सम्पूज्य द्वारपार्श्वयोः कौं कुमार्यै नमः, वैं वैष्णव्यै नमः, पूर्वद्वारमभ्युक्ष्य, विघ्नादि देहल्यन्तं सम्पूज्य, पार्श्वयोः वां वाराह्यै नमः, इं इन्द्राण्यै नमः इति द्वारपालिके सम्पूज्य, दक्षिणद्वारमभ्युक्षणादिदेहल्यतं सम्पूज्य, चां चामुण्डा

नमः, मां महालक्ष्म्यै नमः, इति द्वारपालिके सम्पूज्य, पुनः पश्चिमद्वारे अस्त्रमन्त्रेण तालत्रयं दत्त्वा द्वारमुद्घाट्य, सर्षपाऽक्षतकुशभस्मकुसुमान्यादाय अस्त्रमन्त्रेण समभिमन्त्र्य—

"अपक्रामन्तु भूतानि पिशाचाः प्रेतगुह्यकाः।
ये चाऽन्ये निवसन्त्यन्ये देवास्ते भुवि संस्थिताः॥
अपसर्पन्तु ते भूता, ये भूता भूमिसंस्थिताः।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥

इत्यन्तेऽस्त्रमन्त्रं जपन् नाराचमुद्रयाऽन्तः प्रक्षिप्य, तस्मान् निर्गच्छतां विघ्नानां वामाङ्गसंकोणमार्गं दत्वा उक्ताऽस्त्रमन्त्रेण वामपार्ष्णिघातत्रये-णोर्भो अनूर्ध्वोर्ध्वं तालत्रयेणाऽन्तरिक्षगतिमदृष्टयाऽवलोकनेन दिव्यान् विघ्नान् उत्सार्य वामपादपुरःसरं देहलीमुल्लङ्घ्य, अन्तःप्रविश्य, निर्ऋ-तिकोणे वायुपुरुषाय नमः, तत्रैव वास्त्वधीश्वराय नमः, ब्रह्मणे नमः, इति सम्पूज्य, मण्डपस्येशानकोणे रक्तवर्णाय रक्तद्वादशशक्तिसहितायेशानाय नमः इति सम्पूज्य, भैरवाऽनुज्ञां गृह्णीयात्।

अतितीक्ष्ण महाकाय कल्पाऽन्तदहनोपम।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि॥

इति भैरवाज्ञां गृहीत्वा आसनं कर्त्तव्यम्। ॐ अस्य श्री आसनमन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसने विनियोगः।

ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥

इति पृथिवीं सम्प्रार्थ्य स्वाऽऽसनस्थानं मूलेन वीक्ष्य, अस्त्रेण प्रोक्ष्य, तैरेव कुशैः सन्त्यज्य, कवचेनाऽभ्युक्ष्य, तत्र मण्डूकादिस्वर्णवेदिकादेवताभ्यो नमः इति सम्पूज्य, तत्रेदं चैलाजिनकुशोत्तरं स्वासनमास्तीर्य, मूलेनाऽभ्युक्ष्य, ह्रीं आधारशक्तिकमलासनाय नमः इत्यासनं सम्पूज्य, तत्र प्राङ्मुख उदङ्मुखो वोपविश्य आसनस्य स्वदक्षिणाऽग्रकोणादिप्राग्दाक्षिण्येन गं गणपतये नमः, दुं दुर्गायै नमः, सं सरस्वत्यै नमः, क्षं क्षेत्रपालाय नमः,

इति सम्पूज्य, पूजाद्रव्याणि स्वदक्षिणभागे विधाय, "ह्रां ह्रूं ह्रं फट्" इति मन्त्रं स्मरन् दिव्यदृष्ट्या विलोक्य, वामे शुद्धोदकपूर्णकुम्भं ग्रां इति वामपाणिना संस्पृश्य दक्षिणकराऽङ्गुल्यग्रेण क्षौं इति कुम्भस्थं जलं स्पृशन् रं हं इति दीपशिखां स्पृष्ट्वा, हस्तौ प्रक्षाल्य, कृताञ्जलिः वामे गुरुभ्यो नमः, दक्षिणे गणपतये नमः, हृदि पीताम्बरायै नमः, इति चन्दनाऽक्षत-रक्तपुष्पाणि 'ॐ ऐं' इति मन्त्रेणाऽऽदाय, अस्त्रेणाऽऽचमनं कृत्वा, करौ सुरभीकृत्य, वामकरेण स्वमुद्रमनं परितः 'ऐं' इति भ्रामयित्वा घ्राणे ह्रीं।

ते सर्वे विलयं यान्तु, ये मां हिंसन्ति हिंसकाः।
मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥

इति पठित्वाऽस्त्रेण नाराचमुद्रया ऐशान्यां दूरे निःक्षिप्य, करशुद्धिं कृत्वा, ऊर्ध्वतालत्रयं दत्वा, दिग्बन्धनं कुर्यात् अङ्गुष्ठतर्जनीशब्देन। ततः त्रिशूलमुद्रया स्वमूर्धानं परितोऽस्त्रेण प्राग्दाक्षिण्येन त्रिर्भ्रामयन् अग्नि-प्राकारत्रयं विधाय, तन्मध्ये गतमात्मानं संचिन्त्य, मूलेन प्राणायामत्रयं कृत्वा, भूतशुद्धिं कुर्यात्।

भूतशुद्धिः—

तत्र पादाऽऽदिजानुपर्यन्तं लं पृथिवीवीजं, जान्वादिनाभिपर्यन्तं वं वरुणवीजं, नाभ्यादिकण्ठपर्यन्तं रं अग्निवीजं, कण्ठादिभ्रूमध्यान्तं यं वायुवीजं, भ्रूमध्यादिब्रह्मरन्ध्रपर्यन्तं हं आकाशवीजम्, एवं पञ्चभूतानि स्मरेत्, ततः स्वस्थः सन् देवताकलाऽधिष्ठितवीजाऽऽदियुतं च। एवं भूतमये देहे धर्मकन्दसमुद्भूतम्, ज्ञानैश्वर्याऽऽदिषड्दलोपेतम्, परं वैराग्यकर्णिकम्, स्वहृदयारविन्दे विभाव्य, तत्कर्णिकायां जीवाऽऽत्मानं वालाग्रमात्रं, प्रदीपकलिकाभासुरम्, अनादिमलप्रच्छन्नपरिच्छिद्रूपं, संचिन्त्य, प्रागुक्तरूपेण मूलाधारात् कुण्डलिनीमुत्थाप्य सुषुम्णावर्त्मना ब्रह्मरन्ध्रं नीत्वा, तत्र सहस्रदलकमलकर्णिकामध्यवर्तिनि परमात्मज्योतिषि वर्णवर्णाऽधिदेवता-करम्वसहितं जीवाऽऽत्मानं 'हं सः' इति मन्त्रेण संयोज्य, तथा मूलाधार-स्वाधिष्ठान–मणिपूराऽनाहतादिचक्रवर्णादिदेवता ग्रसन्तीं हृदयकमलमानीय

जीवाऽऽत्मानं कवलीकृत्य परमात्मनि योजयेत् । तथा तत्त्वसंहारं कुर्यात् । ततः पृथिवीं यथार्थां संस्मृत्य ॐ ह्लां ब्रह्मणे नमः, पृथिव्यधिपतये निवृत्तिकलाऽऽत्मने' हुं फट्' इति मन्त्रेण पृथिवीं कुण्डलिनीद्वारा अपां मध्ये संहरेत् । ततोऽपः ॐ ह्लीं विष्णवे जलाऽधिपतये प्रतिष्ठाकलाऽऽत्मने "हुं फट् स्वाहा" इति अपः कुण्डलिनीद्वारा वह्नितत्त्वे संहरेत् । ततो वह्निं ॐ ह्लूं रुद्राय तेजोऽधिपतये विद्याकलाऽऽत्मने 'हुं फट् स्वाहा' इति मन्त्रेण तं कुण्डलिनीद्वारा वायुमण्डले संहरेत् । ततो वायुं ॐ ह्लैं ईश्वराय वाय्वधिपतये शान्तिकलाऽऽत्मने "हुं फट् स्वाहा" इति मन्त्रेण तं वायुं कुण्डलिनीद्वारा आकाशमण्डले संहरेत् । ततः आकाशं ह्लौं सदाशिवाय आकाशाऽधिपतये शान्त्यतीतकलाऽऽत्मने "हुं फट् स्वाहा" इति कुण्डलिनीं नादे संहृत्य नादं विन्दौ, विन्दुशक्तिं नादशक्तौ, नादशक्तिं परशक्तौ प्रणवेन संहृत्य "ॐ ह्लीं हुं फट् स्वाहा" इति मन्त्रेण तां परशक्तिं पूर्वोक्तपरमात्मनि सम्पूज्य, केवलशरीरे पापपुरुषं चिन्तयेत् यथा—

'वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम् ।
ब्रह्महत्याशिरःस्कन्धं स्वर्णस्तेयभुजद्वयम् ॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥
उपपातकरोमाणि रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं क्रुद्धं कुक्षौ पापं विचिन्तयेत् ॥

इति विचिन्त्य वामनासारन्ध्रेण 'यं' वीजेन वायुमापूर्य, नाभिस्थान-वायुमण्डले संयोज्य वायुं वीजं कृष्णवर्णं कुम्भकेनाऽऽवर्तयन् तदुद्भूतेन प्रचण्डवायुना सपापपुरुषं स्वदेहांशे संशोष्य तं वायुं दक्षिणनासाग्रेण विरेच्य पुनर्दक्षिणनासायां 'रं' वीजेन सह वायुमापूर्य मूलाधारे संयोज्य तत्र स्ववह्निमण्डले 'रं' वीजं रक्तवर्णमावर्तयन्, तदुत्थेन महावह्निना पापपुरुषं स्वदेहं च संदह्य भस्मना हतं बायुं वामनासया विरेच्य, पुनर्वामनासया 'वं' वीजं शुक्लवर्णं तेन सह वायुमापूर्य, ब्रह्मरन्ध्रेण संयोज्य, तत्राऽर्चिचन्द्रमण्डले उक्तलक्षणं 'वं' वीजं कुम्भकेनाऽऽवर्तयन्

तन्निःसृताऽमृतधारया स्वदेहभस्मना संसिच्य, वायुं दक्षिणनासया विरेच्य, पुनर्दक्षिणनासया लं वीजेन सह वायुमापूर्य, मूलाधारस्थपार्थिवमण्डले संयोज्य, लं वीजं पीतवर्णं कुम्भकेनाऽऽवर्तयन् तदुद्भूतेन तेजसाऽमृतप्लावितं भस्माऽपनीय, तं वायुं वामनासया विरेच्य, पुनर्वामनासया मायावीजेन सह आपूर्य मूलाधारविन्दुमध्ये मायावीजं स्फुरन् नृकलार्कवर्णंकुम्भकेनाऽऽवर्तयन् तेन करचरणाद्यवयवसमेतं स्वदेहं निष्पन्नं विभाव्य, तं वायुं दक्षिणनासया विरेचयेदिति ।

स्थूलशरीरं निष्पाद्य, तत्र सहस्रारस्थपरमात्मनः सकाशात् सकलजगत्सिसृक्षाविजृम्भितपरब्रह्मस्वरूपिणीं पराशक्तिं "ॐ ह्रीं नमः" इति स्वस्थानमानीय, ततो नादशक्तिं विन्दुशक्तिं च क्रमेण प्रणवेन सृष्ट्वा, विन्दुशक्तेः सकाशात् कुण्डलिनीं प्रणवेन सृष्ट्वा, निःसार्य कुण्डलिन्या आकाशम्, आकाशाद् वायुं, वायोरग्निम्, अग्निसकाशादापः, अद्भ्यः पृथिवीति भूतानि स्वस्थाने स्थापयित्वा, नादशक्ति–विन्दुशक्ति–प्रणवेभ्यः स्वदेहशक्तिं विभाव्य, परमात्मनः सकाशात् कुण्डलिन्या जीवात्मानं संहृत्य, वर्णवर्णाऽधिदेवतासहितम् आज्ञादिचक्रेषु तत्र तत्र वर्णवर्णाऽधिदेवताः स्थापयेत् । ततो हृदयकमलमानीय हृदयकमले जीवात्मानं 'सोहम्' इति मन्त्रेण स्थापयित्वा, कुण्डलिनीं सुषुम्णामार्गेण मणिपूरकाऽऽदिचक्रेषु तत्तद्वर्णवर्णाऽधिदेवताः स्थापयन् मूलाधारं नयेत् । ततः स्वशरीरं निरस्तसकलकलुषं, तेजोरूपं, देवताऽऽराधनयोग्यं विभाव्य, प्राणप्रतिष्ठां कुर्यात् ।

इति भूतसिद्धिः

अथ प्राणप्रतिष्ठा—

ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः, ऋग्यजुःसामानि छन्दांसि, श्री पराऽऽख्या प्राणशक्तिर्देवता, आं वीजं, ह्रीं शक्तिः, ॐ क्रौं कीलकम्, सर्वप्रतिष्ठार्थे जपे विनियोगः । ऋष्यादि न्यस्य, कृताञ्जलिः सन् ॐ अङ्गुष्ठयोः ॐ आं ह्रीं क्रौं अं कं खं गं घं ङं आं ॐ ह्रीं वाय्वग्निसलिलपृथ्वीस्वरूपाऽऽत्मनेऽङ्गप्रत्यङ्गयोः तर्जन्योश्च । ॐ आं

ह्लीं क्रौं इं चं छं जं झं ञं ईं परमात्मपरसुगन्धाऽऽत्मने शिरसे स्वाहा मध्यमयोश्च। ॐ आं ह्लीं क्रौं उं टं ठं डं ढं णं ऊं श्रोत्रत्वक्चक्षुर्जिह्वा-घ्राणाऽऽत्मने शिखायै वषट् अनामिकयोश्च। ॐ आं ह्लीं क्रौं एं तं थं दं धं नं ऐं वाक्पाणिपादपायूपस्थाऽऽत्मने कवचाय हुम् कनिष्ठिकयोश्च। ॐ आं ह्लीं क्रौं ओं पं फं बं भं मं वचनादानगमनविसर्गानन्दाऽऽत्मने औं नेत्रत्रयाय वौषट्। ॐ आं ह्लीं क्रौं अं यं रं लं वं शं षं सं हं लं क्षं अः मनोबुद्धयहङ्कारचित्ताऽऽत्मने अस्त्राय फट्।

इति करादिन्यासः

हृदयादि षडङ्गन्यासः—

ॐ आं ह्लीं क्रौं अं कं खं गं घं ङं आकाशवायुवह्निजलपृथिव्याऽऽत्मने आं हृदयाय नमः। ॐ आं ह्लीं क्रौं इं चं छं जं झं ञं शब्दस्पर्शरूपरस-गन्धाऽऽत्मने ईं शिरसे स्वाहा। ॐ आं ह्लीं क्रौं उं टं ठं डं ढं णं श्रोत्रत्वक्-चक्षुर्जिह्वाघ्राणाऽऽत्मने ऊं शिखायै वषट्। ॐ आं ह्लीं क्रौं एं तं थं दं धं नं वाक्पाणिपादपायूपस्थाऽऽत्मने ऐं कवचाय हुम्। ॐ आं ह्लीं क्रौं ओं पं फं बं भं मं वचनादानगमनविसर्गाऽऽनन्दाऽऽत्मने औं नेत्रत्रयाय वौषट्। ॐ आं ह्लीं क्रौं यं रं लं वं शं षं सं हं लं क्षं मनोबुद्धयहङ्कारचित्तप्राणाऽऽत्मने अः अस्त्राय फट् इति षडङ्गं विधाय, प्राणप्रतिष्ठां कुर्यात्।

स्वशरीरे देवताविग्रहे च यन्त्रसंस्कारविधावुक्तं चैतत्। ततो नाभ्यादिपादद्वयाऽन्तं आं नमः। कण्ठादिनाभ्यन्तं ह्लीं नमः। तदुपरि क्रौं नमः इति विन्यस्य पीठन्यासं कुर्यात्।

अथ पीठन्यासः—

ॐ ह्लीं अं इं उं ऋं लृं एं ओं अं कामरूपाय पीठाय नमः इति मूलाधारे। ॐ ह्लीं आं ईं ऊं ॠं ॡं ऐं औं अः जालन्धरपीठाय नमो हृदि। ॐ ह्लीं कं खं गं घं ङं पूर्णगिरिपीठाय नमो ललाटे। ॐ ह्लीं चं छं जं झं ञं उड्डीयानपीठाय नमः शिरसि। ॐ ह्लीं टं ठं डं ढं णं वाराणसीपीठाय

नमः भ्रूमध्ये । ॐ ह्लीं तं थं दं धं नं अवन्तीपीठाय नमः मुखवृत्ते। ॐ ह्लीं पं फं बं भं मं द्वारवतीपीठाय नमो ललाटे । ॐ ह्लीं यं रं लं वं मधुपुरीपीठाय नमः कण्ठमध्ये । ॐ ह्लीं शं षं सं हं अयोध्यापीठाय नमो नाभिमण्डले । ॐ ह्लीं लं क्षं काञ्चीपुरपीठाय नमः कटयाम् ।

इति वाराष्टकेन व्यापकं कुर्यात् । ततो बगलापञ्चाक्षरं जपेत् ।

ॐ अस्य बगलापञ्चाक्षरमन्त्रस्य बृहती छन्दः, श्रीबगलामुखी चिन्मयी देवी देवता, अक्षोभ्य ऋषिः, हूँ बीजं, फट् शक्तिः, ह्लीं स्त्रीं कीलकम्, पञ्चाक्षरीप्रसादसिद्धयर्थे जपे विनियोगः ।

पञ्चाक्षराय नमः, अन्त्याय नमः, षड्दीर्घभाजा मायाबीजेन न्यासः। ह्लां बगलायै नमः षडङ्गम् । ह्लीं बगलायै मां रक्ष रक्ष अङ्गुल्योः। एवं हृदयादि । सर्वत्र, ऐं कं बगलादेवी शक्त्याधाराय नमः ।

## ध्यानम्

प्रत्यालीढपरां घोरां मुण्डमालाविभूषिताम् ।
खर्वां लम्बोदरीं भीमां पीताम्बरपरिच्छदाम् ॥
नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम् ।
चतुर्भुजां ललज्जिह्वां महाभीमां वरप्रदाम् ॥
खड्गकर्त्रीसमायुक्तां सव्येतरभुजद्वयाम् ।
कपालोत्पलसंयुक्तां सव्यपाणियुगान्विताम् ॥
पिङ्गोग्रैकसुखासीनां मौलावक्षोभ्यभूषिताम् ।
प्रज्वलत्पितृभूमध्यगतां दंष्ट्राकरालिनीम् ॥
तां खेचरां स्मेरवदनां भस्मालङ्कारभूषिताम् ।
विश्वव्यापकतोयान्ते पीतपद्मोपरिस्थिताम् ॥

एवं ध्यात्वा मानसोपचारैः सम्पूज्य, कर्त्रीखड्गकपालोत्पलयोनिमुद्राः प्रदर्श्य प्राणायामः । 'ॐ ह्लीं स्त्रीं हुं फट्' एतेनैव पूरकादि कर्तव्यम् ।

ह्रीं

मालामन्त्रः —

ॐ माले माले महामाले सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तेन त्वं सिद्धिदा भव ॥

इति मन्त्रेण मालां सम्पूज्य दक्षिणकरेणाऽऽदाय

ॐ त्वं माले सर्वदेवानां प्रीतिदा शुभदा मता ।
अविघ्नं कुरु माले त्वं सर्वसम्पत्करी मता ॥

इति प्रार्थ्य यथाशक्ति जपेत् । ततः प्राणायामं कृत्वा न्यासं कुर्यात् ।

अथ न्यासक्रमः—

ॐ अस्य श्रीमातृकामन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीमातृका देवता, हलो वीजम्, स्वराः शक्तयः न्यासे विनियोगः । ऋष्यादि विन्यस्य, षडङ्गं न्यसेत् । यथा—अं कं खं गं घं ङं आं हृदयाय नमः, इं चं छं जं झं ञं ईं शिरसे स्वाहा, उं टं ठं डं ढं णं ऊं शिखायै वषट्, एं तं थं दं धं नं ऐं कवचाय हुम्, ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट्, अं यं रं लं वं शं षं सं हं लं क्षं अः अस्त्राय फट्, इत्यस्त्रमन्त्रेण दिग्बन्धनं कृत्वा, तालत्रयं च दत्त्वा ध्यायेत्—

व्योम्नि द्वारसनार्णकर्णिकवचा द्वन्द्वैः स्फुरत्केशरं
पत्रान्तर्गतपञ्चवर्गयशला वर्णादिवर्गक्रमात् ॥
आशर्ष्वासषुलान्तलांगलियुता क्षोणीपुरेणाऽऽवृतम्
वर्णाब्जं शिरसि स्थितं विषगदं ध्यायामि मृत्युञ्जयम् ॥

इति रन्ध्रे चरणारविन्दं वक्ष्यमाणरूपं ध्यात्वा अन्तर्न्यासपूर्वकं बहिर्न्यासं कुर्यात् । तत्र मूलाधारध्वनिं श्रुत्वा प्रबुद्धशक्तिं कुण्डलिनीं, ज्वलद्दीप्तपावकसंकाशां, सूक्ष्मतेजःस्वरूपिणीं, मूलाधारात् शिरःपद्मं स्पृशन्तीं, विद्युदाकृतिम्, तया स्पृष्टशिरःपद्मकस्वरूपिणो निर्गतान् मातृका-वर्णान् सुषुम्णावर्त्मना व्यापकत्वेन स्थितान् सर्वान् ध्यात्वा विन्यसेत् । इति सूक्ष्मरूपां वर्णतनुं कण्ठे षोडशदले कमले ऊर्ध्वे मुखे ध्यात्वा तद्दलेषु पूर्वादिप्राग्दाक्षिण्येन ॐ अं नमः, ॐ आं नमः । एवं प्रणवादिना

इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः इति विन्यस्य, तथा हृदयेऽनाहतचक्रेऽपि एवमेव क्रमेण द्वादशवर्णान्, कं खं गं घं ङं चं छं जं झं ञं टं ठं इति न्यसेत् । ततो मणिपूरके नाभिमण्डले डं ढं णं तं थं दं धं नं पं फं इति विन्यसेत् । लिङ्गमूले स्वाधिष्ठाने बं भं मं यं रं लं इति षड् वर्णान् न्यसेत् । ततो मूलाधारे चतुर्दले वं शं षं सं इति क्रमेण न्यसेत् । ततो भ्रूमध्ये आज्ञाचक्रे द्विदले ॐ हं नमः, ॐ क्षं नमः, इत्यन्तर्मातृका विन्यस्य ध्यायेत् ।

## ध्यानम्

आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदलगते द्वादशार्धे चतुष्के ॥
नासान्ते वालमध्ये डफकठसहिते कण्ठदेशे स्वराणां
हंसं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥

ततो बहिर्मातृकान्यासं कुर्यात् । अन्तर्मातृकान्यासो मनसैव कार्यः ।

अथ वहिर्मातृकान्यासः । ऋष्यादिषडङ्गं पूर्ववत् ज्ञेयम् ।

## ध्यानम्

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादकुक्षिस्थलां च
देहां भास्वत्कदम्बां कलितशशिकलामिन्दुकुन्दावदाताम् ॥
अक्षस्रक्कुम्भचित्रैर्लिखितवरकरां तीक्ष्णदृष्टिं विशालाम्
अच्छाकल्पामनुक्षस्तनजघनभरां भारतीं तां नमामः ॥

एवं ध्यात्वा शिरसि अं नमः, मुखवृत्ते आं नमः, दक्षनेत्रे इं नमः, वामनेत्रे ईं नमः, दक्षकर्णे उं नमः, वामकर्णे ऊं नमः, दक्षनासापुटे ऋं नमः, वामनासापुटे ॠं नमः, दक्षिणगण्डे ऌं नमः, वामे ॡं नमः, ऊर्ध्वोष्ठे एं नमः, अधरोष्ठे ऐं नमः ऊर्ध्वदन्तपंक्तौ ओं नमः, अधोदन्तपंक्तौ औं नमः, तालुमूले अं नमः, जिह्वाग्रे अः नमः, दक्षिणबाहुमूले कं नमः, मध्ये खं नमः, मणिबन्धे गं नमः, अङ्गुलिमूले घं नमः, अङ्गुल्यग्रे ङं नमः, वामवाहुमूले चं नमः, मध्ये छं नमः, मणिबन्धे जं नमः,

अङ्गुलिमूले झं नमः, अङ्गुल्यग्रे ञं नमः, दक्षिणोरुमूले टं नमः, जानुनि ठं नमः, गुल्फे डं नमः, अङ्गुलिमूले ढं नमः, अङ्गुल्यग्रे णं नमः, वामोरुमूले तं नमः, जानुनि थं नमः, गुल्फे दं नमः, अङ्गुलिमूले धं नमः, अङ्गुल्यग्रे नं नमः, दक्षपार्श्वे पं नमः, वामे फं नमः, पृष्ठे बं नमः, नाभौ भं नमः, जठरे मं नमः, हृदये यं नमः, दक्षिणांसे रं नमः, ककुदि लं नमः, वामांसे वं नमः, हृदयादिदक्षिणकराग्रपर्यन्तं शं नमः, हृदयादि-वामकराग्रपर्यन्तं षं नमः, हृदयादिदक्षिणपादाग्रपर्यन्तं सं नमः, हृदयादि-वामपादपर्यंतं हं नमः, हृदयादिनाभ्यन्तं ळं नमः, हृदयादिमूर्धपर्यन्तं क्षं नमः। इत्येवं मातृकान्यासः।

अथ कलामातृकान्यासः—

ॐ अस्य श्रीकलामातृकान्यासस्य प्रजापति ऋषिः, गायत्री छन्दः, कलारूपिणी मातृका सरस्वती देवता, कलामातृकान्यासे विनियोगः। ऋष्यादीन् न्यस्य करादिन्यासमेवं कुर्यात्। अं ॐ आं हृदयाय नमः, अङ्गुष्ठाभ्यां नमः, इं ॐ ईं शिरसे स्वाहा, तर्जनीभ्यां नमः, उं ॐ ऊं शिखायै वषट्, मध्यमाभ्यां नमः, एं ॐ ऐं कवचाय हुम्, अनामिकाभ्यां नमः, अं ॐ अः अस्त्राय फट्, करतलकरपृष्ठाभ्यां नमः, इति न्यासौ विधाय ध्यायेत्—

हस्ते पद्माङ्कयुक्तां गुणमयहरिणं पुस्तकं वर्णमालाम्
टङ्कं शुभ्रं कपालं दलममृतलसद्धेमकुण्डं वहन्तीम्॥
मुक्तावीणाग्रयुक्तैः स्फटिकनवजपाबन्धुरैः पञ्चवक्त्राम्
त्र्यक्षैर्वक्षोजनम्रां शशिशकलनिभां शारदां तां नमामि॥

इति ध्यात्वा न्यसेत्—

ॐ ह्लीं अं निवृत्त्यै नमः, ॐ ह्लीं आं प्रतिष्ठायै नमः, ॐ ह्लीं इं विद्यायै नमः, ॐ ह्लीं ईं शान्त्यै नमः, ॐ ह्लीं उं इन्धिकायै नमः, ॐ ह्लीं ऊं दीपिकायै नमः, ॐ ह्लीं ऋं रेचिकायै नमः, ॐ ह्लीं ॠं मोचिकायै नमः, ॐ ह्लीं ऌं परायै नमः, ॐ ह्लीं ॡं सूक्ष्मायै नमः,

ॐ ह्लीं एं सूक्ष्मामृतायै नमः, ॐ ह्लीं ऐं ज्ञानामृतायै नमः, ॐ ह्लीं ओं अध्यापिन्यै नमः, ॐ ह्लीं औं व्यापिन्यै नमः, ॐ ह्लीं अं व्योमरूपिण्यै नमः, ॐ ह्लीं अः अनन्तायै नमः, ॐ ह्लीं कं सृष्टयै नमः, ॐ ह्लीं खं ऋद्ध्यै नमः, ॐ ह्लीं गं स्मृत्यै नमः, ॐ ह्लीं घं मेध्यायै नमः, ॐ ह्लीं ङं कान्त्यै नमः, ॐ ह्लीं चं लक्ष्म्यै नमः, ॐ ह्लीं छं युवत्यै नमः, ॐ ह्लीं जं स्थिरायै नमः, ॐ ह्लीं झं स्थित्यै नमः, ॐ ह्लीं ञं सिद्धयै नमः, ॐ ह्लीं टं जरायै नमः, ॐ ह्लीं ठं पालिन्यै नमः, ॐ ह्लीं डं शान्त्यै नमः, ॐ ह्लीं ढं ऐश्वर्यायै नमः, ॐ ह्लीं णं रत्यै नमः, ॐ ह्लीं तं कामिकायै नमः; ॐ ह्लीं थं वरदायै नमः; ॐ ह्लीं दं ह्लादिन्यै नमः; ॐ ह्लीं धं प्रीत्यै नमः, ॐ ह्लीं नं दीर्घायै नमः, ॐ ह्लीं पं तीक्ष्णायै नमः, ॐ ह्लीं फं रौद्रायै नमः; ॐ ह्लीं बं भयायै नमः; ॐ ह्लीं भं निद्रायै नमः, ॐ ह्लीं मं तन्द्रायै नमः, ॐ ह्लीं यं सुधायै नमः; ॐ ह्लीं रं रोधिन्यै नमः; ॐ ह्लीं लं क्रियायै नमः, ॐ ह्लीं वं उत्कायै नमः, ॐ ह्लीं शं मृत्युरूपायै नमः, ॐ ह्लीं षं पीतायै नमः, ॐ ह्लीं सं श्वेतायै नमः, ॐ ह्लीं हं अरुणायै नमः; ॐ ह्लीं ळं असितायै नमः, ॐ ह्लीं क्षं अनन्तायै नमः । इति शुद्धमातृकास्थाने कलामातृकान्यासः कर्तव्यः ।

ततो मूलेन त्रिःप्राणायामं कृत्वा योगपीठन्यासं कुर्यात् । तद्यथा—मूलाधारे मण्डूकाय नमः, स्वाधिष्ठाने कालाग्निरुद्राय नमः, मणिपूरे मूलप्रकृत्यै नमः, हृदये आधारशक्तयै नम; कूर्माय नमः; अनन्ताय नमः; वराहाय नमः, पृथिव्यै नमः, क्षीरसमुद्राय नमः, रत्नदीपाय नमः, स्वर्णपर्वताय नमः, नन्दनोद्यानाय नमः, कल्पवृक्षेभ्यो नमः; विचित्ररत्नभूम्यै नमः, स्वर्णप्राकाराय नमः, रत्नमण्डपाय नमः, स्वर्णवेदिकायै नमः, रत्नसिंहासनाय नमः, इत्येतत् सर्वं तत्तत्स्थानभावनया विन्यस्य, स्वशरीरमंशद्वयोर्ध्वप्रकल्पितपादचतुष्टयं मुखनाभिपार्श्वद्वयं कल्पितगात्रचतुष्टयं रत्नसिंहासनं ध्यात्वा, दक्षिणांसे धर्माय नमः, वामांसे ज्ञानाय नमः, वामोरौ, वैराग्याय नमः, दक्षिणोरौ ऐश्वर्याय नमः, मुखे अधर्माय नमः, वामपार्श्वे अज्ञानाय नमः, नाभौ अवैराग्याय नमः, दक्षिणपार्श्वे

अनैश्वर्याय नमः, इति विन्यस्य, पुनः हृदये मायायै नमः, विद्यायै नमः, इत्युक्तं रूपं विचिन्त्य, तदुपरि सिंहासनाय नमः, मध्ये अनन्ताय नमः, पद्माय नमः, आनन्दकन्दाय नमः, संविन्नालाय नमः, प्रकृतिमयपत्रेभ्यो नमः, विकारमयकेशरेभ्यो नमः, पञ्चाशद्वर्णबीजाढ्यसर्वात्मस्वरूपायै नमः, कर्णिकायै नमः, (कर्णिकायाम्) ॐ अं अर्कमण्डलाय नमः, ॐ सं सोममण्डलाय नमः, ॐ वं वह्निमण्डलाय नमः, ॐ सं प्रबोधात्मने सत्वाय नमः, ॐ रं प्रकृत्यात्मने रजसे नमः, ॐ तं मोहात्मने तमसे नमः, आं आत्मने नमः, अं अन्तरात्मने नमः, पं परमात्मने नमः, ह्रीं ज्ञानात्मने नमः, सिंहासनस्य चतुर्दिक्षु मध्ये च ज्ञानतत्त्वात्मने नमः, मायातत्त्वात्मने नमः, कलातत्त्वात्मने नमः, विद्यातत्त्वात्मने नमः, परतत्त्वात्मने नमः, ततो हृदयाद्यष्टपत्रे मध्ये च पूर्वादिप्रादक्षिण्येन ॐ जयायै नमः, ॐ विजयायै नमः, ॐ अजितायै नमः, ॐ अपराजितायै नमः, ॐ नित्यायै नमः, ॐ विलासिन्यै नमः, ॐ दोग्ध्र्यै नमः, ॐ अमोघायै नमः, मध्ये-ॐ मण्डलायै नमः, ॐ ह्रीं सर्वशक्तिकमलासनाय नमः, ॐ योगपीठाय नमः, इति पीठमन्त्रेण मूर्धादिपादान्तं व्यापकं न्यसेत् ।

इति योगपीठन्यासः ।

अथ मूलमन्त्रन्यासः—

प्रथमं मूलेन त्रिःप्राणायामं कृत्वा, विनियोगं च विधाय, ऋष्यादिन्यासं कुर्यात् । शिरसि नारायण ऋषये नमः, मुखे त्रिष्टुप् छन्दसे नमः, हृदये बगलामुख्यै देव्यै नमः, गुह्ये ह्लीं बीजाय नमः, पादयोः स्वाहा शक्तये नमः, प्रणवकीलकाय नमः सर्वाङ्गे । इति विन्यस्य कृताञ्जलिर्वदेत् ।

षडङ्गन्यासः—

अङ्गुष्ठयोः 'ह्लीं' हृदयाय नमः, तर्जन्योः 'बगलामुखि' शिरसे स्वाहा, मध्यमयोः 'सर्वदुष्टानां' शिखायै वषट्, अनामिकयोः 'वाचं मुखं पदं स्तम्भय' कवचाय हुम्, कनिष्ठयोः 'जिह्वां कीलय' नेत्रत्रयाय वौषट्, 'बुद्धिं विनाशय ह्लीं ॐ स्वाहा' अस्त्राय फट्, इति छोटिकाभिः दिग्बन्धनं कृत्वा, एवमेव करन्यासोऽपि कार्यः इति करन्यासः ।

अथ मन्त्रवर्णन्यासः—

ॐ नमः शिरसि, ह्लीं नमो ललाटे, वं नमो भ्रूमध्ये, गं नमो दक्षिणनेत्रे, लां नमो वामनेत्रे, मुं नमो दक्षिणकर्णे, खिं नमो वामकर्णे सं नमो दक्षिणनासापुटे, वें नमो बामे, दुं नमो दक्षिणगण्डे, ष्टां नमो वामे नां नमः ऊर्ध्वोष्ठे, वां नमः अधरोष्ठे, चं नमो मुखे, मुं नमो चिबुके खं नमो गले, पं नमो दक्षबाहुमूले, दं नमः कूर्परे, स्तं नमो मणिबन्धे भं नमः अङ्गुलिमूले, यं नमः अङ्गुल्यग्रे, जिं नमो वामदोर्मूले; ह्वां नमः कूर्परे, कीं नमः मणिबन्धे, लं नमः अङ्गुलिमूले, यं नमः अङ्गुल्यग्रे बुं नमो दक्षोरुमूले, द्धिं नमो जानुनि, विं नमो गुल्फे, नां नमः अङ्गुलिमूले शं नमः अङ्गुल्यग्रे; यं नमो वामोरौ, ह्लीं नमो वामजानुनि, ॐ नमो गुल्फे, स्वां नमः अङ्गुलिमूले, हां नमो वामदक्षिणपादाङ्गुल्यग्रे एवं सर्वत्र ।

इत्यक्षरन्यासः ।

मूलेन त्रिधा व्यापकं कृत्वा, तदात्मानं नत्वा देवीं, हृत्सरोजकमल कर्णिकान्तर्गतयोगपीठं संस्थाप्य पीठोपरि यन्त्रराजं विचिन्तयेत् इत्थं विभाव्य देवीं ध्यायेत् ।

ध्यानम्—

गम्भीरां च मदोन्मत्तां तप्तकाञ्चनसन्निभाम् ।
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम् ॥१॥
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्रदृढपीनपयोधराम् ॥२॥
हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ।
पीतभूषणभूषां च स्वर्णसिंहासने स्थिताम् ॥३॥
एवं ध्यात्वा च देवेशीं शत्रुस्तम्भनकारिणीम् ।
महाविद्यां महामायां साधकेष्टफलप्रदाम् ॥४॥

दक्षिणाधरयोर्मुद्गरपाशौ, वामाधरयोर्जिह्वावज्रौ, ( जिह्वा साधक विपक्षस्येति) ततः ऋष्यादिकरषडङ्गं विन्यसेत् । पुरःसरं—मुद्गर-पाश

ध्वजा–वज्र–जिह्वा–चतुरस्र–स्तम्भन–गोक्षुर–मत्स्य–योनिरूपा नव मुद्रा मन्त्रेण प्रदर्श्य श्रीपीताम्बराम्बां साङ्गावरणां सम्पूज्य, स्वाभेदेन ध्यात्वा, स्वशिरसि मूलमन्त्रेण पुष्पाञ्जलिं दत्त्वा पुनर्हृदयकमले ध्यायेत्। वक्ष्यमाणपीठपूजापुरःसरं मानसैरुपचारैर्देवीं साङ्गां सावरणां सम्पूज्य मूलाधारे; आत्मा, अन्तरात्मा, परमात्मा, ज्ञानात्मेति चैतन्यात्मकं चतुष्टयाऽऽकारचतुरस्त्रं कुण्डमध्ये चिच्छक्तिं कुण्डलिनीं वह्निरूपां ध्यात्वा, वैदिकमूलमुच्चार्य "अहन्तां जुहोमि स्वाहा", पुनर्मूलमुच्चार्य "ममत्वं जुहोमि स्वाहा", एवं पैशुन्यं, कामं, क्रोधं, लोभं, मोहं, मदं, मात्सर्यं च क्रमेण सुषुम्णासु युक्तमनःस्रुवेण जुहुयात्।

स्वागतं देवदेवेशि सन्निधा भव मे शिवे।
गृहाण मानसीं पूजां यथार्थपरिभाविताम्॥

लं पृथिव्यात्मकं गन्धं समर्पयामि, हं आकाशात्मकं पुष्पं समर्पयामि, यं वाय्वात्मकं धूपं समर्पयामि, रं वह्न्यात्मकं दीपं समर्पयामि, वं अमृतात्मकं नैवेद्यं समर्पयामि, सं सोमात्मकं ताम्बूलं समर्पयामि, इति पञ्चोपचारैः सम्पूज्य, यथाशक्ति मूलं संजप्य, समर्प्य, निर्योगं कुर्यात्। यथा—

अथान्तर्यजनं वक्ष्ये यथावदवधारय।
वामनाडीं समाकृष्य किंचिदाकुञ्चयेद् हृदा॥
रेचयेत् सव्यमार्गेण जिह्वां तालुगतां चरेत्।
शक्तिः शिवपदे योज्या किंचिदाकुञ्चयेदधः॥
अन्तर्यागमिमं देवि गुरुभाषितमुक्तवान्।

एवमन्तर्यागं विधाय वहिर्यागं कुर्यात्। यथा—

श्रीखण्डरक्तश्रीखण्डश्रीपर्णसम्भवे पट्टे प्रतिष्ठितं धातुमयं स्फाटिकं वा चक्रं शुद्धोदकेन प्रक्षाल्य, तं चक्रं चन्दनादिना समभ्यर्च्य, पुरतः पीठे संस्थाप्य, तत्र मूलेन पुष्पाञ्जलिं दत्त्वा, अर्घ्यस्थापनं कुर्यात्। स्वपुरतः किंचिद् वामाग्रे चतुरस्रवृत्तत्रिकोणात्मकं मण्डलं विधाय, चन्दनादिनाऽनुलिप्य, तन्मूले मत्स्यमुद्रां विधाय, श्रीपीताम्बराऽर्घ्याधार-

मण्डलाय नमः इति मण्डलं सम्पूज्य, ततः पुष्पाक्षतैः षडङ्गमन्त्रैश्च वायव्यादिनिर्ऋत्यैशाग्नेयादिचतुर्दिक्षु च क्रमेण षडङ्गानि सम्पूज्य मूलेनाधारं प्रक्षाल्य, श्रीपीताम्बराम्बार्घ्यपात्राधारं स्थापयामि इति संस्थाप्य, ॐ मं रं धर्मप्रददशकलात्मने वह्निमण्डलाय श्रीपीताम्बरार्घ्य पात्रासनाय नमः, इति मन्त्रेण सम्पूज्य, धूम्रार्चिरादिकला इहाऽगच्छ इह तिष्ठ इति तत्र वह्निकलामावाह्य पूर्वोक्तक्रमेण प्राणप्रतिष्ठामन्त्रेण प्राणप्रतिष्ठां कृत्वा, ( 'मम' पदस्थाने धूम्रार्चिरादिकलापदं दत्वा ) स्वाग्रादिप्राग्दक्षिणेन वृत्ताऽऽकारेण दश कलाः पूजयेद् यथा—

यं धूम्रार्चिषे नमः, रं ऊष्मायै नमः, लं ज्वलिन्यै नमः, वं ज्वालिन्यै नमः, शं विस्फुलिङ्गिन्यै नमः, षं सुश्रियै नमः, सं स्वरूपायै नमः, हं कपिलायै नमः, लं हव्यवाहायै नमः, क्षं कव्यवाहायै नमः, इति वह्निकलाः सम्पूज्य "ॐ बुद्धिविनाशायै ह्लीं ॐ स्वाहा" अस्त्राय फट् इत्यस्त्रमन्त्रेण स्वर्णादिरचितं पात्रं प्रक्षाल्य श्रीपीताम्बरार्घ्यपात्रं प्रतिष्ठापयामि इति तस्मिन्नाधारे संस्थाप्य, अहमर्थप्रदद्वादशकलात्मने सूर्यमण्डलाय श्रीपीताम्बरार्घ्यपात्राय नमः, इत्यनेन पात्रं सम्पूज्य, तत्र भूमिस्थमण्डलेऽवनिमण्डलं विधाय, तथैव षडङ्गैः सम्पूज्य, पूर्ववत् सूर्यकलामावाह्य प्राग्वत् प्राणप्रतिष्ठां कृत्वा, वृक्षाकारेण प्रदक्षिणेन कं भं तपिन्यै नमः, खं बं तापिन्यै नमः, गं फं धूम्रायै नमः, घं पं मरीच्यै नमः, ङं नं ज्वालिन्यै नमः, चं धं रुच्यै नमः, छं दं सुषुम्णायै नमः, जं थं भोगदायै नमः, झं तं विश्वायै नमः, जं णं बोधिन्यै नमः, टं ढं धारिण्यै नमः, ठं डं क्षमायै नमः, इति सम्पूज्य, शं षं सं हं लं क्षं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं जं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं, अनेन मूलमन्त्रं त्रिर्जप्य शुद्धोदकैः श्रीपीताम्बरार्घ्यपात्रं पूरयामि ।

ततः पीयूषभावनया सम्पूर्य, तत्र पुष्प—गन्धा-ऽक्षत-यव—कुशाग्र—तिल सर्षप—दूर्वा इत्यर्घ्यद्रव्याष्टकं निःक्षिप्य, ॐ डं सं कामप्रदषोडशकलात्मने सोममण्डलाय श्रीपीताम्बरार्घ्यामृताय नमः इति जलं सम्पूज्य तत्र प्राग्

भूमिस्थं मण्डलं विधाय पूर्ववत् षडङ्गैः सम्पूज्य, तत्र सोमकलाः प्राग्वत् समावाह्य तासां तथैव प्राणप्रतिष्ठां कृत्वा, तत्र वृत्ताकारेण प्राग्दक्षिणेन अं अमृतायै नमः, आं मानदायै नमः, इं पूषायै नमः, ईं तुष्टयै नमः, उं पुष्टयै नमः. ऊं रत्यै नमः, ऋं धृत्यै नमः, ॠं शशिन्यै नमः, ऌं चन्द्रिकायै नमः, ॡं कान्त्यै नमः, एं ज्योत्स्नायै नमः, ऐं श्रियै नमः, ओं प्रीत्यै नमः, औं अङ्गदायै नमः, अं पूर्णायै नमः, अः पूर्णामृतायै नमः, इति सम्पूज्य, सूर्यमण्डलात्तीर्थमङ्कुशमुद्रया "गङ्गे च यमुने चैव" इत्यादिना कुम्भमुद्रायाऽऽवाह्य, मूलेन संयोज्य, "सर्वदुष्टानां शिखायै वषट्" इति मन्त्रेण गालवीमुद्रां प्रदर्श्य, 'वं' इति धेनुमुद्रयाऽमृतीकृत्य, तत्र जले श्रीपीताम्बराम्बां ध्यात्वा, श्रीपीताम्बराम्बादेहे षडङ्गन्यासं विन्यसेत् । एकवचनेनावगुण्ठ्य, नेत्रमन्त्रेण जलं वीक्ष्य 'नेत्राय वौषट्, अस्त्रेण फट्" इति संरक्ष्य, शङ्खमुद्रयाऽवष्टभ्य, योनिमुद्रयोद्दीप्य, मूलमन्त्रेण देवीं गन्धादिभिः सम्पूज्य, प्राग्वत् षडङ्गानि चतुरस्रमूलेन अष्टधाऽभिमन्त्र्य, मत्स्यमुद्रयाऽऽच्छादयेत् । इति विशेषार्घ्यपात्रं संस्थाप्य ततस्तज्जलं पूर्वपूजाद्रव्यासादनप्रकारेण स्ववामे स्थापितसुगन्धिजलपूरितकुम्भे किञ्चिन्निःक्षिप्य ततः तत्पात्रस्योपरिष्टात् पंक्त्याकारेण साधारं जलपात्रद्वयं तृतीयं कांस्यपात्रं धृत्वा मधु दधि दुग्धं चेति पात्रत्रयं यथावत् संस्थाप्य वैदिकमूलमन्त्रेण तत्र गन्धादीन् निःक्षिप्य किञ्चित् किञ्चित् अर्घ्याम्बु निःक्षिप्य मूलेनाऽष्टधा पृथगभिमन्त्र्य मत्स्यमुद्रयाऽऽच्छादयेत् ।

ततः पूजाचक्रस्य दक्षिणे त्रिकोणमण्डले साधारं सजलं पुनराचमनीयपात्रं स्थापयेत् । ततो विशेषार्घ्यपात्रात् किञ्चिज्जलं निःक्षिप्य गन्धादिकं दत्त्वा, मूलेनाष्टवारमभिमन्त्र्य, तथैव तत्समीपे प्रोक्षणीपात्रं संस्थाप्य, अनेन जलेनात्मानं पूजाचक्रं पूजाद्रव्याणि च मूलेन संप्रोक्ष्य धेनुमुद्रां प्रदर्शयेत् ।

ततः स्वदेहं गन्धादिभिरलङ्कृत्य स्वेष्टदेवतारूपं विभाव्य, स्वशिरसि श्रीगुरुं सम्पूज्य, मूलेन मूलाधारे गणपतिं गन्धादिभिः सम्पूज्य, प्रागुक्तयोगपीठदेवताः तत्स्थाने हृदयकमले जयाद्यष्टशक्तीः सम्पूज्य, पीठमन्त्रेण सर्वाङ्गे पुष्पाञ्जलिं दत्त्वा, पूर्ववत् मूलाधारे चतुरस्रकुण्डं

संचिन्त्य, मूलान्ते "धर्माधर्महविरात्माग्नौ मनसा स्रुचा सुषुम्णावर्त्मना नित्यमक्षवृत्ति जुहोम्यहं स्वाहा", पुनर्वैदिकमूलं चोच्चार्य, श्लोकमूलान्ते "पुण्यापुण्यकृत्याकृत्यसंकल्पविकल्पौ जुहोमि, धर्मं जुहोमि स्वाहा"। ततः प्रकाशविमर्शरूपहस्ताभ्यामवलम्ब्य उन्मनीस्रुवम्—

धर्माधर्मकलास्नेहपूर्णवह्नौ जुहोम्यहम्।

इति श्लोकमन्त्रेण धर्माधर्मात्मकं सकलप्रपञ्चं पूर्णाहुतित्वेन हुत्वा, निरस्तनिखिलोपाधितया निरतिशयसुखस्वानन्दचिद्विलासात्मकं स्वात्मानं ध्यायेत्। यथाशक्ति मूलमन्त्रं संजप्य—

"गुह्याऽतिगुह्यगोप्त्री त्वं, गृहाणाऽस्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान् महेश्वरि"॥

इति समर्पणमन्त्रेण समर्पयेत्।

**इति बहिर्यागविधिः।**

## आवाहनं पूजा च

तत्राऽर्घ्यजलेन पूजाचक्रम् अभ्युक्ष्य, पूज्यस्योत्तरभागे गुं गुरुभ्यो नमः, दक्षिणे गं गणपतये नमः, इति पुष्पादिना सम्पूज्य, तस्याऽधस्तात् अतलादिसप्तपातालभावनया ॐ मं मण्डूकाय नमः, ॐ कं कालाग्निरुद्राय नमः, ॐ मं मूलप्रकृत्यै नमः, ॐ आं आधारशक्तये नमः, ॐ कूं कूर्माय नमः, ॐ अं अनन्ताय नमः, ॐ वां वाराहाय नमः, इति सम्पूज्य, वाराहस्य दंष्ट्रोपरि पृं पृथिव्यै नमः, तस्यां क्षीं क्षीरसमुद्राय नमः, तस्मिन् नं नवरत्नमयद्वीपाय नमः, स्वं स्वर्णपर्वताय नमः, तदुपरि नं नन्दनोद्यानाय नमः, तन्मध्ये कं कल्पवृक्षेभ्यो नमः, तेषां मध्ये विं विचित्ररत्नभूम्यै नमः, स्वं स्वर्णप्राकाराय नमः, तन्मध्ये रं रत्नमण्डपाय नमः, तन्मध्ये स्वं स्वर्णवेदिकायै नमः, तदुपरि रं रत्नसिंहासनाय नमः, इति तत्तद्भावनया सम्पूज्य, पूजाचक्राधारपीठं सिंहासनोपरित्वेन कल्पयित्वा, अग्नि पादादिकोणे धं धर्माय नमः, ज्ञां ज्ञानाय नमः, वैं वैराग्याय नमः, ऐं ऐश्वर्याय नमः, इति प्राग्दाक्षिण्येन सम्पूज्य, स्वाग्रादिचतुर्दिक्षु

अं अधर्माय नमः, अं अज्ञानाय यमः, अं अवैराग्याय नमः, अं अनैश्वर्याय नमः, इति प्राग्दक्षिणेन सम्पूज्य, सिंहासनस्य मध्ये मां मायायै नमः, विं विद्यामायायै नमः, तदुपरि अं अनन्ताय नमः, तस्य मूर्ध्नि पद्माय नमः, तदृष्टदलेषु पं प्रकृत्यात्मकपत्रेभ्यो नमः, तत्केशरेषु षोडशविकृतमय-केसरेभ्यो नमः,तत्कर्णिकायाम् षड्विंशबीजवर्णाद्यकर्णिकायै नमः, केशरेषु अं द्वादशकलात्मने अर्कमण्डलाय नमः, कर्णिकायां उं षोडशकलात्मने सोमाय नमः, पत्रेषु मं दशकलात्मने वह्निमण्डलाय नमः, बं ब्रह्मणे नमः, विं विष्णवे नमः; रुं रुद्राय नमः, सं सत्वाय नमः; रं रजसे नमः, तं तमसे नमः, आं आत्मने नमः, अं अन्तरात्मने नमः, पं परमात्मने नमः, ह्लीं ज्ञानात्मने नमः, इति सम्पूज्य, सिंहासनस्य स्वाग्रादिचतुर्दिक्षु मध्ये च ज्ञां ज्ञानाय नमः, मां मायातत्त्वाय नमः, कं कलातत्त्वाय नमः, विं विद्या-तत्त्वाय नमः, पं परतत्त्वाय नमः। इति सम्पूज्य तत्केशरेषु स्वाग्रादि-प्राग्दक्षिणेन ॐ जयायै नमः, ॐ विजयायै नमः, ॐ अजितायै नमः, ॐ अपराजितायै नमः, ॐ नित्यायै नमः, ॐ विलासिन्यै नमः, ॐ दौग्ध्र्यै नमः, ॐ अमोधायै नमः, मध्ये मण्डलाय नमः, इति सम्पूज्य, ॐ ह्लीं सर्वशक्तिकलात्मने नमः, इति पीठमन्त्रेण सहस्रपीठं सम्पूज्य, मूलमन्त्रेण श्रीपीताम्बराम्बामूर्तिं कल्पयामि, एवं पीठमध्येनोक्तमूर्तिं परिकल्प्य मूलेन पुष्पाञ्जलिमादाय पद्ममुद्रया पूर्वोक्तमातृकां भोजकत्वेन श्रीदेवीं ध्यात्वा, मम काये मूलाधारे सोमसूर्याग्निमयं त्रिकोणम्, तन्मध्ये सूर्यकोटिप्रतीकाशं, चन्द्रकोटिसुशीतलं, ज्योतिर्लिङ्गम् ; तदुपरि चिद्रूपां तडित्कोटिप्रभाम्, बिसतन्तुतनीयसीं सर्वान्तर्यामितया कुण्डलिनीं गुरूपदिष्टमार्गेण संस्थाप्य, सुषुम्णावर्त्मना मूलाधार–स्वाधिष्ठान–मणिपूरा–ऽनाहत–विशुद्धाऽऽख्य-चक्रभेदनक्रमेण ब्रह्मरन्ध्रे नीत्वा, परमात्मनि संयोज्य, शिवशक्त्यात्मकं तत्तेजो वह्वभ्याससाध्यं विचिन्त्य, त्रिःपुष्पाञ्जलिं संयोज्य,

"गौरीर्मिमाय सलिलानि तक्षती एकपदी द्विपदी सा चतुष्पदी,
अष्टापदी, नवपदी बभूविषी सहस्राक्षरा परमे व्योमन्।"

इति वैदिकमन्त्रं समुच्चार्य—

"आत्मसंस्थां प्रजां शुद्धां त्वामहं परमेश्वरीम् ।
अरण्यामिव हव्यांशं मूर्तिमावाहयाम्यहम् ॥"

इति पठित्वा, 'श्रीपीताम्बरे अम्बिके इहाऽऽगच्छाऽऽगच्छ' इति पठित्वा पीठस्थमूर्तिशिरसि पुष्पाञ्जलिं प्रक्षिप्य, आवाहनादिमुद्रयाऽऽवाहयेत् । तद् ब्रह्मरन्ध्रप्रतिष्ठं विचिन्त्य, श्रीपीताम्बरारूपेण परिणतध्यानोक्तरूपां तां ध्यायन्—

"तवेयं महिमामूर्तिस्तस्यां त्वां सर्वगां प्रभो ।
भक्तिस्नेहसमाकृष्टं दीपं च स्थापयाम्यहम् ॥"

इति पठित्वा वैदिकं मूलमन्त्रमुच्चार्य, स्थापिनीं मुद्रां बद्ध्वा, 'श्रीपीताम्बराम्बिके इह तिष्ठ' इति स्थापिनीं मुद्रां प्रदर्श्य प्रार्थयेत् ।

"देवेशि भक्तसुलभे परिवारसमन्विते ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥"

इति पुनर्वैदिकमूलाभ्याम्—

"अनन्या तव देवेशि मूर्तिशक्तिरियं प्रभो ।
सान्निध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्परे" ॥

"श्रीपीताम्बरे इह सन्निधेहि सन्निधेहि" इति सन्निधापनमुद्रया संनिधाप्य पुनर्वैदिकमूलेन—

"आज्ञया तव देवेशि कृपाम्भोधिगुणाम्बुधे ।
आत्मानन्दैकतृप्ते त्वं निरुद्धा भव हे गुरो" ॥

"श्रीपीताम्बरे इह सन्निरुद्धा भव सन्निरुद्धा भव" । इति संनिरोधिनी-मुद्रया सन्निरुध्य, पुनर्वैदिक मूलान्ते—

"दृशा पीयूषवर्षिण्या पूरयन्ती यज्ञविष्टरम् ।
मूर्तिरायज्ञसम्पूर्तेः स्थिरा भव महेश्वरि ॥"

'इत्यंशुवेष्टिता भव सर्वतः श्रीपीताम्बरे, इहाऽवगुण्ठिता भव इहाऽवगुण्ठिता भव', इति अवगुण्ठ्य, हृदयादिषडङ्गं स्थानेषु देवीं सकलीकृत्य, वैदिकमूलाभ्यां 'श्रीपीताम्बरे सकलीकृता भव, सकलीकृता

भव', इति सकलीकृत्य, वैदिकमूलान्ते 'श्रीपीताम्बरे इहाऽमृतीकृत्य भव, इहाऽमृतीकृत्य भव' इति धेनुमुद्रयाऽमृतीकृत्य, श्रीदेव्या मूर्ध्नि अमृतवृष्टिं ध्यायन् वैदिकमूलान्ते 'श्रीपीताम्बरे इह परमामृतीकृता भव इह परमामृतीकृता भव' इति महामुद्रया देव्या मस्तके परमामृतवृष्टिं भावयेत् ।

पुनर्वैदिकमूलेन —

"ऐं वद वद वाग्वादिनि क्लिन्ने क्लीं ऐं
महाक्षोभं कुरु कुरु ऐं क्लीं सौः क्षोभं कुरु कुरु सौः सौः" ॥

इति दीपमन्त्रमुच्चार्य, मूलविद्याम् अकारादिक्षकारान्तां मातृकां च पठित्वा, अर्घ्योदकेन देवीं प्रोक्ष्य, देव्या हृदयं स्पृष्ट्वा, प्राणा इह प्राणा इत्यादिना प्राणप्रतिष्ठां कुर्यात् । प्राणप्रतिष्ठाविधिरुक्त एव । (वैदिकमन्त्रः पुरुषसूक्तश्रीसूक्ते, पीताम्बरोपनिषत्प्रोक्तो मूलमन्त्रस्तान्त्रिको वा ।) न्यासमात्रं पूर्वमनुक्तमेवाऽत्र लिख्यते । यथा हि—

ॐ आं नाभेरधः, ॐ ह्रीं हृदयादि नाभिपर्यन्तम्, ॐ क्रौं मस्तकाद् आहृदयं न्यस्य, ॐ यं त्वगात्मने नमः, ॐ रं असृगात्मने नमः, ॐ लं मांसात्मने नमः, ॐ वं मेद–आत्मने नमः, ॐ शं अस्थ्यात्मने नमः, ॐ षं मज्जात्मने नमः, ॐ सं शुक्रात्मने नमः ॐ हं प्राणात्मने नमः, ॐ क्षः जीवात्मने नमः । इत्यादि न्यासप्रकारः ।

पुनर्वैदिक मूलान्ते, 'श्रीपीताम्बरायै नमः', इति त्रिःपुष्पाञ्जलिं दत्वा, नव मुद्राः प्रदर्शयेत् । मुद्गरम्, पाशम्, वज्रम्, जिह्वाम्, चतुरस्रम्, स्तम्भनम्, गोक्षुरम्, मत्स्यम्, योनिम् इति क्रमेण प्रदर्शयेत् । वैदिकमूलान्ते मन्त्रं च प्रत्युपचारमुच्चार्य—

"सर्वान्तर्यामिनि देवि सर्ववीजमये शुभे ।
स्वात्मस्थमपरं शुद्धमासनं कल्पयाम्यहम् ॥

एवं पठित्वा "श्रीपीताम्बरे इत्याऽऽसनं ते नमः । ॐ हं हं हं इदमिदं गृहाण स्वाहा ।" इत्याऽऽसनं निवेद्य, पद्ममुद्रां प्रदर्श्य, पुष्पाञ्जलिं प्रत्युपचारैः कुर्यात् ।

ततो वैदिकमूलान्ते श्रीपीताम्बरे कुशलस्वागतमिति—

"ॐ यस्या दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये।
तस्यै ते श्रीमहेशानि स्वागतं स्वागतं च ते॥"

इति स्वागतकुशलप्रश्नं कृत्वा मुद्रां प्रदर्शयेत्।

पाद्यपात्रादुदकमुद्धृत्य, वैदिकमूलान्ते—

"ॐ यद्भक्तिलेशसम्पर्कात् परमानन्दसम्भवः।
तस्यै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये॥"

'श्रीपीताम्बरे एतत्ते पाद्यं नमः' इति पादयोर्दत्वा "ॐ हं हं हं इदमिदं गृहाण स्वाहा" इति निवेद्य, मुद्रां प्रदर्श्य, पुष्पाञ्जलिं समर्पयेत्।

पुनर्वैदिकमूलान्ते—

"ॐ वेद्यानामपि वेद्यायै देवतात्मने आचमनं कल्पयामि।
ईशे शुद्धानां शुद्धिहेतवे श्रीपीताम्बरे एतत्ते आचमनीयम्॥"

इति धेनुमुद्रया देवीमुखे दत्वा 'ॐ हं हं हं इदमिदं गृहाण स्वाहा' इति समर्प्य मुद्रां प्रदर्श्य पुष्पाञ्जलिं दद्यात्।

पुनर्वैदिकमूलान्ते—

"ॐ सर्वकालविहीना त्वं परिपूर्णा सुखात्मनि।
मधुपर्कमिदं देवि कल्पयामि प्रसीद मे॥"

'श्रीपीताम्बरे एतत्ते मधुपर्कम्' इति देव्या मुखे दत्त्वा 'ॐ हं हं हं इदमिदं गृहाण' इति समर्प्य, मुद्रां प्रदर्श्य, पुष्पाञ्जलिं विनिवेदयेत्।

पुनर्वैदिकमूलान्ते—

"ॐ शुचिरप्यशुचिर्वाऽपि यस्याः स्मरणमात्रतः।
शुद्धिमाप्नोति तस्यै ते पुनराचमनीयकम्॥"

'श्रीपीताम्बरे एतत्ते पुनराचमनीयकम्।' इति शुद्धोदकं मुखे दत्त्वा "ॐ हं हं हं इदमिदं गृहाण स्वाहा" इति मन्त्रेण समर्प्य, मुद्रां प्रदर्श्य पुष्पाञ्जलिः।

ततो रत्नपादुके उपनीय, पूर्वदिशि स्नानमण्डले नीत्वा वैदिकमूलान्ते—

"स्नेहं गृहाण स्नेहेन लोकनाथे महेश्वरि ।
सर्वलोकेषु शुद्धात्मन् ददामि स्नेहमुत्तमम् ।।"

'श्रीपीताम्बरे एतत्ते सुगन्धितैलाभ्यङ्गम् ।' सगन्धमलापकर्षणोद्वर्तनं कृत्वा, वैदिकमूलान्ते—

"ॐ परमानन्दबोधाब्धिनिमग्ननिजमूर्तये ।
साङ्गोपाङ्गमिदं स्नानं कल्पयामीह चेश्वरि ।।"

गङ्गादितीर्थादाहृत्य जलकलशैः सहस्रैरभिषिञ्च्य, "ॐ हं हं हं इदमिदं गृहाण स्वाहा" इति निवेद्य, मुद्रां प्रदर्श्य, पुष्पाञ्जलिं दद्यात् ।

ततः पूर्ववदाचमनीयं निवेद्य, मुद्रां प्रदर्श्य, प्रोक्षणं कुर्यात् ।

ततः पीतदुकूलयुगं गृहीत्वा, ॐ वं इति अभिमन्त्रितजलेन अस्त्रेण प्रोक्ष्य, वार्हस्पत्यदेवतापवासोभ्यां नमः, इति सम्पूज्य, वैदिकमूलान्ते—

"ॐ मायाचित्रपरिच्छिन्ननिजगुह्योरुतेजसः ।
निरावरणविज्ञानं तवास्ते कल्पयाम्यहम् ।।"

'श्रीपीताम्बरे एतत्ते वस्त्रं नमः ।'

"ॐ मायामाश्रित्य महामाया जगत्संमोहिनी परा ।
तस्यै ते परमेशायै कल्पयाम्युत्तरीयकम् ।।"

'श्रीपीताम्बरे ! एतत्ते उत्तरीयकम्', इति वस्त्रं परिधाप्य "ॐ हं हं हं इदमिदं गृहाण स्वाहा" इति निवेद्य, मुद्रां प्रदर्श्य, मूलेन पुष्पाञ्जलिं दद्यात् । पुनराचमनीयं पूर्ववत् ।

ततः स्वर्णादिरचितं यज्ञोपवीतमादाय, वैदिकमूलान्ते—

"यस्याः शक्तित्रयेणेदं संप्रोतं सकलं जगत् ।
यज्ञसूत्राय तस्यै ते यज्ञसूत्रं प्रकल्पये" ।।

'श्रीपीताम्बरे एतत्ते यज्ञोपवीतम् नमः । ॐ हं हं हं इदमिदं गृहाण', इति विनिवेद्य, मुद्रां प्रदर्श्य, पुष्पाञ्जलिं दद्यात् । पूर्ववदाचमनीयम् ।

ततो रत्नपादुके आरोहयामि, मुकुटादिकमलङ्कारमण्डलं नीत्वा, तत्र सिंहासने उपवेश्य, अलङ्कारान् पानीयेनाभ्युक्ष्य, मुकुटाद्याभरणेभ्यो नमः, इति सम्पूज्य, वैदिक मूलान्ते—

"ॐ स्वभावसुन्दराङ्गायै नानाशक्त्याश्रितेऽम्बिके ।
भूषणानि विचित्राणि कल्पयाम्यमरार्चिते ॥"

एतानि, मुकुटाऽऽभरणानि समर्पयामीति समर्प्य, 'ॐ हं हं हं इदमिदं गृहाण' इति निवेद्य, भूषणमुद्रां प्रदर्श्य, पूर्ववत् पुष्पाञ्जलिः ।

ततः पञ्चवाद्यपूर्वकं योगमण्डपं नीत्वा, योगपीठमध्ये उपवेश्य, देवतापरिवारगणं सूर्यात् किरणमिव स्वस्वस्थाने स्थितं ध्यात्वा, गन्धम् अस्त्रेण संप्रोक्ष्य, ॐ गन्धर्वदेवतायै गन्धाय नमः, इति गन्धं सम्पूज्य, कनिष्ठिकया गन्धमादाय वैदिकमूलान्ते—

"ॐ परमानन्दसौभाग्यपरिपूर्णदिगन्तरे ।
गृहाण परमं गन्धं कृपया परमेश्वरि ॥"

'श्रीपीताम्बरे एतत्ते गन्धाय नमः ।'

"शरीरं ते न जानामि चेष्टां नैव च नैव च ।
मया निवेदितं गन्धं प्रतिगृह्य विलेप्यताम् ॥"

इति प्रार्थ्य 'ॐ हं हं हं इदमिदं ,गृहाण' इति निवेद्य, गन्धमुद्रां प्रदर्श्य पुष्पाञ्जलिः पूर्ववत् ।

ततः पुष्पं वं इति अभिमन्त्रितजलेनास्त्रेण प्रोक्ष्य, वनस्पतिदेवताभ्यः पुष्पेभ्यो नमः इति पुष्पाञ्जलिं सम्पूज्य, मूलान्ते—

"तुरीयवनसम्भूतं नानागुणमनोरमम् ।
आनन्दसौरभं पुष्पं गृह्यतामिदमुत्तमम् ॥

'श्रीपीताम्बरे इमानि पुष्पाणि वौषट्' इत्येतानि विधानि पुष्पाणि पीतवर्णानि चम्पकादीनि समर्प्य, 'ॐ हं हं हं' इति मन्त्रेण विनिवेद्य, पुष्पमुद्रां प्रदर्श्य, पुष्पाञ्जलिं समर्पयेत् ।

एवं पुष्पपूजान्ते देव्या दक्षभागे 'एकवक्त्रं महारुद्रं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्' इत्यादि वैदिकमन्त्रेण, तथा "ॐ नमो भगवते महारुद्राय हुं फट् स्वाहा" इति तान्त्रिकमन्त्रेण वा सम्पूजयेत् । ततो देव्या हृदयषडङ्गस्थानेषु षडङ्गानि लयाङ्गत्वेन सम्पूज्य, 'श्रीपीताम्बरे तवावरणदेवतापूजनार्थमनुज्ञां देहि इति समुच्चारयेत् ।

आवरणपूजनम्

सच्चिन्मये परे देवि पराऽमृतरसप्रिये ।
अनुज्ञां देहि विश्वेशि परिवारार्चनाय ते ।।

इति सम्प्रार्थ्य, ततो देव्या देहे समस्तमातृकाक्षरन्यासस्थानेषु मूलमन्त्रपुटितमातृकावर्णैः सम्पूज्य, पश्चादावाह्य, अङ्गदेवताः पूजयेत् । ततः चतुरस्रे देव्याऽग्रद्वारमारभ्य प्रदक्षिणेन चतुषु द्वारेषुं ॐ गं गणपतये नमः, ॐ वं वटुकाय नमः, ॐ यां योगिनीभ्यो नमः, ॐ क्षां क्षेत्रपालाय नमः । ततो वैदिकमूलान्ते देवीं त्रिःसम्पूज्य, प्रत्यावरणमेवं कार्यम् ।

"अभीष्टसिद्धिदे देवि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणाय ते नमः ।।

इति त्रिःपुष्पाञ्जलिः ।

इति प्रथमावरणाय नमः ।

ततो महत्तमे भागे कल्पितप्राच्यनुसारेण आग्नेयाऽऽदिदिक्पालेभ्यो नमः, ॐ गुं गुरुभ्यो नमः, ॐ परमगुरुभ्यो नमः, ॐ परमेष्ठिगुरुभ्यो नमः, ॐ परात्परगुरुभ्यो नमः, ॐ अस्मद्गुरुभ्यो नमः । ततो वैदिक-मूलान्ते—

"अभीष्टसिद्धिदे देवि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणाय ते नमः ।।

इति पूर्ववत् पुष्पाञ्जलिः ।

इति द्वितीयावरणाय नमः ।

ततः षोडशदलेषु देव्यग्रमारभ्य, प्राग्दक्षिणेन ॐ अं मङ्गलायै नमः, ॐ आं स्तम्भिन्यै नमः, ॐ इं जृम्भिण्यै नमः, ॐ ईं मोहिन्यै नमः ॐ उं वश्यायै नमः, ॐ ऊं अचलायै नमः, ॐ ऋं चञ्चलायै नमः, ॐ ॠं दुर्धरायै नमः, ॐ ऌं कल्मषायै मनः, ॐ ॡं धीरायै नमः, ॐ एं कलनायै नमः, ॐ ऐं कालकर्षिण्यै नमः, ॐ ओं भ्रामिकायै नमः, ॐ औं मन्दगमनायै नमः, ॐ अं भोगदायै नमः, ॐ अः भाविकायै नमः, इति सम्पूज्य—

"अभीष्टसिद्धिदे देवि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं तृतीयावरणाय ते नमः ॥

इत्यादिना त्रिःपुष्पाञ्जलिः । पूर्ववत् ।

इति तृतीयावरणाय नमः ।

ततोऽष्टदलमारभ्य प्राग्दक्षिणेन ॐ ह्लीं ब्राह्म्यै नमः, ॐ ह्लीं माहेश्वर्य्यै नमः, ॐ ह्लीं कौमार्यै नमः, ॐ ह्लीं वैष्णव्यै नमः, ॐ ह्लीं वाराह्यै नमः, ॐ ह्लीं इन्द्राण्यै नमः, ॐ ह्लीं चामुण्डायै नमः, ॐ ह्लीं महालक्ष्म्यै नमः, । प्रणवेनाऽऽवाहनं, दीर्घस्वरयुक्तेन पूजनम् । ततो भैरवाष्टकं च यजेत् ।

"असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तसंज्ञकः ।
कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः ॥

पूर्वादिवामावर्तेन ऐं ह्रीं आं असिताङ्गभैरवश्रीपादुकां पूजयामि नमः, ॐ ऐं ह्रीं ईं रुरुभैरवश्रीपादुकां पूजयामि नमः, ॐ ऐं ह्रीं ऊं चण्डभैरवश्रीपादुकां पूजयामि नमः, ॐ ऐं ह्रीं ॠं क्रोधभैरवश्रीपादुकां पूजयामि नमः, ॐ ऐं ह्रीं ॡं उन्मत्तभैरवश्रीपादुकां पूजयामि नमः, ॐ ऐं ह्रीं ऐं कपालभैरवश्रीपादुकां पूजयामि नमः, ॐ ऐं ह्रीं औं भीषणभैरवश्रीपादुकां पूजयामि नमः, ॐ ऐं ह्रीं अः संहारभैरवश्रीपादुकां पूजयामि नमः, इति पूजयेत् तर्पयेच्च, इति वैदिकमूलान्ते—

"अभीष्टसिद्धिदे देवि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥

पुष्पाञ्जलिः पूर्ववत् ।

इति चतुर्थावरणार्चनम् ।

ततः षट्कोणेषु देव्यग्रमारभ्य प्राग्दक्षिणेन ॐ डां डाकिन्यै नमः, ॐ रां राकिण्यै नमः, ॐ लां लाकिन्यै नमः, ॐ कां काकिन्यै नमः, ॐ शां शाकिन्यै नमः, ॐ हां हाकिन्यै नमः, इति सम्पूज्य, मध्ये त्रिःसम्पूज्य वैदिकमूलान्ते—

अभीष्टसिद्धिदे देवि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥

पुष्पाञ्जलिः पूर्ववत् ।

इति पञ्चमावरणार्चनम् ।

ततो देव्यग्रमारभ्य प्राग्दक्षिणेन त्रिकोणेषु ॐ वां वामायै नमः, ॐ जां ज्येष्ठायै नमः, ॐ रां रौद्र्यै नमः, इति पश्यन्ती–मध्यमा–वैखरी-रूपास्तिस्रः शक्तीः ( रतिः, प्रीतिः, मनोभवा इति नामान्तरा अपि ।) सम्पूज्य, वैदिकमूलान्ते—

अभीष्टसिद्धिदे देवि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं षष्ठावरणार्चनम् ॥

पूर्ववत् पुष्पाञ्जलिः ।

इति षष्ठावरणार्चनम् ।

ततः परामम्बिकां श्रीबगलामुखीं सम्पूज्य, शिवशक्त्योरभेदं विभाव्य तदनन्तरं चतुरस्रे प्रथमं देव्यग्रमारभ्य कल्पितप्राच्यनुसारेण ॐ लं इन्द्राय सुराधिपतये पीतवर्णाय वज्रहस्ताय, ऐरावतवाहनाय, श्रीपीताम्बरा-पार्षदाय नमः, पूर्वे । ॐ रं अग्नये तेजोधिपतये, रक्तवर्णाय, शक्तिहस्ताय, मेषवाहनाय श्रीपीताम्बरापार्षदाय नमः, आग्नये । ॐ हं यमाय प्रेताधिपतये कृष्णवर्णाय दण्डहस्ताय, महिषवाहनाय, श्रीपीताम्बरापार्षदाय नमः, याम्ये । ॐ क्षं निर्ऋतिरूपिणे, रोगाधिपतये, धूम्रवर्णाय, खड्गहस्ताय, प्रेतवाहनाय, श्रीपीताम्बरापार्षदाय नमः, नैर्ऋत्ये । ॐ वं वरुणाय जलाधिपतये शुक्लवर्णाय पाशहस्ताय, महिषवाहनाय श्रीपीताम्बरा-पार्षदाय नमः, प्रतीच्याम् । ॐ यं वायवे, प्राणाधिपतये, धूम्रवर्णाय, अङ्कुशहस्ताय, मृगवाहनाय, श्रीपीताम्बरापार्षदाय नमः, वायव्ये । ॐ मं कुवेराय यक्षाधिपतये, मौक्तिकवर्णाय, गदाहस्ताय, नरवाहनाय श्रीपीताम्बरापार्षदाय नमः, उत्तरे । ॐ हं ईशानाय, प्रथमाधिपतये स्फाटिकवर्णाय, त्रिशूलहस्ताय, वृषभवाहनाय, श्रीपीताम्बरापार्षदाय नमः,

ईशान्याम् । ॐ आं ब्रह्मणे लोकाधिपतये, रक्तवर्णाय, पद्महस्ताय, हंसवाहनाय श्रीपीताम्बरापार्षदाय नमः, पूर्वेशानयोर्मध्ये । ॐ ह्रीं अनन्ताय नागाधिपतये, गौरवर्णाय, चक्रहस्ताय, गरुड़वाहनाय, श्रीपीताम्बरापार्षदाय नमः, नैऋत्यपश्चिमयोर्मध्ये । इति सम्पूज्य, मध्ये देवीं त्रिःसम्पूज्य, वैदिकमूलान्ते—

"अभीष्टसिद्धिदे देवि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥

पूर्ववत् पुष्पाञ्जलिः ।

इति सप्तमावरणार्चनम् ।

ततो देव्यग्रतः कल्पितप्राच्यनुसारेण ॐ पीतवर्णाय वज्राय नमः, ॐ शुक्लवर्णायै शक्त्यै नमः, ॐ कृष्णवर्णाय दण्डाय नमः, ॐ आकाशवर्णाय खड्गाय नमः, ॐ विद्युद्वर्णाय पाशाय नमः, ॐ रक्तवर्णाय अङ्कुशाय नमः, ॐ शुभ्रवर्णायै गदायै नमः, ॐ नीलवर्णाय त्रिशूलाय नमः, ॐ रक्तवर्णाय पद्माय नमः, ॐ अरविन्दनाभाय चक्राय नमः, इति सम्पूज्य, वैदिकमूलान्ते—

अभीष्टसिद्धिदे देवि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यमष्टमावरणार्चनम् ॥

पूर्ववत् पुष्पाञ्जलिः ।

इति अष्टमावरणार्चनम् ।

अष्टमातृभिः सार्धं रुरुचण्डादिभैरवाणामपि एकमावरणमपि संग्रहीतव्यम् । एवं नवावरणपूजनं भवतीति ।

इति नवमावरणार्चनम् ।

चतुरस्रमारभ्य त्रिकोणान्तम्, त्रिकोणमारभ्य चतुरस्रान्तम्, आवरणचक्रमेव । एवमावरणानि सम्पूज्य, ततो धूपपात्रमस्त्रेण संप्रोक्ष्य, हृन्मन्त्रेणाऽभ्यर्च्य, ततः साराङ्गारान् निधाय, वं इति गोमुद्रयाऽमृतीकृत्य, 'क्लीं' सुरभितेजसे स्वाहा । इति मन्त्रेण गुग्गुलादीन् निःक्षिप्य, गन्धर्वदेवतायै धूपं समर्पयामि नमः । वैदिकमूलान्ते—

ॐ वनस्पतिरसोत्पन्नो गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

'श्रीपीताम्बरे एतत्ते धूपं समर्पयामि' इत्युत्सृत्य, वामे घण्टां निधाय, अस्त्रेण प्रोक्ष्य, तेनैव त्रिरभ्यर्च्य, जनिमन्त्रमतिः स्वाहा, इत्यादि वामहस्तेन घण्टां वादयन् ॐ हं हं हं इदमिदं गृहाण स्वाहा, इति नीचैः धूपं निवेद्य, देव्या वामभागे निधाय, धूपमुद्रां प्रदर्श्य, वैदिक मूलान्ते—
'श्रीपीताम्बरायै नमः ।' एवं पुष्पाञ्जलिं दद्यात् ।

ततः धूपपात्रवद् दीपं संशोध्य, दीपं ह्रीं ह्रीं ह्रीं इति प्रज्वाल्य विष्णुदेवतायै घृतदीपं समर्पयामि नमः, इति सम्पूज्य, धेनुमुद्रयाऽमृतीकृत्य, वैदिकमूलान्ते—

ॐ सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरे ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

'श्रीपीताम्बरे एष ते दीपः', एवं दीपमुत्सृज्य पार्श्वस्थघण्टां वादयेत् । देव्याः पादादिमूर्धान्तमुच्चैर्दीपं प्रदर्श्य, देव्या दक्षिणभागे दीपं निवेश्य, ॐ हं हं हं इति मन्त्रेण निवेद्य, दीपमुद्रां प्रदर्श्य, पुष्पाञ्जलिः पूर्ववत् ।

पाद्यमाचमनीयकं च दत्वा, ततः स्वर्णादिपात्रस्थं नैवेद्यं नानाविधं मूलेन सम्पूज्य, देव्या अग्रे चतुरस्त्रमण्डले साधारं निधाय, वैदिकमूलाभ्यां वीक्ष्य, अस्त्रेण संप्रोक्ष्य, तैरेव कुशैः सन्ताड्य, कवचेनाभ्युक्ष्य, अधोमुखं दक्षहस्तोपरि वामहस्तं निधाय, तथैव यं इति वायुवीजेनाऽष्टवारमभिमन्त्र्य, स्पर्शादिदोषान् शोषयित्वा, पुनर्वामस्योपरि दक्षिणकराच्छादितं रं वीजमष्टधा जपेत् । तद्दोषान् दग्ध्वा, वं इत्यमृतीकृत्य; गोमुद्रया अस्त्रेण चक्रमुद्रया च संरक्ष्य, वैदिकमूलाभ्यामष्टधाभिमन्त्र्य; दक्षहस्ते जलमादाय—

"ॐ हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ॥

इति नैवेद्योपरि चुल्लुकोदकं निःक्षिप्य, वैदिकमूलान्ते 'श्रीपीताम्बरे एतत्ते नैवेद्यं नमः', इत्युत्सृज्य, ॐ हं हं हं इति मन्त्रेण निवेद्य,

"ॐ अमृतोपस्तरणमसि स्वाहा" इति देवीं मन्त्रयित्वा, वामकरे ग्रासमुद्रां प्रदर्श्य; प्राणादिमुद्रां प्रदर्शयेत्। स्वर्णादिपात्रस्थं जलं गोमुद्रयामृतीकृत्य—

"ॐ नमस्ते देवदेवेशि सर्वतृप्तिकरं परम्।
अन्यन्निवेदितं शुद्धप्रकृतिस्थं सुशीतलम्॥
परमानन्दसंपूर्णं गृहाण जलमुत्तमम्।

इति देव्या वामभागे पानार्थं जलं निवेद्य, सत्पात्रसद्विशोध विधानैकभक्षणं निवेदयामि ते देवि सानुगायै, तदिति वं अमृतात्मक नैवेद्यं नमः, इति पुष्पाञ्जलिं दत्त्वा, अस्त्रेण दिग्बन्धनं कृत्वा, जवनिकां धृत्वा, नैवेद्यमुद्रां प्रदर्श्य, देवीं भुञ्जानां ध्यात्वा, इमौ श्लोकौ पठेत्—

"ब्रह्मेन्द्राद्यैः सरसमभितः सूपविष्टा सदाख्या
रम्या शिञ्जद्वलयकरयोः सादरं वीज्यमाना॥
नर्मक्रीडाप्रहसनपरा ह्लादयन्ती च भोक्त्री
भुङ्क्ते पात्रे कनकघटिते षड्रसान् पीतवस्त्रा॥
शालीभक्तं सभद्रं शिशिरकरमितं पायसापूपरूपम्
लेह्यं पेयं च चोष्यं शृतमसृतफलं पाकपूर्णं सुखाद्यम्॥
आज्यं प्राज्यं समज्यं नयनरुचिकरं रञ्जिकैलामरीच्यम्
स्वाद्वाढ्यं शार्कराजीपरिकरममृताहारजोषं जुषस्व॥

एवं पठित्वा, वैदिकमूले दशधा जप्त्वा, जवनिकां विसृज्य, नित्यहोमं प्रकुर्यात्।

## नित्यहोमविधिः

तत्र द्वादशाङ्गुलचतुरस्रे लौकिकाग्निं संस्थाप्य, मूलेन वीक्ष्य, प्रोक्ष्य अस्त्रेण, कुशैः सन्ताड्य, कवचेनाऽभ्युक्ष्य, "ॐ चित् पिङ्गल हन हन दह दह पच पच सर्वं ज्ञापय स्वाहा" इति मन्त्रेण प्रज्वाल्य "वैश्वानर जातवेद इहाव लोहिताक्ष सर्वकर्माणि साधय स्वाहा" इति मन्त्रेणाऽग्नि मावाह्य, चन्दनादिभिः सम्पूज्य, जठरानलपरमात्मनोरैक्यं विचिन्त्य स्वहृदि देवीं ध्यात्वा, वह्निमावाह्य, मुद्रां प्रदर्श्य, द्वयोरैक्यं विचिन्त्य

मूलेन गन्धादिभिः सम्पूज्य, मूलेन पञ्चविंशतिमाहुतिं हुत्वा, पुनः षडङ्गाहुतिं हुत्वा, तत आवरणदेवतानामेकैकाहुतिं पृथक् पृथक् हुत्वा, ततो व्याहृतिभिश्च हुत्वा, "ॐ रेतः पूर्वं प्राणबुद्धिदेहधर्माधिकारजाग्रत्-स्वप्नसुषुप्त्यवस्थायां मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं, यदुक्तं, यत् कृतं तत् सर्वं ब्रह्मार्पणमस्तु स्वाहा" इति मन्त्रेणाऽऽहुतिं हुत्वा, "ॐ हुं साङ्गं कुरु कुरु स्वाहा" इत्यनेन द्वितीयामाहुतिं हुत्वा, देवीं पुनः सम्पूज्य, चक्रं विसृज्य, स्वहृदि वह्निं विसृज्य, देव्यै मूलेन पुष्पाञ्जलित्रयं दत्वा, बलिं दद्यात् ।

मूलेन प्राणायामत्रयम् ऋष्यादिकरषडङ्गं च विधाय, पूजाचक्रस्येशानकोणे साधारं मण्डलं, तत्र व्यञ्जनान्नोदकपूरितबलिं निधाय, सर्वभूतान्यावाह्य, सर्वभूतेभ्यो नमः, इति सम्पूज्य—

रौद्राश्च रुद्रकर्माणः रुद्रस्यैशानवासिनः ।
योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये ॥

भूचराः खेचराश्चैव तथा चैवान्तरिक्षगाः ।
सर्वे ते प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ॥

इति वामकराऽङ्गुलिभिः अर्घ्यपात्रात् पात्रान्तरेणोद्धृतजलधारां बलिपात्रे निःक्षिपेत् । बलिमुत्सृज्य, पुष्पाञ्जलिमादाय—

"भूतानि यानीह वसन्ति लोके, बलिं गृहीत्वा विधिवत् प्रयुक्तम् ।
सन्तोषमासाद्य व्रजन्तु सर्वे क्षमन्तु चान्यत्र नमोस्तु तेभ्यः ॥

इति पुष्पाञ्जलिं दत्त्वा, नाराचमुद्रया भूतानि विसृज्य, अस्त्रेणात्मानं शुद्धजलेनाऽभ्युक्ष्य, देवीं तृप्तां ध्यात्वा "अमृतापिधानमसि स्वाहा" इति देव्या उत्तरायेशाने दत्त्वा, नैवेद्यं गतसारं संधृत्य, नैऋत्यां नैवेद्यपात्रं निधाय, गोमयेनाद्भिरस्त्रेण तत्स्थानं शोधयित्वा, नैवेद्यपात्रात् किंचिदन्नमुद्धृत्य, "निर्माल्यभोजिन्यै नमः" इत्यैशान्यां निःक्षिप्य, हस्तौ प्रक्षाल्य, गण्डूषजलं दत्वा, पूर्ववदाचमनीयं च दत्वा, ताम्बूलमादाय, वैदिकमूलान्ते—

"ॐ तमालदलकर्पूरयुगभागतरङ्गितम् ।
संशोधितं सुगन्धिं च ताम्बूलं प्रतिगृह्यताम् ।।

'श्रीपीताम्बरे एतत्ते ताम्बूलं नमः' इत्येवं समर्प्य, ॐ हं हं हं इति निवेद्य, वैदिकमूलान्ते 'सुप्रसन्नायै श्रीपीताम्बरायै नमः', इति त्रिःपुष्पाञ्जलिना सम्पूज्य, चन्दनपुष्पधूपदीपैराराधयेत् ।

इति प्रसन्नपूजां विधाय, मुकुटं परिधाप्य, दर्पणं दर्शयित्वा, छत्रचामरव्यजनादिनानाविधराजषोडशोपचारान् परिकल्प्य दूर्वाऽक्षत-जलकुशमूलान्ते 'श्रीपीताम्बरे एतत्ते नीराजनं नमः' इति मुकुटोपरि निःक्षिपेत् ।

ततः कांस्यपात्रेऽष्टदले पिष्टमयान् नव दीपान् ह्लीं इति प्रज्वाल्य गोमुद्रयामृतीकृत्य अस्त्रेण चक्रमुद्रया च संरक्ष्य, "ॐ श्रीं ह्लीं प्लूं म्लूं फ्लूं ब्लूं ह्लीं श्रीं" इति नवरत्नेश्वरीविद्यया वैदिकमूलाभ्यां पृथक् पृथगभ्यर्च्य, वैदिकमूलान्ते 'श्रीपीताम्बरे एतत्ते नीराजनं नमः' इति देव्याश्चरणादिमूर्धान्तं मूर्धादिचरणान्तं पुनः पुनः नवकृत्वो नीराजयेत् । इति नीराजनविधिः । ततः श्रीपीताम्बरायाः आरतीं पठेत् ।

ततो मूलेन प्राणायामत्रयं कृत्वा ऋष्यादिकरषडङ्गं कृत्वा, प्रतिष्ठितामक्षमालां "ह्लीं सिद्ध्यै नमः" इति सम्पूज्य, देवीं ध्यायेत् । मूलमन्त्रं प्रणवोच्चारणपूर्वकमष्टोत्तरसहस्रं, तदर्धं वा, त्रिंशदष्टोत्तरशतं वा जप्त्वा, ॐ इति जप्त्वा, समाप्य (जपविध्यनुसारम्) पुनः प्राणायाम-ऋष्यादिकरषडङ्गन्यासपूर्वकं मालां शिरसि निधाय, अर्घ्योदकमादाय—

"ॐ गुह्यातिगुह्यगोप्त्री त्वं गृहाणाऽस्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान् महेश्वरि" ।।

इति देव्या दक्षिणहस्ते जपं समर्प्य, मालां सम्पूज्य, रहसि स्थापयेत् ।

## उत्तरकृत्यम्

तदनन्तरं घण्टावादनपूर्वकं श्रीपीताम्बरासहस्रनामस्तोत्रादिभिः देवीं स्तुत्वा प्रदक्षिणानमस्कारैः परितोष्य—

"ॐ यद् दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवेद्यं तद् गृहाणाऽनुकम्पया ॥
आवाहनं न जानामि, न जानामि विसर्जनम् ।
पूजामर्चां न जानामि; त्वं गतिः परमेश्वरि ॥
कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ।
अन्तश्चारेण भूतानां द्रष्ट्री त्वं परमेश्वरि ॥
मातर्योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वचला भक्तिरव्ययाऽस्तु सदा त्वयि ॥
देवी दात्री च भोक्त्री च देवी सर्वमिदं जगत् ।
देवी जयति सर्वत्र या देवी साऽहमेव च ॥

इति कृताञ्जलिः देवीं प्रार्थ्य, पुनः पुनः प्रणम्य, स्वेष्टार्थं सम्प्रार्थ्य, अर्घ्यपात्रमुद्धृत्य--

साधु वाऽसाधु वा कर्म यद् यदाचरितं मया ।
तत् सर्वं भगवत्यम्ब गृहाणाराधनं मम ॥

कृतमाराधनं किञ्चिदर्घ्योदकदानेन समर्प्य, पात्रं स्वस्थाने निवेश्य, पुष्पाञ्जलिमादाय, "ॐ इतः पूर्वं प्राणमनोबुद्धिदेहधर्माधिकारजाग्रत्-स्वप्नसुषुप्त्यवस्थासु, मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं, तत् सर्वं श्रीगुरुदेवसमर्पितमस्तु" इति देव्याः पादयोः पुष्पाञ्जलिं निःक्षिप्य, प्रणम्य, पुनः पुष्पाञ्जलिमादाय, वैदिकमूलं चोच्चार्य—

"ॐरश्मिरूपा महेशान्याश्चात्र पूजितदेवताः ।
पीताम्बराङ्गे लीनास्ताः सन्तु सर्वसुखावहाः ॥"

इति पुष्पाञ्जलिं निक्षिप्य, प्रणम्य, 'द्वारदेवताभ्यश्चतसृभ्यो नमः' देवताश्चार्धाङ्गावरणदेवताश्च श्रीपीताम्बराङ्गे विलीना विभाव्य, देवीं सर्वतेजोरूपां च विभाव्य, 'श्रीपीताम्बरे क्षमस्व' इति तालत्रयं दत्त्वा संहारमुद्रां प्रदर्शयेत् ।

ॐ गच्छ गच्छ परस्थानं स्वस्थानं परमेश्वरि ।
यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥

इति निर्माल्यपुष्पेण सह तत्तेजः समुद्धृत्य, आघ्राय, वहन्नासा-
समाघ्राय, तत्तेजो ब्रह्मरन्ध्रं नीत्वा, सुषुम्णामार्गेण हृदयकमलमानीय—

"ॐ तिष्ठ तिष्ठ परस्थानं स्वस्थानं परमेश्वरि ।
यत्र ब्रह्मादयो देवाः सुरास्तिष्ठन्ति मे हृदि ॥"

एवं स्वहृदि संस्थाप्य, यथोक्तरूपां श्रीपीताम्बरां ध्यात्वा, मानसैरुपचारैः
सम्पूज्य, देव्या निर्माल्यपुष्पादिकं निःक्षिप्य, नैवेद्यशेषं किञ्चिदादाय
'लेह्यचोष्यान्नपानानि, ताम्बूलस्रक्विलेपनानि च निर्माल्यभोजनानि तुभ्यं
ददामि श्रीशिवाज्ञया इति तत्रैव निःक्षिप्य, हस्तौ प्रक्षाल्य, तत
ताम्रादिपात्रे गन्धपुष्पाक्षतान्वितं जलमापूर्य, श्रीसूर्याभिमुखं स्थित्वा—

"ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
नमः सवित्रे शुचये सर्वकर्मप्रसूतये ॥"

"ॐ ह्रां ह्रीं हं सः श्रीसूर्याय एषोऽर्घ्यः स्वाहा" इत्यनेन सूर्यायार्घ्यं
दत्वा कृताञ्जलिः प्रार्थयेत् ।

"ॐयज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम ।
सर्वं तदच्छिद्रमस्तु भास्करस्य प्रसादतः ॥"

इति छिद्रवाधां प्रार्थ्य, पूजावशिष्टं गन्धम् अर्घ्योदकं च वामकरेणा-
ऽऽलोड्य, वैदिकमन्त्रेणाऽष्टधाऽभिमन्त्र्य, तेनाऽऽत्मानं सम्प्रोक्ष्य, मूलेन
निर्माल्यं शिरसि धृत्वा, पुनर्मूलेन चरणोदकं प्राश्य, नैवेद्यं देवीभक्तेभ्यो
विभज्य दत्वा, स्वयमपि भुक्त्वा पीताम्बरारूपः सन् सुखं विहरेत् ।

## इति नित्यपूजाविधिः

यदक्षरपदभ्रष्टं मात्राहीनं च यद् भवेत् ।
तत् सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥

इति श्रीशिवप्रोक्तरुद्रयामले महातन्त्रे श्रीमद्बगलामुखीवृहत्पूजापद्धतिः
सम्पूर्णा ।

## इति श्रीबगलामुखीरहस्ये वृहत्पूजापद्धत्यात्मकः
## तृतीयः परिच्छेदः ।

# अथ चतुर्थः परिच्छेदः

## अथ चक्रपूजाविधिः

१—अथ चक्रपूजारम्भः—

ततो यथोक्तविधिना चन्दनादिना पूजार्थं यन्त्रमालिखेत् । त्रिकोणं षट्कोणम् अष्टदलम् षोडशास्रं धरापुरं संस्थाप्य पुरोवर्तिनि स्थाने पात्रस्थापनं कुर्यात् । स्ववामे चन्दनाऽऽदिना त्रिकोणं वृत्तं चतुरस्रं विलिख्य, तत्र 'आधारशक्तिभ्यो नमः', इति सम्पूज्य, 'अस्त्राय फट्' इति मन्त्रेण प्रक्षालितां त्रिपदीं तत्र संस्थाप्य, 'दशकलात्मने वह्निमण्डलाय नमः', इति सम्पूज्य, "फट्" इति प्रक्षालितं पात्रं तत्र निधाय, "अं अर्कमण्डलाय द्वादशकलात्मने नमः", इति सम्पूज्य—

"गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।।"

इति मन्त्रेण क्रों इत्यङ्कुशमुद्रया तीर्थान्यावाह्य, प्रणवेन गन्धादीन् तत्र निःक्षिप्य, धेनुमुद्रां प्रदर्श्य, मूलमन्त्रेण अष्टवारमभिमन्त्रयेत् । वं इति सामान्यार्घ्यं संस्थाप्य, पुष्पोद्धृतजलेन आत्मानं पूजोपहारांश्च सम्प्रोक्ष्य, अग्रे मूलमन्त्रेण भुवं सम्प्रोक्षयेत् । ततोऽन्यपात्रं स्थापयेत् ।

यथाह कुलार्णवे तन्त्रकारः—

स्वर्णरूप्यशिलाकूर्मकपालालावुमृण्मयम् ।
नारिकेलं च शङ्खं च मुक्ताशुक्तिसमुद्भवम् ।।

एवं सामान्यार्घ्यं संस्थाप्य कलशं स्थापयेत् ।

तद् यथा—स्ववामभागे यन्त्रम्, कर्दमादिगन्धमिश्रितजलेल भूमिं विलिप्य, तत्र षट्कोणान्तरं विन्दुं विलिख्य, बाह्ये वृत्तं चतुरस्रं च कृत्वा, सामान्यार्घ्यजलेनाऽभ्युक्ष्य, "आधारशक्त्यै नमः" इति गन्धाक्षतपुष्पैः सम्पूज्य, मण्डलं कृत्वा, मूलेनाऽऽधारपात्रं प्रक्षाल्य, मण्डले संस्थाप्य,

"रं दशकलात्मने धर्मप्रदाय वह्निमण्डलाय नमः", इत्याधारं सम्पूज्य धूम्रार्चिरादीः कलाः परितः पूजयेत् ।

तद् यथा—यं धूम्रार्चिषे नमः, रं ऊष्मायै नमः, लं ज्वलिन्यै नमः, वं ज्वालिन्यै नमः, शं विष्फुलिङ्गिन्यै नमः, षं सुश्रियै नमः, सं सुरूपायै नमः, हं कपिलायै नमः, लं हव्यवाहायै नमः, क्षं कव्यवाहायै नमः, इति प्रादक्षिण्येन सम्पूज्य, "फट्" इति घटं प्रक्षाल्य, रक्तवस्त्रपुष्पमाल्यादिना भूषयित्वा, "नमः" इति देवीबुद्ध्या आधारे संस्थाप्य, द्वादशकलात्मने अर्थप्रदाय अर्कमण्डलाय नमः, इति घटं सम्पूज्य, यथोक्तविधिना तपिन्यादिकलाः परितः पूजयेत् ।

तद् यथा—कं भं तपिन्यै नमः, खं बं तापिन्यै नमः, गं फं धूम्रायै नमः, घं पं मरीच्यै नमः ङं नं ज्वालिन्यै नमः, चं धं रुच्यै नमः, छं दं सुषुम्णायै नमः, जं थं भोगदायै नमः, झं तं विश्वायै नमः, ञं णं बोधिन्यै नमः, टं ढं धरिण्यै नमः, ठं डं क्षमायै नमः, इति प्रादक्षिण्येन सम्पूज्य परमानन्दपात्रं हस्तेन गृहीत्वा वस्त्रपूतम् अन्यपात्रे कुर्यात् । ततः—

## सुधाध्यानम्

"समुद्रे मथ्यमाने तु क्षीराब्धौ सागरोत्तमे ।
तत्रोत्पन्नां सुधां देवीं कन्यकारूपधारिणीम् ॥
अष्टादशभुजैर्युक्तां रक्तामायतलोचनाम् ।
शङ्खं खड्गं धनुश्चैव कपालं मुसलं तथा ॥
शक्तिं गदाम्बुजं घण्टां दधानां सोत्तरैर्भुजैः ।
चक्रं मुष्टिं शरं शूलं लोहखेटकतोमरम् ॥
अभयं भिन्दिपालं च दधानां दक्षिणैर्भुजैः ।
त्रिनेत्रां दीर्घतन्वङ्गीं कालाग्निसदृशोपमाम् ॥
मन्दारवेष्टितां नित्यां बहुरूपधरां शुभाम् ।
त्रासयन्तीमसुरान् सर्वान् देवानामभयङ्करीम् ॥

या सुधा सा उमा देवी यो मदः स महेश्वरः ।
यो वर्णः स भवेद् ब्रह्मा यो गन्धः स जनार्दनः ।।
स्वादे च संस्थितः सोमः शब्दे देवो हुताशनः ।
इच्छायां मन्मथो देवः लीलायां किल भैरवः ।।
फेने गङ्गा स्थिता देवी बोधस्थाः सप्त सागराः ।
इच्छाशक्तिः सुधामोदे ज्ञानशक्तिस्तु तद्रसे ।।
तत्स्वादे च क्रियाशक्तिः तदुल्लासे परा चितिः ।

एवं ध्यात्वा नमस्कृत्य, चन्दनाक्षतपुष्पैर्घटं सम्पूज्य, मूलमुच्चारयन् ॐ ह्लीं बगलामुखि सर्वदुष्टानामित्यादि विलोममातृकया घटे कारणं पूरयेत् । तत्र चन्दनादि सुगन्धं निःक्षिप्य, "ॐ सां सीं सूं क्ष म ल व र यूं षोडशकलात्मने कामप्रदाय सोममण्डलाय नमः, इति गन्धपुष्पाभ्यां सम्पूज्य, अमृतादिकलास्तत्र पूजयेत् । अं अमृतायै नमः, आं मानदायै नमः, इं पूषायै नमः, ईं तुष्टयै नमः, उं पुष्टयै नमः, ऊं रत्यै नमः, ऋं धृत्यै नमः, ॠं शशिन्यै नमः, ऌं चण्डिकायै नमः, ॡं कान्त्यै नमः, एं ज्योत्स्नायै नमः, ऐं श्रियै नमः, ओं प्रीत्यै नमः, औं अङ्गदायै नमः, अं पूर्णायै नमः, अः पूर्णामृतायै नमः, इति षोडशकलाः सम्पूज्य, "अस्त्राय फट्" इति संरक्ष्य, "ॐ" इति अवगुण्ठ्य मूलेन, "ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा" इत्यनेन संवीक्ष्य, तेनैवाऽभ्युक्ष्य, प्रणवेन पुष्पादिना सम्पूज्य, आत्मानं देवतात्मकं विभाव्य, गन्धलोलितं पुष्पमादाय "ॐ ऐं ह्रीं श्रीं विकारशोषिणि अस्य विकारापनयनाय ॐ फट्" इति जलमध्ये विलोड्य, तत्पुष्पमीशान्यां क्षिप्त्वा शापमोचनं कुर्यात् । कलशोपरि हस्तं दत्त्वा मन्त्रान् पठेत् । 'शां शीं शूं शैं शौं शः' शुक्रशापविमोचितायै सुरादेव्य नमः. इति दशधा जपेत् । ततः "ॐ ऐं ह्रीं श्रीं क्रां क्रीं क्रूं क्रैं क्रौं क्रः कृष्णशापं विमोचय विमोचय अमृतं स्रावय स्रावय स्वाहा" इति दशधा जपेत् ।

"सूर्यमण्डलसम्भूते वरुणालयसम्भवे ।
अमावीजमये देवि शुक्रशापाद् विमुच्यताम् ।।"

इति त्रिःप्रजप्य शुक्रशापं विमोचयेत् ।

एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥

इति त्रिःप्रजप्य ब्रह्मशापं विमोचयेत् ।

"वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन मे देवि ब्रह्महत्यां व्यपोहतु ॥"

इति त्रिरभिमन्त्र्य,

ॐ ऐं अखण्डैकरसानन्दपरे परसुधात्मनि ।
स्वच्छन्दस्फुरणामन्तर्निधेहि कुलरूपिणि ॥
ॐ क्लीं अकुलस्थामृताकारे सिद्धज्ञानकलेवरे ।
अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥
ॐ सौः तद्रूपेणैकरस्यं च दत्वा त्वेतत् स्वरूपिणी ।
भूत्वा परामृताकारे मयि विस्फुरणं कुरु ॥

एतैर्मन्त्रैः कलशमाच्छाद्य अमोघायै नमः, उत्पलायै नमः, सखायै नमः, समाराध्यायै नमः, इति सम्पूज्य, तदुपरि उद्धरणपात्रं संस्थापयेत् ।

पावमानः परानन्दः पावमानः परो रसः ।
पावमानं परं ज्ञानं तेन त्वां पावयाम्यहम् ॥

इति पवित्रीकृत्य मूलमुच्चार्य—

"कृष्णशापविनिर्मुक्ता मुक्ता च ब्रह्मशापतः ।
विमुक्ता शुक्रशापेन पवित्रा भव साम्प्रतम् ॥

इति प्रजप्य, आनन्दभैरवाऽऽनन्दभैरव्यौ ध्यायेत् ।

सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम् ॥
अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरि स्थितम् ।
वृषारूढं नीलकण्ठं सर्वाऽऽभरणभूषितम् ॥
कपालखट्वाङ्गधरं घण्टाडमरुवादिनम् ।
पाशाङ्कुशधरं देवं गदामुसलधारिणम् ॥

खड्गखेटकपट्टीशमुद्गरशूलधारिणम् ।
विचित्रं खेटकं मुण्डं वरदाभयपाणिनम् ॥
लोहितं देवदेवेशं भावयेत् साधकोत्तमः ।

एवं ध्यात्वा, "ह स क्ष म ल व र यूं आनन्दभैरवाय वषट् ।" इति आनन्दभैरवं त्रिःसम्पूज्य—

भावये च परां देवीं चन्द्रकोटियुतप्रभाम् ।
हिमकुन्देन्दुधवलां पञ्चवक्त्रां त्रिलोचनाम् ॥
अष्टादशभुजैर्युक्तां सर्वाऽऽनन्दकरोद्यताम् ।
प्रहसन्तीं विशालाक्षीं देवदेवस्य सन्निधौ ॥

एवं ध्यात्वा, "ह स क्ष म ल व र यीं आनन्दभैरव्यै वषट्" इत्यानन्दभैरवीं त्रिःसम्पूज्य—

"सुरादेव्यै च विद्महे, समुद्रोद्भवे च धीमहि ।
तन्नस्तुष्टिः प्रचोदयात् ॥"

इति गायत्र्या त्रिरभिमन्त्र्य, ततो द्रव्यमध्ये त्रिकोणं विलिख्य, वामावर्तेन पश्चिमकोणादारभ्य दक्षिणकोणपर्यन्तं 'अं आं' इति षोडश स्वरान् मध्ये हं क्षं विलिख्य,

"आदिकादिअकथादिरेखया वर्णमण्डलमखण्डसिद्धिदम् ।
अन्तरुल्लसितहक्षमक्षरं लक्षयन्ति पशवः कथं शिवे ॥"

पश्चात् मूलाधारात् कुण्डलिनीमुत्थाप्य, शिवेन सह संयोज्य, तद्गलितामृतधारां वहन्नासापुटेन द्रव्यमध्ये पतितां विभाव्य, "गङ्गेति" मन्त्रेण क्रों इत्यङ्कुशमुद्रया सूर्यमण्डलात् तीर्थान्यावाह्य, वं इति धेनुमुद्रयामृतीकृत्य मत्स्यमुद्रयाच्छाद्य हुम् इत्यवगुण्ठ्य, चक्रेण संरक्ष्य, अस्त्रेण छोटिकाभिर्दिग्बन्धनं कृत्वा मूलमष्टवारं प्रजयेत् ।

इति प्रथमशोधनम् ।

## अथ द्वितीयशोधनम्

ततः यं इति शोषणम्, रं इति दहनम्, लं इति अमृतेनाप्लावनम्, वं इति मुद्रयाऽमृतीकरणम् । मूलमन्त्रेण सम्प्रोक्ष्य, कवचेनाऽभ्युक्ष्य, 'हुम्'

इत्यवगुण्ठ्य, अस्त्रेण संरक्ष्य, "मां मीं मूं मैं मौं मः मांसाशिनि दक्षिणे मांसं पवित्रं कुरु कुरु स्वाहा" इत्यागममन्त्रेण द्वितीयशोधनं कुर्यात्।

इति द्वितीयशोधनम्।

अथ तृतीयशोधनम्

द्वितीयवत् तृतीयशोधनम् विदध्यात्। तद् यथा "क्रां क्रीं क्रूं क्रैं क्रौं क्रः कण्टकभक्षिणि कण्टकं भक्ष भक्ष स्वाहा" इत्यागममन्त्रेण मत्स्यमुद्रयाऽऽच्छाद्य तृतीयां शुद्धिं कुर्यात्।

इति तृतीयशोधनम्।

अथ चतुर्थशोधनम्

"पोलिके त्वं महादेवि भैरवाऽऽनन्ददायिनि।
सर्वसम्यक्प्रदे देवि मन्त्रसिद्धिं प्रयच्छ मे॥"

तृतीयवत् चतुर्थशोधनम् योनिमुद्रया चतुर्थशोधनमिति संशोध्य, तिलमात्रं पिशितं कलशे निःक्षिप्य, मूलमष्टधा प्रजप्य, ततः कुम्भसमीपे चन्दनरक्तचन्दनकुङ्कुमानामेकत्र मेलनेन त्रिकोणवृत्तं चतुरस्रं विलिख्य शुद्धिमुद्रया मीनान्वितं बलिं निधाय, तत्त्वमुद्रया बलिमुत्सृज्य, 'ह्रीं पथिकदेवेभ्यो नमः" इति बलिं दद्यात्। पुनस्तं बलिं वामपाणिना उत्थाप्य, कलशोपरि त्रिधा भ्रामयित्वा मूलमुच्चरन् पूजावाह्ये निःक्षिपेत्। ततः कारणकलशं संस्थाप्य, ततः शक्तिं शोधयेत्।

इति चतुर्थशोधनम्।

अथ शक्तिशोधनम्––

ततो गन्धतैलाभ्यक्तोद्वर्तनसुगन्धाम्बुना संशोध्य, दिव्यपीतवर्णदुकूलकञ्चुकचादिनिखिलाऽऽभरणैर्भूषयित्वा, शक्तिं यथोक्ततले समुपवेश्य, "ॐ ह्रीं त्रिपुरायै नमः, इमां शक्तिं पवित्रां कुरु कुरु स्वाहा" "मम शक्तिं कुरु कुरु" इति सामान्याऽर्घ्यजलेन सम्प्रोक्ष्य, ततस्तत्कर्णे स्वाऽभेदेन निजं मन्त्रं जपेत्।

"ॐ हं ॐ हुं फट् स्वाहा" "ॐ ह्रीं श्रीं सुरतप्रिये" "ॐ ह्रीं श्रीं ॐ फट् स्वाहा" "ऐं प्लूं ह्रौं जूं सः अमृते अमृतोद्भवे अमृतवर्षिणि शुक्रशापं मोचय मोचय अमृतं स्रावय स्रावय अमृतं कुरु कुरु स्वाहा।"

"ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
गर्भं धेहि सिनीवाली गर्भं धेहि सरस्वति।
गर्भं तेऽश्विनी देवौ आधत्तां पुष्करस्रजौ ॥"

इति शक्तिशोधनं कृत्वा, आत्मश्रीचक्रयोर्मध्ये विशेषार्घ्यं स्थापयेत्।

तद् यथा—पुष्पोधृतसामान्यार्घ्यजलेन आत्मानं पूजोपहारांश्च सम्प्रोक्ष्य, अग्नेर्मूलमन्त्रेण भुवं सम्प्रोक्ष्य, तत्र स्थिरमायाबीजत्रिकोण-षट्कोणवृत्तचतुरस्ररूपं यन्त्रं विलिख्य, मूलमन्त्रेण त्रिकोणं सम्पूज्य, षट्कोणेषु षडङ्गानि सम्पूज्य, चतुरस्रे 'पूर्णगिरिपीठाय नमः, जालन्धर-पीठाय नमः, कामरूपपीठाय नमः', इति सम्पूज्य, अस्त्रमन्त्रेण क्षालितां त्रिपदीं स्थापयेत्। तदुपरि अग्नेर्दशकलाः "यं धूम्रार्चिषे नमः, रं ऊष्मायै नमः, लं ज्वलिन्यै नमः, वं ज्वालिन्यै नमः, शं विस्फुलिङ्गिन्यै नमः, षं सुश्रियै नमः, सं सुरूपायै नमः, हं कपिलायै नमः, लं हव्यवाहायै नमः, क्षं कव्यवाहायै नमः", इति सम्पूज्य, द्वादशसूर्यकलाः पूजयेत्। विलोम-मातृकया अर्घ्यपात्रे जलं पूरयेत्। ततः क्षं लं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं अमृताद्याः षोडश कलाश्च पूजयेत्। जले अङ्कुशमुद्रया अमृतीकृत्य, आवाहनादिमुद्राः प्रदर्शयेत्। ततः षडङ्गेन सकलीकृत्य, शङ्खमुद्रयाऽवष्टभ्य, योनिमुद्रया उद्दीप्य, गन्धाक्षतादिभिः देवीं सम्पूज्य, हृदयादिषडङ्गानि सम्पूज्य, मत्स्यमुद्रयाऽऽच्छाद्य मूलमन्त्रमष्टधा जपेत्।

इति विशेषार्घ्यस्थापनम्।

अर्घ्यात् दक्षिणतः प्रोक्षणीपात्रम्, उत्तरतः शक्तिपात्रम्, तदुत्तरतः आचमनीयपात्रम्, सामान्यार्घ्यपात्रं च। तथाऽन्यानि पात्राणि स्थापयेत्। ततो वामे गुरुं, दक्षिणे गणपतिं पूजयेत्।

पीठपूजनम्—

ततः सामयिकान् सर्वानाहूय यथास्थानं निवेशयेत्। पञ्चमुद्राभिः कुलमार्गपरायणाः चक्रमध्ये चक्ररूपेण पंक्त्याऽऽकारेण वा विशेयुः।

वीराः पद्मासनासीनाः शक्तियुक्ताः क्रमेण तु।
ततश्चक्रेश्वरो भक्त्या पूजयेत् शक्तिसाधकान्॥
चन्दनाक्षतपुष्पैश्च शिवशक्तिधिया क्रमात्।

ततः परामृतं प्रणम्य, अद्वैतभावनया निःशब्दं निर्विकारं कुण्डलिनीमुखे जुहुयात्।

"यावन्न चलते दृष्टिर्यावन्न चलते मनः।
तावत् पानं प्रकर्त्तव्यं, पशुपानमतः परम्॥"

इति नियमानुसारेण पानं कुर्यात्। ततो नीराजनं कृत्वा, ताम्बूलादि-मुखवासं दत्त्वा, प्रदक्षिणां कृत्वा, दक्षिणां समर्प्य, शान्तिस्तोत्रम् पठेत्। पुनर्मूलमुच्चार्य—

"असाधु साधु वा कर्म यद् यदाचरितं मया।
तत् सर्वं कृपया देवि गृहाणाऽऽराधनं मम॥"

"श्रीपीताम्बरार्घ्यं स्वाहा"

यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम।
सर्वं तदच्छिद्रमस्तु पीताम्बराप्रसादतः।

इत्यच्छिद्रमवधार्य, मूलेन निर्माल्यं शिरसि, चन्दनं ललाटे वा, धृत्वा तिलकं कुर्यात्।

"यं यं स्पृशामि पादेन यं यं पश्यामि चक्षुषा।
स एव दासतां याति यदि शक्रसमो भवेत्॥

ततः संहारमुद्रया स्वहृदि देवतां संस्थापयेत् । यथासुखं च विहरेत् ।

इति श्रीबगलामुखीचक्रपूजापद्धतिः सम्पूर्णा ।

पात्रवन्दनपद्यानि शान्तिस्तोत्रम् आनन्दस्तोत्रं चाऽत्र योज्यानि । इति

—:०:—

## २–अथ पात्रवन्दनम्

**(१) प्रथमं पात्रम्—**

ॐ श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृतप्लावितम्
क्षेत्राधीश्वरयोगिनीसुरगणैः सिद्धैः समाराधितम् ॥
आनन्दार्णवकं महात्मकमिदं साक्षात् त्रिखण्डाऽमृतम्
वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ॥१॥

इति स्थूलशरीरं शोधयामि स्वाहा ।

**(२) द्वितीयं पात्रम्—**

ॐ हैमं मीनरसावहं दयितया दत्तं च पेयादिभिः
किञ्चिच्चञ्चलरक्तपङ्कजदशा तस्यै समावेदितम् ॥
वामे स्वादु विशुद्धिशुद्धिकरणं पाणौ निधायाऽऽत्मके
वन्दे पात्रमहं द्वितीयमधुनाऽऽनन्दैकसंवर्धनम् ॥२॥

इति सूक्ष्मशरीरं शोधयामि स्वाहा ।

**(३) तृतीयं पात्रम्—**

ॐ सर्वाम्नायकलाकलापकलितं कौतूहलद्योतनम्
चन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः सेवितम् ॥
ध्यातं देवगणैः परं मुनिवरैर्मोक्षार्थिभिः सर्वदा
वन्दे पात्रमहं तृतीयमधुना स्वात्मावबोधक्षमम् ॥३॥

इति कारणशरीरं शोधयामि स्वाहा ।

**(४) चतुर्थं पात्रम्—**

ॐ मद्यं मीनरसावहं हरिहरब्रह्मादिभिः पूजितम्
मुद्रामैथुनधर्मकर्मनिरतं क्षाराम्लतिक्ताश्रयम् ॥

आचाराष्टकसिद्धिभैरवकलामांसेन संशोधितम्
पायात् पञ्चमकारतत्त्वसहितं पात्रं चतुर्थं नुमः ॥४॥
इति महाकारणशरीरं शोधयामि स्वाहा।

(५) पञ्चमं पात्रम्—

ॐ आधारे भुजगाधिराजवलये पात्रं महीमण्डलम्,
मद्यं सप्तसमुद्रवारि, पिशितं चाष्टौ च दिग्दन्तिनः ॥
सोऽहं भैरवमर्चयन् प्रतिदिनं तारागणं रक्षितम्
आदित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः किङ्करैः ॥५॥
इति आत्मतत्त्वं शोधयामि स्वाहा।

(६) षष्ठं पात्रम्—

ॐ रुद्रं चामरभद्रपीठपरमानन्दोदितं दीपनम्
वामां राज्यमनोरमां शुभकरं सायुज्यसाम्राज्यदम् ॥
नानाव्याधिभवान्धकूपहरणं जन्मान्तरं नाशनम्
श्रीमत्सुन्दरितर्पणं हरिरसं पात्रं च षष्ठं भजे ॥६॥
इति विद्यातत्त्वं शोधयामि स्वाहा।

(७) सप्तमं पात्रम्—

ॐ जाग्रत्स्वप्नसुषुप्तिकार्यपरतश्चैतन्यसाक्षिप्रदम्
विन्दुर्भास्करवह्निचन्द्रधनुषो ज्योतिः कलां चार्पितम् ॥
ईडापिङ्गलमध्यमाह्विवलया यत्कुण्डलीमध्यगम्
पात्रं सप्तमपूरणेन परमानन्दाधिकं पातु माम् ॥७॥
इति कुलतत्त्वं शोधयामि स्वाहा।

(८) अष्टमं पात्रम्—

ॐ मूढाज्ञानकदम्बकाननकठोराग्निस्वरूपां पराम्
ज्ञानध्वस्तसमस्तसंशयधिया पूर्णां सुधाधारया ॥
भोगं मोक्षकरं सभावशकरं मूर्ध्नि ज्वलन्तीं पराम्
देवीं वक्षसि संजपन्ननुदिनं पात्रं भजे चाऽष्टमम् ॥८॥
इति मूलतत्त्वं शोधयामि स्वाहा।

(९) नवमं पात्रम्—

ॐ मन्ये ब्रह्ममयं समस्तजगतां सारं महत् शाश्वतम्
दुर्ज्ञेयं भवभोगचञ्चलधियां स्थूलाकृति ध्यायताम् ।।
अस्माकं द्रवरूपतां करुणया पात्रं तदेतद् द्रुतम्
तत् पात्रं नवमं पिबेच्च नियतं भुक्तिं च मुक्तिप्रदम् ।।९।।

इति विशेषतत्त्वं शोधयामि स्वाहा ।

(१०) दशमं पात्रम्—

ॐ वामे चन्द्रमुखी मुखे च मधुरं पात्रं कराम्भोरुहे
मूर्ध्नि श्रीगुरुचिन्तनं भगवतीध्यानास्पदं मानसे ।।
जिह्वायां जपसाधनं परिणतं कौलक्रमाभ्यासनम्
तत् पात्रं दशमं पिबेच्च परमं भुक्तिं च मुक्तिप्रदम् ।।१०।।

इति देवीतत्त्वं शोधयामि स्वाहा ।

(११) एकादशं पात्रम्—

ॐ वामां वामकरे, सुधां च अधरे, मन्त्रं जपन् मानसे;
वीणावेणुरवाद्ययन्त्रविधिवद् गायन्ति पञ्चो रसः ।।
क्रीडाकेलिकुतूहलेन रसनालावण्यलीलारसः
प्राणोल्लासविलासपूर्णसमये पात्रं च एकादशम् ।।११।।

इति सर्वतत्त्वं शोधयामि स्वाहा ।

३—शान्तिस्तोत्रम्—

ॐ नश्यन्तु प्रेतकूष्माण्डा नश्यन्तु दूषका नराः ।
साधकानां शिवाः सन्तु आम्नायपरिपालिनाम् ।।
जयन्ति मातरः सर्वा जयन्ति योगिनीगणाः ।
जयन्ति सिद्धडाकिन्यो जयन्ति गुरवः सदा ।।
जयन्ति साधकाः सर्वे विशुद्धाः कौलिकाश्च ये ।
समयाचारसम्पन्ना जयन्ति पूजका नराः ।।

नन्दन्तु अणिमासिद्धाः नन्दन्तु कुलपालकाः ।
इन्द्राद्या देवताः सर्वास्तृप्यन्तु वास्तुदेवताः ॥
चन्द्रसूर्यादयो देवास्तुष्यन्तु मम भक्तितः ।
नक्षत्राणि ग्रहा योगाः करणा राशयस्तथा ॥
सर्वे ते सुखिनो यान्तु सर्वा नद्यश्च पक्षिणः ।
पशवस्तरवश्चैव पर्वताः कन्दरा गुहाः ॥
ऋषयो ब्राह्मणाः सर्वे शान्तिं कुर्वन्तु मे सदा ।
शुभा मे विदिताः सन्तु मित्रास्तिष्ठन्तु पूजकाः ॥
ये ये पापधियः सुदूषणरता मन्निन्दकाः पूजने
वेदाचारविमार्गनष्टहृदया भ्रष्टाश्च ये साधकाः ॥
दृष्ट्वा चक्रमपूर्वमर्चनविधौ ये कौलिका दूषकाः
ते ते यान्तु विनाशमत्र समये श्रीभैरवस्याऽऽज्ञया ॥
साधकानां च द्वेष्टारः सदैवाम्नायदूषकाः ।
डाकिनीनां मुखे यान्तु तृप्तास्तत्पिशितैस्तु ताः ॥
शत्रवो नाशमायान्तु मम निन्दाकराश्च ये ।
द्वेष्टारः साधकानां च ते नश्यन्तु शिवाऽऽज्ञया ॥
ॐ शान्तिरस्तु शिवं चास्तु वासवाग्निप्रसादतः ।
मरुतां ब्राह्मणैश्चैव वसुरुद्रप्रजापते ॥

४–सौभाग्यार्चनक्रमः—

**शक्तिसंगमे—**

श्री देव्युवाच

देवेश श्रोतुमिच्छामि बगलाक्रमनिर्णयम् ।

श्री शिव उवाच

सौभाग्यार्चाक्रमेणैव बगला शीघ्रदर्शिनी ।
पीताम्बरधरो मन्त्री पीतभूषणभूषितः ॥

पीतमाल्याम्बरधरः पीतगेहसमास्थितः ।
पीतपूजापरः प्रोक्तः पीतान्नप्रीतमानसः ।।
पीतद्रव्योपभोगी च पीतासनसमन्वितः ।
पीतहोमी पीतपुष्पी पीतशक्तिसमन्वितः ।।
रोचनां भुवि संदद्यात् कुङ्कुमं मुनिपुत्रकम् ।
हरिद्रया त्रिपुण्ड्रं च तन्मध्ये खादिरं शिवे ।।
हरिचन्दनेन यूपेन धूपितः परमेश्वरि ।
सर्वं सर्वं तु सम्पाद्य क्रममार्गरतो भवेत् ।
सृष्टिस्थित्यन्तसंहारैः पूजा च त्रिविधा कलौ ।
केवला सृष्टिपूजा स्यात् गर्भकौलागमक्रमात् ।।
अर्चनं गौडदेशे तु स्थितिमार्गं कुमारिके ।
गुप्तकौलागमं नाम गौडदेशार्चने विधिः ।।
कामरूपागमं नाम संहारक्रमपूजने ।
गौडागमं चाऽत्रलम्ब्य साङ्ख्यायनमुनिस्तथा ।।
उक्तवानागमे चैव स्थित्यर्चां शृणु पुत्रिके ।
सर्वाङ्गसुन्दरीं रम्यां सर्वावयवशोभिताम् ।।
नवोढ़ां पुष्पिणीं चैव प्रार्थयेद् विप्रकन्यकाम् ।
कृष्णाष्टम्यां चतुर्दश्यां पौर्णमास्यां कुमारिका ।।
अथ वा भौमवारे च निशायां भृगुवासरे ।
सुवासितेन तैलेन कुर्यादभ्यञ्जनं तथा ।।
तूलिकातल्पमानीय आस्तीर्योदङ्मुखे तदा ।
तस्योपरि समास्तीर्य शेवन्तैर्जातिचम्पकैः ।।
कर्पूरं चैव कस्तूरीमिश्रितं चन्दनं तथा ।
सर्वाङ्गलेपनं कुर्यात् लक्ष्मीसूक्तेन बुद्धिमान् ।।
पर्यङ्कोपरि तां कन्यां चन्दनेन विलेपिताम् ।
ध्रुवा द्यौरिति मन्त्रेण कन्यां दक्षिणतोमुखीम् ।।

उन्मुखीशयनं कुर्यात् श्रीसूक्तेन कुमारकः ।
तस्याः पादौ प्रसार्याऽथ गुप्तेनाऽर्चनमाचरेत् ॥
न्यस्त्वा षोढाद्वयं चैव वगलापञ्जरं न्यसेत् ।
कन्यां चैव न्यसेदेवं तत्तदङ्गानि संस्मरन् ॥
पादं जपपुरं चैव मार्जयेन्मूलविद्यया ।
गन्धद्वारेति मन्त्रेण कुर्यात् कस्तूरिलेपनम् ॥
मूलमन्त्रेण सम्यक् च पुष्पमालां समर्पयेत् ।
निवेदयेद् द्रव्यशुद्धिं तत्रैव जपमाचरेत् ॥
शतमष्टसहस्रं च मन्त्रराजमिमं जपेत् ।
पुरश्चरणमध्ये च प्रतिमार्गं च वासरे ॥
अथवा पौर्णमास्यां च सौभाग्यार्चनमाचरेत् ।
प्रयोगसिद्धिदं पुंसां मन्त्रसिद्धिकरं परम् ॥
एतत्क्रमं विना देवि प्रयोगो न भवेत् क्वचित् ।
तस्मात् सर्वप्रयत्नेन सिद्ध्यर्थं देवि भूतले ॥
सौभाग्याख्यक्रमं देवि विना सिद्धिर्न कोटिभिः ।
अभिमानाष्टकं त्यक्त्वा त्यक्त्वा वै दूषणत्रयम् ॥
त्यक्त्वा पञ्चेन्द्रियासक्ति सौभाग्यक्रममाचरेत् ।
सुखदुःखे समे कृत्वा लाभाऽलाभौ जयाऽजयौ ॥
शीतोष्णसमतां कृत्वा सौभाग्यक्रममाचरेत् ।
षोढाद्वयं च न ज्ञात्वा यः करोत्यर्चनं भुवि ॥
पतितः स भवेत् पुंसो रौरवं नरकं व्रजेत् ।
वाह्याभ्यन्तरयोर्देवि प्रभेदज्ञानयोर्विना ॥
पीतक्रमो न कर्तव्यो देवताशापमाप्नुयात् ।
संकल्पं च विकल्पं च त्यक्त्वा विज्ञानमानसः ॥
पीतक्रमं ततः कुर्यात् नो चेद् भ्रष्टो भवेद् ध्रुवम् ।
जितेन्द्रियः सुखं कृत्वा कुर्यात् पीतक्रमं शिवे ॥

सुखार्थं कुरुते योऽसौ देवताशापमाप्नुयात् ।
स्वस्यावेशविधिं चैव न ज्ञात्वा परमेश्वरि ॥
यः करोत्यर्चनं देवि स विप्रः पतितो भवेत् ।
यस्तु कन्यामनःक्षोभं करोति यजने शिवे ॥
भ्रान्तचित्तो भवेत् सद्यो वाचस्पतिरिवापरः ।
नोत्पादयेद् वेदनां च मनसश्च शरीरयोः ॥
वेदनां जनयेद् यस्तु स नरः पतितो भवेत् ।
स्वपत्नीं भ्रातृपत्नीं वा गुरुपत्नीमथापि वा ॥
अर्चयेद् यौवनोपेतां सांख्यायनसमर्पिताम् ।
दीक्षालयस्थां रजकीं कुलालगृहकन्यकाम् ॥
पुलिन्दकन्यकां वापि मृदुचूडकमादरात् ।
अर्चयेद् ऋषिपत्नीं च पूर्वोक्तलक्षणैर्युताम् ॥
अर्चनं विधिमार्गेण पूजां दुर्वाससो मतम् ।
सर्वलक्षणसंयुक्तां पुष्पिणीमर्चयेच्छिवे ॥
मतङ्गमुनिनोक्तं च सद्यःसिद्धिकरं भुवि ।
सिद्धिक्रमोऽयं देवेशि नास्ति सिद्धिर्गुरुं विना ॥
तस्मात् सर्वप्रयत्नेन गुर्वाज्ञापरिपालकः ।
सिद्धो भवति देवेशि नात्र कार्या विचारणा ॥
इति संक्षेपतः प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ।

इति शक्तिसंगमे चतुर्विंशतिपटले ताराखण्डे सौभाग्यार्चनम् ।

## मुण्डसाधनम् ( वीरसाधनम् )

नानाकोटिमुनीन्द्रसेवितपदां पीताम्बरालङ्कृताम्
वामे मुण्डधरां गदां च दधतीं प्रेतासनाध्यासिनीम् ॥
ध्वंसीं दुष्टजनस्य भक्तजनतां सन्तोषयन्तीं सदा
ध्यायेऽहं बगलामुखीं प्रतिदिनं दारिद्र्यविध्वंसिनीम् ॥

उक्तं च संगमे—

श्रीविद्यायां कालिकायां तारिण्यां भैरवीमनौ ।
चण्डके बगलायां च साधनेयं प्रकीर्तिता ॥

इति प्रमाणाद् बगलामन्त्रे वीरसाधनमुच्यते ।

प्रथमं शय्यासाधनम्--

कुहूपूर्णेन्दुसंक्रान्त्यां शनौ वा मङ्गले दिने ।
चतुर्दश्यष्टभागे तु चितां वापि शवं व्रजेत् ॥

शय्यादिकं तु तदनुकल्पम्, तत्र प्रयोगः—

आदौ नग्नो भूत्वा रात्रौ सार्धप्रहरगतायां, शय्यां व्रजेत्, मूलेन शय्यामभिमन्त्रयेत्, तत्रोपविशेत्, वामे "गुरुभ्यो नमः, परमगुरुभ्यो नमः, परात्परगुरुभ्यो नमः, परमेष्ठिगुरुभ्यो नमः" इति गुरुचतुष्टयं प्रणम्य, दक्षिणे गणेशं, मध्ये श्मशानवासिन्यै, ततो 'ह्रीं' इत्यासनं सम्पूज्य, आसनतले शय्यातले वा "ॐ ऐं फट्" वा लिखेत् । मूलेनाचम्य "ॐ मणिधरवज्रिणि महाप्रतिसरे मां रक्ष रक्ष हुं फट् स्वाहा" इति शिखां बद्धा, शरीरेऽङ्गन्यासादीन् भूतशुद्ध्यन्तं कृत्वा, स्वहृदि देवतां विभाव्य, मानसैः सम्पूज्य, शय्यातले पूर्वलिखितमन्त्रोपरि 'वं वटुकेभ्यो नमः' इति मनसा पाद्यादिभिः सम्पूज्य, रं इति जलधारया अग्निप्राकारं विचिन्त्य, संकल्पं कुर्यात् ।

तिथ्याद्युल्लिख्य, अमुकशर्म्माऽहम् अद्यारभ्य, एकदिनसाध्ये तु, 'यावत् कालेन सिध्यति तावत् कालम' अमुकदेवता–(बगलामुखी)–सिद्धिकामः अमुकमन्त्रसाधनम् ( मन्त्रराजं हृदयस्तोत्रस्थं वा ) अहं करिष्ये, इति संकल्प्य, अष्टाधिकायुतजपं कुर्यात् । जपं समर्प्य, पुनः संकल्पं कुर्यात्, तद्दशांशहवनादिकं चाऽऽचरेत् । धारणाकुशेन वटुकं कृत्वा क्षमस्वेति विसृजेत्, इति शय्यासाधनम् । एवं परकीय शून्यागारेऽपि ।

## अथ त्रिपथचतुष्पथसाधनम्

त्रिपथं चतुष्पथं वा गत्वा गुरुं सम्पूज्य, 'मणिधरी' इति मन्त्रेण वस्त्रान्ते ग्रन्थिं बध्वा—

"ॐ श्मशानवासिनो येऽपि देवा दैत्याश्च भैरवाः।
दयां कुर्वन्तु ते सर्वे सिद्धिदास्ते भवन्तु मे ॥"

इति प्रणमेत्। ततः पूर्वमुख उदङ्मुखो वोपविश्य, आचम्य, स्वस्तिवाचनस्थानं सम्मार्ज्य, तत्र 'ह्सौः' इति विलिख्य, तत्रासनमास्तीर्य संविशेत्। हृदि इष्टं ध्यात्वा, मानसैः समभ्यर्च्योपकरणैः अष्टदिक्षु बलिं दद्यात्। तद्यथा—पूर्वे काल्यै नमः, इति सम्पूज्य बलिं दद्यात्।

काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी।
विप्रचित्ता तथा नीला बलाका च घनत्विषा ॥

एता अष्टदिक्षु सम्पूज्य बलिं दद्यात्। तत्र संकल्पः—अमुकदेवताया अमुकमन्त्रजपेन अमुकसिद्धिकामः अष्टाधिकायुतजपमहं करिष्ये। त्रिपथे चतुष्पथे वा जपं समर्प्य, दक्षिणादिकं दत्वा, शयनं संस्कृत्य इष्टं स्मरेत्। गृहं गच्छेत्। एवं विषाणवृक्षे उज्जटे महोज्जटेऽपि साधयेत्।

## जपसंख्यानियमः—

एकाक्षरो दशसहस्रात्मकः, द्व्यक्षरोऽष्टसहस्रात्मकः त्र्यक्षरोऽष्टसहस्रात्मकः, इति साधारणनियमः।

## अथ बिल्वमूलम्—

सवारि बिल्वमूलं गत्वा, गुरुं सम्पूज्य, क्षेत्रपालं च समभ्यर्च्य—

"ॐ क्षेत्रपाल महाभाग श्मशानाधिप सुव्रत।
सिद्धिं देहि जगत्कर्तः देहि स्थानं नमोऽस्तु ते ॥"

इति नत्वा संमार्जितस्थले "ऐं ह्सौं ऐं" इति लिखेत्। पूर्ववत् जपादिकं विधाय, संकल्पं कुर्यात्। अमुकदेवताया अमुकमन्त्रसिद्धिकामः अष्टाधिकायुतम् इत्यादि। बिल्वमूले जपं कृत्वा समर्पयेत्, स्थानं विसृज्य, स्थानं सम्मार्ज्य गृहं गच्छेत् इति।

अथ त्रिमुण्डम्—

वानरमहिषमार्जारमुण्डत्रयं, मनुष्यमुण्डत्रयं वा गन्धोदकेन संप्रोक्ष्य, स्थापयेत् । भूमौ पोथयित्वा, तदुपरि वितस्तिमितां वेदीं विधाय, तत्र भूतनाथादीन् पूजयेत् । पूर्वे भूतनाथाय नमः, दक्षिणे श्मशानाधिपाय नमः, पश्चिमे कालभैरवाय नमः, उत्तरे ईशानाय नमः, इति सम्पूज्य, बलिं दत्त्वा, मध्ये "ह्सौः" इति विलिख्य, तत्र ऐं, वाग्देवतायै नमः, इति बलिं दत्त्वा—

"देवेश देवदेवेश मुण्डरूप जगत्पते ।
दयां कुरु महाभाग सिद्धिदो भव मुण्ड मे ।।"

इति पुष्पाञ्जलित्रयं दत्त्वा, "ह्लीं ह्लीं हुं फट्" इति मुण्डेभ्यः पाद्यादिकं दद्यात् । विदिक्षु 'ह्लीं चण्डिकायै नमः' इति नैर्ऋत्यादिकोणेषु वायव्ये 'ह्लीं भद्रकरिण्यै', ईशान्ये 'ह्लीं दयायै', अग्निकोणे 'ह्लीं चण्डिकायै', इति बलिं दद्यात् । ततः सम्मुखे उत्थाय—

"श्मशानवासिनो ये ये देवा देव्यश्च भैरवाः ।
दयां कुर्वन्तु ते सर्वे सिद्धिदास्तु भवन्तु मे ।।

इति पुष्पाञ्जलित्रयं दत्त्वा, स्थानं स्पृष्ट्वा, 'वशो भव' इति वदेत् । ततो वेदिकायामासनमास्तीर्य, उपविश्य, 'रं' इति जलधारया अष्टप्राकारं विचिन्त्य, संकल्पोक्तविधिना इष्टं सम्पूज्य, संकल्पं कुर्यात् । अमुकदेवतायाः (श्रीबगलामुख्याः) अमुकमन्त्रसिद्धिकामः त्रिमुण्डोपरि अष्टाधिकायुतजपमहं करिष्ये, इति जप्त्वा, समर्प्य, दक्षिणादिकं दत्त्वा, स्थानं संस्कृत्य, पुरश्चरणविशेषः कीलकं विना कार्यः ।

त्रिमुण्डपोथनस्थानमाह—

शून्यागारे नदीतीरे पर्वते वा चतुष्पथे ।
विल्वमूले श्मशाने वा निर्जने चैकलिङ्गके ।।
एतेषु योजयेन् मुण्डं सर्वकामार्थसिद्धये ।

इति त्रिमुण्डसाधनं सम्पूर्णम् ।

६—कवचम्—

श्रीगणेशाय नमः। प्रथमं गुरुं ध्यायेत्।

**श्रीदेव्युवाच—**

राज्ञां मण्डलिकादेवीबगलोपरि सर्पताम्।
सवर्णानां महादेव धनविप्लुतचेतसाम् ॥१॥
दुष्टसर्पादिजन्तूनां स्तम्भनं वद शङ्कर।

**श्रीभैरव उवाच**

पुरा कृतयुगे देवि वातक्षोभ उपस्थिते ॥२॥
महार्णवानामेकत्वे गते क्षोभं भयं ययुः।
सेन्द्राः सवैष्णवाः सर्वे सभयं मामुपस्थिताः ॥३॥
शिव शङ्कर रुद्रेश रक्षाऽस्मान् शरणागतान्।
महावातादिसंक्षोभभयादस्मान् महार्णवात् ॥
तच्छ्रुत्वाऽहं महेशानि कवचं पूर्वनिर्मितम्।
दत्तवान् सर्वदेवेभ्यो महाभयनिकृन्तनम् ॥५॥
कवचं बगलामुख्याः शिवप्राणप्रदं महत्।
पूर्वं भस्माऽसुरत्रासाद् भयव्याकुलितः स्वयम् ॥६॥
पच्यन्ते तेन मत्प्राणास्तान् ररक्ष महेश्वरी।
शिवप्राणप्रदं तस्य विश्रुतं रक्षकं परम् ॥७॥

ॐ अस्य श्रीबगलामुखीकवचस्य श्री भैरव ऋषिः उष्णिक् छन्दः, अद्वैतरूपिणी महास्तम्भनकारिणी श्रीपीताम्बरा देवी, स्थिरमाया वीजं, स्वाहा शक्तिः, प्रणवः कीलकम्, मम दूरस्थानां समीपस्थानां सर्वदुष्टानां वाक्पदगतिमुखस्तम्भनार्थं, परसैन्यपरमन्त्रयन्त्रतन्त्रस्तम्भनार्थं, सर्वराजकुलमोहनार्थं, सर्वकामिनीजनवश्यार्थं श्रीबगलामुखीप्रीत्यर्थे जपे विनियोगः। ॐ ह्लां हृदयाय नमः, ॐ ह्लीं शिरसे स्वाहा, ॐ ह्लूं शिखायै वषट्, ॐ ह्लैं कवचाय हुम्, ॐ ह्लौं नेत्रत्रयाय वौषट्, ॐ ह्लः अस्त्राय फट्। एवं करन्यासः।

### अथ ध्यानम्

मध्येसुधाब्धि मणिमण्डितरत्नवेद्याम्
सिंहासनोपरि गतां परिपीतवर्णाम् ॥
पीताम्बराऽऽभरणमाल्याविभूषिताङ्गीम्
देवीं नमामि धृतमुद्गरवैरिजिह्वाम् ॥

षट्त्रिंशदक्षरा विद्या बगला पातु मे शिरः ।
सहस्रारे गुरुः पातु शक्त्या परमयोज्ज्वलः ॥८॥
चिद्रूपा परमा शक्तिर्ललाटं शिवगेहिनी ।
भ्रूयुग्मं मे महाकाली नेत्रे मे परमेश्वरी ॥९॥
कर्णयुग्मं पीतपुष्पप्रिया मे पातु कपोलयोः ।
चिबुके परमा शक्तिरोष्ठयोः परमा कला ॥१०॥
वदनं सकलं पातु परब्रह्मस्वरूपिणी ।
पीतपुष्पार्चिता कण्ठं स्कन्धौ स्कन्दस्तनप्रदा ॥११॥
पीताम्बरा दक्षभुजां वामे वामाङ्गधारिणी ।
हृदयं च स्तनद्वन्द्वं नाभिं विश्वस्वरूपधृक् ॥१२॥
उदरं दुर्धरा मेऽव्यात् कटिं कन्दर्परूपधृक् ।
नितम्बौ नमिता देशे देवता जघनं रमा ॥१३॥
जङ्घायुग्ममनाधारा जानुनी जन्तुरूपिणी ।
ऊरू धर्मप्रदा मेऽव्याद् गुल्फे गगनरूपधृक् ॥१४॥
पादौ तु कूर्मरूपा सा पातु पादाङ्गुलीस्तथा ।
शिरसः पादपर्यन्तं पातु मां परमा कला ॥१५॥
गणेशरूपिणी मेऽव्यादाधारं सच्चतुर्दलम् ।
स्वाधिष्ठानं षड्दलं पातु मे ब्रह्मरूपधृक् ॥१६॥
मणिपूरे दशदले पातु केशवरूपिणी ।
हृत्पङ्कजं शैवभक्तिविशुद्धं जीवरूपिणी ॥१७॥
आज्ञाचक्रे बिन्दुरूपा परब्रह्मकुटुम्बिनी ।
ब्रह्मरन्ध्रं सहस्रारे पङ्कजे स्वच्छरूपिणी ॥१८॥

पातु मां परमा शक्तिश्चमरी कुटिलालका ।
षट्त्रिंशदक्षरा विद्या पीता पीतवपुर्धरा ॥१९॥
पीतपुष्पार्चिता पीतनैवेद्याऽपि बलिप्रिया ।
सर्वाङ्गे मे शुभा पातु वैरिस्तम्भनकारिणी ॥२०॥
ब्रह्मरन्ध्रं तु परमा संसारार्णवतारिणी ।
मां तारयेन् महादेवी मनोवाञ्छितदायिनी ॥२१॥
आज्ञाचक्रे गुरुरूपा महाभयविनाशिनी ।
सर्वविद्याप्रदा पातु जिह्वां शास्त्रवपुर्धरा ॥२२॥
विशुद्धे षोडशदले जीवेश्वरवपुर्धरा ।
षट्त्रिंशत्तत्वरूपा सा कण्ठस्था मां शिवाऽवतु ॥२३॥
हृत्पङ्कजे भवानी सा हृद्यरूपा परात्मिका ।
स्वकीयान् महाशत्रून् विदारय विदारय ॥२४॥
मणिपूरे दशदले महाविष्णुस्वरूपिणी ।
दारयत्यखिलान् लोकान् महामाया परा तु सा ॥२५॥
प्रजापतिस्वरूपेयं स्वाधिष्ठाने तु षड्दले ।
सृष्टिस्थितिपरा विद्या मां पातु बगलामुखी ॥२६॥
गणेशरूपधृक् पातु ममाधारे चतुर्दले ।
षोडशस्वररूपेण पातु मां परमा कला ॥२७॥
कं खं गं घं तथा ङं च चं छं जं झं तथाऽवतु ।
ञं टं ठं डं ढं तथा णं तं थं दं धं तथाऽवतु ॥२८॥
नं पं फं तु शत्रुभ्यः पीता मां ध्यानतत्परम् ।
बं भं मं यं विदारय शत्रून् मे वाक्स्वरूपिणी ॥२९॥
रं लं वं शं तथा षं सं शत्रोर्जिह्वां विदारयतु ।
मे वाचं मे मुखं जिह्वां सदा रक्षतु रक्षतु ॥३०॥
हं लं क्षं सकलं पातु रक्ष मे परमं यशः ।
प्रणवं स्थिरमायां च तृतीयं कान्तिरूपिणी ॥३१॥

या तृतीयस्वरा युग्मं पादाद्यं स्वरपङ्कजम् ।
द्विस्तृतीयं दक्षनेत्रं 'सर्वदुष्ट' वहुस्मृतम् ।।३२।।
द्वितीयं कीलयेति च तथा बुद्धिं विनाशय ।
षष्ठ्या वाचं मुखं पदं स्तम्भयाथोऽपि जिह्वया ।।३३।।
स्थिरमाया तथा तारं चान्ते वह्निवधूप्रिया ।
एषा विद्या महाविद्या शत्रुस्तम्भनकारिणी ।।३४।।
त्रिधा मन्त्रं तथोच्चार्य सर्वाङ्गे व्यापकं कुरु ।
जयत्येव न संदेहः शत्रून् घोरान् महाहवे ।।३५।।
कुलालमृत्तिका ग्राह्या वामहस्तेन दीपकम् ।
कृत्वा प्रज्ज्वाल्य तैलेन वाग्रे स्थाप्यं ततो जपेत् ।।३६।।
त्रिरात्रे स्तम्भयत्येव शत्रुसेनां महाहवे ।
गौरवर्णां पीतपुष्पैर्बालां सम्पूज्य वामतः ।।३७।।
न्यासान् विधाय तद्देहे जायायोगे जपेन् मनुम् ।
पीतोपचारैस्तां शक्तिं सन्तोष्य परिवारणात् ।।३८।।
वशयत्येव लोकेशं किं पुनः क्षुद्रमानुषम् ।
वाचः स्तम्भनकामस्तु वीरशक्तिं शुभाननाम् ।।३९।।
षोडशाष्टसुवर्णाद्यैरलङ्कृत्य भजन् शिवाम् ।
सहस्रं मूलमन्त्रं तु जप्त्वा वाचस्पतेरपि ।।४०।।
स्तम्भयत्येव परमां वाचं, किं पुनः क्षुद्रमानुषम् ।
वशीकरणकामस्तु बध्वा परिकरं दृढम् ।।४१।।
शक्तिर्लिङ्गोपरि स्थाप्या त्रिसहस्रं जपेन् मनुम् ।
इन्द्राणीं वशयत्येव किं पुनः क्षुद्रमानुषीम् ।।४२।।
मण्डलाधीशं वशीकुर्याच्चोत्तराभिमुखः स्थितः ।
सुन्दरीं षोडशीं शुभ्रां स्वाननां च शुचिस्मिताम् ।।४३।।
तत्कुचौ च करे धृत्वा पीताद्यां हसितानानाम् ।
लिङ्गे संस्थाप्य संचुम्बन् मुखं पीतामनुं जपेत् ।।४४।।

त्रिसहस्रे महाराजं वशयत्येव नाऽन्यथा ।
कृष्णाष्टमीं समारभ्य यावत् कृष्णचतुर्दशी ॥४५॥
नियतं तु सहस्रं च शापाऽनुग्रहसिद्धये ।
येन केनाप्युपायेन बगलाभक्तितत्परः ॥४६॥
स्तम्भयेत् सकलान् देवान् वशयत्येव शङ्करम् ।
मारयेच्छत्रुसंघातं चालयेत् पर्वतानपि ॥४७॥
देवान् स्थापयते चेन्द्रे दृष्ट्वा ज्वरविनाशनम् ।
स्तम्भितं चैकधा देवि तत् सकृच्चासकृज् जपन् ॥४८॥
एका सा परमा विद्या महाशत्रुविदारिणी ।
नास्तिके तस्करे दुष्टे मूढे पण्डितमानिनि ॥४९॥
न देया दुर्जने विद्या शुभोदयमवाप्नुयात् ।
सुशीलाय सुदातव्या गुरुभक्तिपराय च ॥५०॥
विशुद्धाय महामन्त्रजापिने देयमुत्तमम् ।
अस्य पार्वतीमाहात्म्यकवचस्य वरानने ॥५१॥
महेन्द्रादौ रणे वाते प्रलये पर्युपस्थिते ।
स्तम्भिता चैकधा देवि स्मृत्वा तं सकृज् जपात् ॥५२॥
कृत्वा पुरा तु कवचं जपेत् मन्त्रं समाहितः ।
नान्यथा स्तम्भिनी विद्यासिद्धिः स्यादिति निश्चयम् ॥५३॥

इति श्रीवीरतन्त्रे महोग्रताराकल्पे भैरवसंवादे षट्त्रिंशदक्षरविद्याप्रस्तावे
बगलामुखीकवचं समाप्तम् ।

इति श्रीबगलारहस्ये शान्तिस्तोत्रादिविधानात्मकः
चतुर्थः परिच्छेदः ।

# अथ पञ्चमः परिच्छेदः

## वैदिकं प्रकरणम्

१—श्रीबगलामुख्या वैदिकं रूपम्—

उक्तं चाभिचारिकप्रकरणे यजुर्वेदे—

रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वगलमुत्किरामि यं मे निष्टचो यमसात्यो निचखानेदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि, यं मे सजातो यमसजातो, निचखानोत्कृत्यां किरामि।

( यजुः ५।२३ )

उव्वट भाष्यम्—रक्षोहणं रक्षांसि या वागपहन्ति सा रक्षोहा तां रक्षोहणम्। "ब्रह्मभ्रूणवृत्रेषु क्विप्" धातूपपदकालप्रत्ययनियमान्न प्राप्नोति, इति "बहुलं छन्दसि इति क्विप् प्रत्ययः। वलगहनं वलगान् कृत्याविशेषान् भूमौ निखनितान् शत्रुभिर्विनाशार्थं हन्तीति वलगहा वाक्। 'पूर्ववत् क्विप् प्रत्ययः।' तां वलगहनम्। 'वलो वृणोतेः' यस्य वधार्थं क्रियते तं रोगादिभिर्वृण्वन् आ प्रच्छादयन् गच्छतीति वलगः, वैष्णवीं विष्णुदेवत्यां वाचं वदेति सम्बन्धः। उत्किरति। इदमहं यत् करोमि तद् बलगकृत्याविशेषम् उत्किरामि उद्वपामि। यं मे निष्ठचः यं वलगं मे मम निष्ठचः पुत्रः, स हि निर्गत्य शरीरात् ततो विस्तीर्णो भवति यं च अमात्यः वलगं निचखान निखनति। छन्दसि लङ्लुङ्लिटः सर्वेषु कालेषु भवन्ति। द्वितीयमुत्किरति। यं मे समानो विद्यादिभिः सदृशः, असमानः विद्यादिभिरसदृशः। शेषं व्याख्यातम्। तृतीयमुत्किरति। यं मे सबन्धुः सबन्धुः स्वजनः असबन्धुस्तद्विपरीतः शेषं व्याख्यातम्। चतुर्थमुत्किरति। यं मे सजातः। सजातो भ्राता। स हि समानजन्मा भवति, असजातः

असमानजन्मा भ्रातुरसदृशः । शेषं व्याख्यातम् । सर्वमुत्किरति उत्कृत्यां किरामि उत्किरामि कृत्याम् ।

महीधरेणाऽपि समानमेतद् व्याख्यातम् । प्रमाणवाक्यानि कानिचिद-धिकानि प्रदत्तानि । किञ्चिद् वैशद्यं च प्रदर्शितम् यथा—

पराजयं प्राप्य पलायमानैः राक्षसैरिन्द्रादिवधार्थमभिचाररूपेण भूमौ निखाता अस्थिकेशनखादिपदार्थाः कृत्याविशेषा वलगाः । "वलगो वृणोतेः" (नि० ६।२) "तान् बाहुमात्रान् खनेत्" इति श्रुतेः "असुरा वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन् तान् बाहुमात्रे त्वविन्दन् तस्माद् बाहुमात्राः खायन्ते इति तैत्तिरीयश्रुतेः ।" वैष्णवीं विष्णुसम्बन्धिनीम् ।

कात्यायनसूत्रे कृत्यानिवारणात्मकस्य अस्य प्रकरणस्य निरूपणप्रकारः सम्यक् प्रदर्शितोऽस्ति । अस्मिन् प्रकरणे यः सिद्धान्तो निरूपितः, स श्रीबगलामुख्यास्तान्त्रिकस्वरूपेण साम्यतां गच्छति । अथर्ववेदस्य वगलासूक्तेऽनेके प्रकाराः कृत्यायाः दर्शिताः सन्ति, तान् सूक्तलेखने दर्शयिष्यामः ।

यजुर्वेदस्य काण्वशाखायां तैत्तिरीय-काठक-मैत्रायणीशाखास्वपि चैतल्लभ्यते । वैष्णवीमिति पदेन विष्णूपासिता शक्तिः स्वतन्त्रतन्त्रसम्मता यद्विद्याप्रस्तावे उक्तम्—स्तम्भनशक्तिरूपेयं विद्या तस्याः व्यापकत्व-मभ्युपगम्य पुरुषरूपेण स्तौति ।

येन द्यौरुग्रा पृथिवी च दृढा येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ।।
(य० ३२।६)

स्पष्टार्थत्वान्न व्याख्यायते । अन्यच्च—

"यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधिसूर उदितो विभाति कस्मै देवाय हविषा विधेम ।
(य० ३२।७)

अत्रापि उक्तमेव तत्त्वं स्वीकृतम्। वृहदारण्यकस्याक्षरब्राह्मणे अक्षररूपेणेदमेव व्याख्यातम्।

एतस्याक्षरस्य प्रशासने गार्गिसूर्याचन्द्रमसौ विधृतौ तिष्ठतः,
एतस्याक्षरस्य प्रशासने गार्गिद्यावापृथिव्यौ विधृते तिष्ठतः।
इत्यादि (३।६)

"अक्षराम्बरान्तधृतेः" "सा च प्रशासनात्" (वे० द० १।३।१०,११) इत्यनेन शक्तिरूपेण सूत्रितं च। एभिर्वचनै रक्षात्मकं शत्रुविनाशकं च स्तम्भनमाहात्म्यं व्याख्यातं भवति।

गीतायां च—

"एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदम्॥"
विष्टभ्याहमिदं कृत्स्नमेकान्तेन स्थितो जगत्।

(गी० अ० ३।४३।१०,४२) इत्यादि रहस्यम्।

अन्यच्च

"रक्षसां ग्रीवा अपि कृन्तामि वृहन्नसि वृहद्रवा वृहतीमिन्द्राय वाचं वद
(य० वे० ५।२२)

अस्मिन् मन्त्रे रक्षसां विनाशने वृहतीछन्दो विशिष्टां वृहत्वगुणयुक्तां वाचं प्रयुंक्ते। श्रीभगवत्या मन्त्रो वृहतीछन्दोविशिष्टो निर्दिष्टः।

उक्तं च दैवतब्राह्मणे वृहस्पतेर्भवति वाचमभवद् (ख० २–७)
सायणेनेत्थं व्याख्यातम् "वृहस्पतेर्वाचं वाक्यं वृहती छन्दः अभवत् अक्षरत् अगच्छद् वा वृहत्या सार्धं वृहस्पतिरपि। तस्मात् प्रजापतेर्यज्ञेऽजायत इत्यर्थः।

पुनश्च तत्रैवोक्तं वृहती वृहतेर्वृद्धिकर्मणः (ख० ३।११)
छान्दोग्ये च—वाग् हि वृहती तस्या एष पतिः (१।३।२।११)
रहस्यरूपेण उभयं चैतद् बगलामन्त्रे संगच्छते।

## २—बगलासूक्तम्—

यां ते चक्रुरामे पात्रे यां चक्रुर्मिश्रधान्ये।
आमे मांसे कृत्यां यां चक्रुः पुनः प्रतिहरामि ताम् ॥१॥
यां ते चक्रुः कृकवाका वजे वा यां कुरीरिणि।
अव्यां ते कृत्यां यां चक्रुः पुनः प्रतिहरामि ताम् ॥२॥
यां ते चक्रुरेकशफे पशूनामुभयादति।
गर्दभे कृत्यां यां चक्रुः पुनः प्रतिहरामि ताम् ॥३॥
यां ते चक्रुरमूलायां वलगं वा नराच्याम्।
क्षेत्रे ते कृत्यां यां चक्रुः पुनः प्रतिहरामि ताम् ॥४॥
यां ते चक्रुर्गार्हपत्ये पूर्वाग्नावुत दुश्चितः।
शालायां कृत्यां यां चक्रुः पुनः प्रतिहरामि ताम् ॥५॥
यां ते चक्रुः सभायां यां चक्रुरधिदेवने।
अक्षेषु कृत्यां यां चक्रुः पुनः प्रतिहरामि ताम् ॥६॥
यां ते चक्रुः सेनायां यां चक्रुरिष्वायुधे।
दुन्दुभौ कृत्यां यां चक्रुः पुनः प्रतिहरामि ताम् ॥७॥
यां ते कृत्यां कूपे वदधुः श्मशाने वा निचख्नुः।
सद्मनि कृत्यां यां चक्रुः पुनः प्रतिहरामि ताम् ॥८॥
यां ते चक्रुः पुरुषस्यास्थे अग्नौ संकसुके च याम्।
म्रोकं निर्दाहं क्रव्यादं पुनः प्रतिहरामि ताम् ॥९॥
अपथेनाजभारैणां तां पथेतः प्रहिण्मसि।
अधीरो मर्या धीरेभ्यः संजभाराचित्या ॥१०॥
यश्चकार न शशाक कर्तुं शश्रे पादमङ्गुरिम्।
चकार भद्रमस्मभ्यमभगो भगवद्भ्यः ॥११॥
कृत्याकृतं बलगिनं मूलिनं शपथेऽप्यम्।
इन्द्रस्तं हन्तुमहता बधेनाग्निर्विध्यत्वस्तया ॥१२॥

इति अथर्ववेदे पञ्चमकाण्डे षष्ठोऽनुवाकः।

अस्य सूक्तस्य नियमपूर्वकपारायणेन सर्वकृत्याजन्यं व्याध्यादि निवर्तते। रक्षोहणं वलगहनं वैष्णवीमित्यादि कण्डिकायां कृत्यानिवारणार्थं प्रयोगविशेषं भाष्यकृन्महीधरः प्रादर्शयत। विस्तरभिया अत्र नोक्तम्।

३—श्रीबगलामुखीति संज्ञार्थनिर्णयः—

ननु बगलामुखीति संज्ञा कथं संगच्छते, बगलेति नाम्ना प्रसिद्धं कोशादौ व्याकरणव्युत्पत्त्याऽपि साधयितुं दुर्घटमेवेति चेत् न यास्केन वृणोते रूपस्याङ्गीकारात् "बलगो वृणोतेः" (नि० ६।२) वलगहनमित्यादिव्याख्यानावसरे उव्वटमहीधराभ्यां तथैवाङ्गीकारात् सुसाधुत्वं चावगम्यते। बगल शब्दार्थ उक्त एव; वलगा इति लुप्तनकारद्वितीयाबहुवचनस्यानुकरणम्। तान् खनति विदारयति इति 'बलगामुखी' सिध्यति। "खनु अवदारणे" इत्यस्मात् 'डित् खनेर्मुट् स चोदात्तः' इत्युणादिसूत्रेण मुखशब्दनिष्पादनं भवति।

"मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि।
सन्ध्यन्तरे नाटकादेः द्यौशब्देऽपि नपुंसकम्॥"

इति मेदिनीकोशाद् अनेकेऽर्थाः मुखशब्दस्याऽवगता भवन्ति। अत्र वेदार्थानुगतत्वात् तन्त्रार्थसम्मतत्वाच्च निःसारणमेवाभिप्रेतं भवति। वलगानां तथात्वात्। न च 'नखमुखात् संज्ञायाम्' इति ङीषो निवृत्तिरिति वाच्यम् स्वाङ्गवाचके तत्प्रवृत्तत्वात्। नह्यत्र स्वाङ्गवाचकत्वं, तस्माद् गौरादित्वात् ङीष् भवत्येव। एवं कृते ज्वालामुखी, गोमुखीत्यादयः संज्ञाशब्दा अपि सिध्यन्ति। क्वचिद् बगलानना बगला, बगलावक्त्राऽपि संज्ञा दृश्यते मुखशब्दस्य स्थाने, तथापि मुखशब्दस्य सादृश्ये एव मन्तुं योग्यम् पर्यायमात्रविवक्षितत्वात् नतु स्वाङ्गत्वम्। ननु बगलामुखीति संज्ञा कथम्, वैदिकग्रन्थेषु सर्वत्र बलगेति दर्शनात् इति चेन्न "परोक्षप्रिया इव हि देवाः" इति श्रुतिमनुसृत्य बलगामुखीति स्थाने बगलामुखीति प्रयुज्यते। 'पृषोदरादीनि यथोपदिष्टम्' इति 'सिंहो वर्णविपर्ययाद्' इतिवद् विपर्ययः। केचिद् बगं वाचं लातीति निरुक्त्या बगलाशब्दं साधयन्ति,

केचिद् वाचा अलति भूषयतीति बगला अत एव वगला वाक्प्रदायिनी, इति संगच्छते । सत्या, भामा, भीम इतिवत् वगला इत्यपि व्यवह्रियते "बगलेति नाम ललितमिति स्तोत्रप्रमाणाच्च । वगलापक्षिविशेषस्य मुखमिव मुखं यस्या इत्यपि केचित् साहसिका ऊचुः इति ।

इति बगुलामुखी संज्ञार्थनिर्णयः ।

## ४-अथ पीताम्बरोपनिषत् ।

ॐ अथ हैनां ब्रह्मरन्ध्रे सुभगां ब्रह्मास्त्रस्वरूपिणीमाप्नोति ब्रह्मास्त्रां महाविद्यां शाम्भवीं सर्वस्तम्भकरीं, सिद्धां चतुर्भुजां, दक्षाभ्यां कराभ्यां मुद्गरपाशौ वामाभ्यां जिह्वावज्रे दधानां, पीतवाससं, पीतालङ्कारसम्पन्नां, दृढपीनोन्नतपयोधरयुग्माढ्यां, तप्तकार्तस्वरकुण्डलद्वयविराजितमुखाम्भोजां, ललाटपट्टोल्लसत्पीतचन्द्रार्धमनुबिभ्रतीम्, उद्यद्दिवाकरोद्योतां, स्वर्ण-सिंहासनमध्यकमलसंस्थां धिया संचिन्त्य, तदुपरि त्रिकोणषट्कोणवसुपत्र-वृत्तान्तःषोडशदलकमलोपरि भूबिम्बत्रयम् अनुसन्धाय, तत्राद्ययोन्यन्तरे देवीमाहूय ध्यायेत् । योनिं जगद्योनिं समायमुच्चार्य; शिवान्ते भूमाग्रविन्दु-मिन्दुखण्डमग्निबीजं ततो वरुणाङ्कगुणार्णमत्रियुतं स्थिरामुखि इति सम्बोध्य, सर्वदुष्टानामिदं चाभाष्य, वाचमिति; मुखमिति, पदमिति; स्तम्भयेति चोच्चार्य, जिह्वां वैशारदीं कीलयेति, बुद्धिं विनाशयेति प्रोच्चार्य, भूमायां वेदाद्यं, ततो यज्ञभूगुहायां योजयेत् । स महास्तम्भेश्वरः, सर्वेश्वरः, स सेनास्तम्भं करोति । किं बहुना विवस्वद्धृतिस्तभ्भकर्ता, सर्ववात-स्तम्भकर्तेति किं दिवा कर्षयति स सर्वविद्येश्वरः सर्वमन्त्रेश्वरो भूत्वा पूजाया आवर्तनं त्रैलोक्यस्तम्भिन्याः कुर्यात् । अङ्गमाद्यं द्वारतो गणेशं, वटुकं, योगिनीं, क्षेत्राधीशं च पूर्वादिकमभ्यर्च्य, गुरुपङ्क्तिमीशासुरान्तमन्तः प्राच्यादौ क्रमानुगता बगला, स्तम्भिनी, जृम्भिणी, मोहनी, वश्या, अचला, चला, दुर्धरा, अकल्मषा, आधारा, कल्पना, कालकर्षिणी, भ्रमरिका, मन्दगमना, भोगिका (भोगा), योगिका । ह्यष्टदलानुगाः पूज्याः—ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, नारसिंही, चामुण्डा, महालक्ष्मीश्च

षड्योनिगर्भान्ता डाकिनी, राकिनी, लाकिनी, काकिनी, शाकिनी, हाकिनी वेदाद्यस्थिरमायायाः समभ्यर्च्य शक्राग्नियमनिर्ऋतिवरुणवायुघनदेशान-प्रजापतिनागेशाः, परिवाराभिमताः स्थिरादिवेदाद्याः सवाहनाः सदस्त्रका वाह्यतोऽभ्यर्च्य, तां योनिं रतिं प्रीतिमनोभुवा एताः सर्वाः समा पीतांशुका ध्येयाः । तदन्तमूलायां दलादिषोडशानुगताः पूज्याः नीराजनैः सहैश्वर्ययुक्तो भवति, य एनां ध्यायति स वाग्मी भवति, सोऽमृतमश्नुते सर्वसिद्धिकर्ता भवति, सृष्टिस्थितिसंहारकर्ता भवति, स सर्वेश्वरो भवति स तु ऋद्धीश्वरो भवति, स शाक्तः, स वैष्णवः, स गणपः, स शैवः स जीवन्मुक्तो भवति, स संन्यासी भवति न तु मुण्डितमुण्डः। षट्त्रिंशदस्त्रेश्वरो भवेत् सौभाग्यार्चनेनेति प्रोतं वेद ॐ शिवम् 'सहनाववतु' इति मन्त्रेण शान्तिः ।

इति पीताम्बरोपनिषद् ।

## ५—कलशपूजनमन्त्राः—

इदानीमभिषेककलशस्थापने मन्त्राणां यथोपयोगस्तं सप्रयोगं कथयामि ।

### १—दिक्पालमन्त्रप्रयोगः (प्रथमकलशः)

इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ।
कुवेर ईशो ब्रह्मा च ह्यनन्तो दश दिक्पतिः ॥

#### १—इन्द्रः—

इन्द्रं सुरपतिश्रेष्ठं वज्रहस्तं महावलम् ।
आवाहये यज्ञसिद्ध्यै शतयज्ञाधिपं प्रभुम् ॥

ॐ त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहव शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरूहूतमिन्द्रं स्वस्ति नो मधवा धात्विन्द्र ।
ॐ भूः इन्द्रेहागच्छ । इन्द्राय नमः । इन्द्रं स्थापयामि पूजयामि ।

२- अग्निः—

त्रिपादं सप्तहस्तं च द्विमूर्धानं द्विनासिकम् ।
षण्नेत्रं च चतुःश्रोत्रमग्निमावाहयाम्यहम् ॥
ॐ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च बन्ध ।
त्राता तोकस्य तनये गवामस्य निमेष ँ रक्षमाणस्तव व्रते ॥
ॐ भूः अग्ने इहागच्छ । अग्नये नमः । अग्निं स्थापयामि पूजयामि ।

३—यमः—

महामहिषमारूढं दण्डहस्तं महाबलम् ।
यज्ञसंरक्षणार्थाय यममावाहयाम्यहम् ॥
ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ।
धर्माय स्वाहा धर्मः पित्रे ॥
ॐ भूः यमेहागच्छ । यमाय नमः । यमं स्थापयामि पूजयामि ।

४—निर्ऋतिः—

सर्वप्रेताधिपं देवं निर्ऋतिं नीलविग्रहम् ।
आवाहये यज्ञसिद्ध्यै नरारूढं वरप्रदम् ॥
ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥
ॐ भूः निर्ऋते इहागच्छ । निर्ऋतये नमः । निर्ऋतिं स्थापयामि पूजयामि ।

५—वरुणः—

शुद्धस्फटिकसंकाशं जलेशं यादसां पतिम् ।
आवाहये प्रतीचीशं वरुणं सर्वकामदम् ॥
ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुश ँ स मा न आयुः प्रमोषीः ।
ॐ भूः वरुण इहागच्छ वरुणाय नमः वरुणं स्थापयामि पूजयामि ।

६—वायुः—

मनोजवं महातेजं सर्वतश्चारिणं शुभम् ।
यज्ञसंरक्षणार्थाय वायुमावाहयाम्यहम् ॥

ॐ आनो नियुद्भिः शतिनीभिरध्वर ॐ सहस्रिणीभिरुपयाहि यज्ञम् ।
वायो अस्मिन् सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ।
ॐ भूः वायो इहागच्छ । वायवे नमः । वायुं स्थापयामि पूजयामि ।

७—कुबेरः—

आवाहयामि देवेशं धनदं यक्षपूजितम् ।
महाबलं दिव्यदेहं नरयानगतिं विभुम् ॥

ॐ वय ॐ सोम व्रते तव मनस्तनूषु बिभ्रतः ।
प्रजावन्तः सचेमहि ।
ॐ भूः सोमेहागच्छ । सोमाय नमः । सोमं स्थापयामि पूजयामि ।

८—ईशानः—

सर्वाधिपं महादेवं भूतानां पतिमव्ययम् ।
आवाहये तमीशानं लोकानामभयप्रदम् ॥

ॐ तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ।
ॐ भूः ईशानेहागच्छ । ईशानाय नमः । ईशानं स्थापयामि पूजयामि ।

९—ब्रह्मा—

पद्मयोनिं चतुर्मूर्तिं वेदगर्भं पितामहम् ।
आवाहयामि ब्रह्माणं यज्ञसंसिद्धिहेतवे ॥

ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ २ अवन्तु देवाः ।

पूर्वेशानयोर्मध्ये ॐ भूः ब्रह्मन्निहागच्छ । ब्रह्मणे नमः । ब्रह्माणं स्थापयामि पूजयामि ।

१०—अनन्तः—

अनन्तं सर्वनागानामधिपं विश्वरूपिणम् ।
जगतां शान्तिकर्तारं मण्डले स्थापयाम्यहम् ॥
ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सुप्रथाः ।

निर्ऋतिपश्चिमयोर्मध्ये ॐ भूः अनन्तेहागच्छ । अनन्ताय नमः । अनन्तं स्थापयामि पूजयामि ॥

इति दिग्पालमन्त्रप्रयोगः ।

## २–श्रीसूक्तम् (द्वितीयः)

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥
अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥३॥
काँसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वा वृणोमि ॥५॥
आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥६॥
उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतः सुराष्ट्रेऽस्मिन् कीर्तिं वृद्धिं ददातु मे ॥७॥
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥८॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥
मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥
कर्दमेन प्रजा भूता मयि सम्भ्रमकर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥
आपः स्रजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
निचदेवीं मातरं श्रियं वासय मे कुले ॥१२॥
आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥
आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥१५॥
यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६॥

इति श्रीसूक्तम् ।

## ३–लक्ष्मीसूक्तम्

ॐ सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥१॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पतिः वरुणं धनमश्विनौ ॥२॥
वैनतेय सोमं पिव सोमं पिवतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥३॥
न क्रोधो न च मात्सर्यं न लोभो नाऽशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥४॥

पद्मानने पद्म ऊरु पद्माक्षी पद्मसम्भवे ।
तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम् ॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।
विष्णुप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥६॥
महालक्ष्मीं च विद्महे, विष्णुपत्नीं च धीमहि ।
तन्नो लक्ष्मीः प्रचोदयात् ॥७॥
पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ।
विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥८॥
आनन्दः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः ।
ऋषयः श्रियपुत्राश्च मयि श्रीर्देवि देवता ॥९॥
ऋणरोगादिदारिद्र्यं पापं च अपमृत्यवः ।
भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥१०॥
श्रीर्वर्चस्वमायुष्यमारोग्यं मा विधाच्छोभमानं महीयते ।
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥११॥

इति लक्ष्मीसूक्तम् ।

## ४–पुरुषसूक्तम् (तृतीयः कलशः)

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सभूमिं विश्वतो वृत्त्वा अत्यतिष्ठद् दशाङ्गुलम् ॥
पुरुष एवेद ँ सर्वं यद् भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥
एतावानस्य महिमा अतो ज्यायांश्च पूरुषः ॥१॥
पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि ।
त्रिपादूर्ध्वं उदैत् पुरुषः पादोऽस्येहाभवत् पुनः ॥
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ।
तस्माद् विराडजायत विराजो अधिपूरुषः ॥
स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥२॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥
सप्तास्यासन् परिधयः त्रिः सप्त समिधः कृता ।
देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥
तं यज्ञं वर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ॥३॥

तेन देवा अयजन्त साध्या ऋषयश्च ये ।
तस्माद् यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम् ॥
पशूंस्तांश्चक्रे वायव्यान् आरण्यान् ग्राम्यांश्च ये ।
तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे ॥
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥४॥

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥
यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमासीत् कौ बाहू कावूरू पादावुच्येते ॥
ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ॥५॥

ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ।
चन्द्रमा मनसो जातः चक्षोः सूर्यो अजायत ॥
मुखादिन्द्रश्च अग्निश्च प्राणाद् वायुरजायत ।
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ॥
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकान् अकल्पयन् ॥६॥

वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि धीरः नामानि कृत्याभिवदन् यदास्ते ॥
धाता पुरस्ताद् यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।
तमेव विद्वानमृत इह भवति नान्यः पन्थाः अयनाय विद्यते ॥

यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ॥७॥

इति पुरुषसूक्तम् ।

## ५–अथ नारायणानुवाकः (चतुर्थः कलशः)

ॐ सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम् ॥
विश्वतः परमान्नित्यं विश्वं नारायणं हरिम् ।
विश्वमेवेदं पुरुषस्तद् विश्वमुपजीवति ॥
पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् ।
नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥
नारायणपरो ज्योतिरात्मा नारायणः परः ।
नारायणपरं ब्रह्म तत्त्वं नारायणः परः ॥
नारायणपरो ध्याता ध्यानं नारायणः परः ।
यच्च किञ्चिज् जगत् सर्वं दृश्यते श्रूयतेऽपि वा ॥१॥
अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ।
अनन्तमव्ययं कविं समुद्रेऽन्तविश्वशंभुवम् ॥
पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् ।
अधोनिष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति ॥
ज्वालामालाकुलं भाति विश्वस्यायतनं महत् ।
सन्ततं शिराभिस्तु लम्बत्याकोशसन्निभम् ॥
तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् ।
तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः ॥
सोऽग्रभुक् विभजन् तिष्ठन्नाहारमजरः कविः ।
तिर्यगूर्ध्वमधः शायी रश्मयस्तस्य सन्तताः ॥
सन्तापयति स्वं देहमापादतलमस्तकम् ।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः ॥

नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा।
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा॥
तस्याः शिखाया मध्ये तु परमात्मा व्यवस्थितः।
स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्॥२॥

इति नारायणानुवाकः।

## ६–पञ्चब्रह्ममन्त्राः (पञ्चमः कलशः)

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः।
भवे भवे नातिभवस्य माम्भवोद्भवाय नमः॥१॥
ॐ वामदेवाय नमो ज्येष्ठाय नमः, श्रेष्ठाय नमो,
रुद्राय नमः, कालाय नमः, कलविकरणाय नमो
बलप्रमथनाय नमः, सर्वभूतदमनाय नमो, मनोन्मनाय नमः॥२॥
ॐ अघोरेभ्यो ऽथ घोरेभ्यो घोरघोरतरेभ्यः।
सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥३॥
तत्पुरुषाय विद्महे महादेवाय धीमहि।
तन्नो रुद्रः प्रचोदयात्॥४॥
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्,
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम्॥५॥

इति पञ्चब्रह्ममन्त्राः।

## ७–अम्भस्यपारेणानुवाकः (षष्ठः कलशः)

ॐ हरिः। अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्। शुक्रेण ज्योतींषि समनुप्रविष्टः। प्रजापतिश्चरति गर्भे अन्तः। यस्मिन्निदं संचविचैति सर्वं यस्मिन् देवा अधिविश्वे निषेदुः।

तदेव भूतं तदुभव्यमा इदं तदक्षरे परमे व्योमन्।
येनावृतं खं च महीं च येनादित्यस्तपति तेजसा भ्राजसा च।
यमन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः।

यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम् ।
यदोषधीभिः पुरुषान् पशूँश्च विवेश भूतानि चराचराणि ।
अतः परं नान्यदणीयसꣳ हि परात्परं यन्महतो महान्तम् ।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥१॥

तदेवर्तं तदु सत्यमाहुः तदेव ब्रह्म परमं कवीनाम् ।
इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ।

तदेवाग्निस्तद्वायुः तत्सूर्यस्तदु चन्द्रमाः ।
तदेव शुक्रममृतं तद् ब्रह्म तदापः स प्रजापतिः ।
सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ।
अर्धमासा मासा ऋतवः संवत्सरश्च कल्पताम् ।
स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः ।
नैनमूर्ध्वं न तिर्यंच न मध्ये परिजग्रभत् ।
न तस्येशे कश्चन तस्य नाम महद् यशः ॥२॥

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ।

अद्भ्यः सम्भूतो हिरण्यगर्भः इत्यष्टौ–एष हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखस्तिष्ठति विश्वतोमुखः । विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् संबाहुभ्यां धमति संपतत्रैर्द्यावाभू पृथिवी जनयन् देव एकः । वेनस्तत् पश्यन् विश्वाभुवनानि विद्वान् यत्र विश्वं भवत्येकनीडम् । यस्मिन्निदꣳ संचविचैकं स ओतः प्रोतश्च विभुः प्रजासु । प्रतद्वोचे अमृतं न विद्वान् गन्धर्वो नाम निहितं गुहासु ॥३॥

इति अम्भस्यपारेणानुवाकः ।

## ८—ब्रह्मानन्दवल्ली (सप्तमः कलशः)

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः।

हरिः ॐ ब्रह्मविदाप्नोति परम् तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम् परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति । तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात् पुरुषः, स वा एष पुरुषोऽन्नरसमयः। तस्येदमेव शिरः, अयं दक्षिणः पक्षः, अयमुत्तरः पक्षः, अयमात्मा, इदं पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति ।।१।।

अन्नाद् वै प्रजाः प्रजायन्ते याः काश्च पृथिवीं श्रिताः ।<br>
अथो अन्नेनैव जीवन्ति अथैनदपि यन्त्यन्ततः ।।<br>
अन्नं हि भूतानां ज्येष्ठम्, तस्मात् सर्वौषधमुच्यते ।<br>
सर्वं वै तेऽन्नमाप्नुवन्ति येऽन्नं ब्रह्मोपासते ।।<br>
अन्नं हि भूतानां ज्येष्ठम्, तस्मात् सर्वौषधमुच्यते ।<br>
अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्धन्ते ।।<br>
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते । इति

तस्माद्वा एतस्माद् अन्नरसमयात् अन्योऽन्तर आत्मा प्राणमयः तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् अन्वयं पुरुषविधः । तस्य प्राण एव शिरः, व्यानो दक्षिणः पक्षः, अपान उत्तरः पक्षः, आकाश आत्मा, पृथिवी पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति ।।२।।

प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये ।<br>
प्राणो हि भूतानामायुः तस्मात् सर्वायुषमुच्यते ।।<br>
सर्वमेव त आयुर्यन्ति ये प्राणं ब्रह्मोपासते ।<br>
प्राणो हि भूतानामायुः तस्मात् सर्वायुषमुच्यते ।। इति

तस्यैष एव शारीर आत्मा यः पूर्वस्य तस्माद्वा एतस्माद् अन्योऽन्यतर आत्मा मनोमयः । तेनैष पूर्णः स वा एष पुरुषविध एव । तस्य पुरुषविधताम् अन्वयं पुरुषविधः । तस्य यजुरेव शिरः, ऋग् दक्षिणः पक्षः, सामोत्तरः पक्षः, आदेश आत्मा, अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥३॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन ॥ इति

तस्यैष एव शारीर आत्मा यः पूर्वस्य तस्माद्वा एतस्मान्मनोमयात् अन्योऽन्यतर आत्मा विज्ञानमयः । तेनैष पूर्णः स वा एष पुरुषविध एव । तस्य पुरुषविधताम् अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः, ऋतं दक्षिणः पक्षः, सत्यमुत्तरं पक्षः, योग आत्मा, महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥४॥

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ।
विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते ॥
विज्ञानं ब्रह्म चेद् वेद तस्माच्चेन्न प्रमाद्यति ।
शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुते ॥ इति

तस्यैष एव शारीर आत्मा यः पूर्वस्य तस्माद्वा एतस्माद् विज्ञानमयाद् अन्योऽन्यतर आत्मानन्दमयः । तेनैष पूर्णः स वा एष पुरुषविध एव । तस्य पुरुषविधताम् अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥५॥

असन्नेव स भवति असद् ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः ॥ इति
तस्यैष एव शारीर आत्मा यः पूर्वस्य । अथातोऽनुप्रश्नाः ।
उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छति ३ ।
आहो विद्वानमुं लोकं प्रेत्य कश्चित् समश्नुता ३ उ ॥

सोऽकामयत बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च तत् सृष्ट्वा तदेवानुप्राविशत् । तदनु प्रविश्य सच्चासच्चाभवत् निरुक्तं चानिरुक्तं च, निलयनं चानिलयनं च, विज्ञानं चाविज्ञानं च, सत्यं चानृतं च, सत्यमभवत् यदिदं किञ्च तत्सत्यमित्याचक्षते । तदप्येष श्लोको भवति ।।६।।

असद्वा इदमग्र आसीत् ततो वै सदजायत ।
तदात्मानं स्वयमकुरुत तस्मात् तत्सुकृतमुच्यते ।। इति

यद्वै तत्सुकृतम् । रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दं याति यदा ह्येवैष एतस्मिन्नदृश्ये ऽनात्मे ऽनिरुक्ते ऽनिलयने ऽभयं प्रतिष्ठां विन्दते सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति तत्त्वेव भयं विदुषो मन्वानस्य । तदप्येष श्लोको भवति ।।७।।

भीषास्माद् वातः पवते भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ।। इति

सैषानन्दस्य मीमांसा भवति—युवा स्यात् साधुयुवाध्यापक आशिष्ठो द्रढिष्ठो बलिष्ठः; तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् स एको मानुष आनन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितॄणां चिरलोकलोकानामानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः स एक इन्द्रस्यानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः स एको बृहस्पतेरानन्दः श्रोत्रियस्य चाकामहतस्य । ते ये बृहस्पतेरानन्दाः स एकः प्रजापतेरानन्दः श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे यश्चासावादित्ये स एकः । स य एवंवित् अस्माल्लोकात्

प्रेत्य एतमन्नमयमात्मानमुपसंक्रामति, एतं प्राणमयमात्मानमुपसंक्रामति; एतं मनोमयमात्मानमुपसंक्रामति, एतं विज्ञानमयमात्मानमुपसंक्रामति, एतमानन्दमयमात्मानमुपसंक्रामति। तदप्येष श्लोको भवति ॥८॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ॥ इति

एतꣳ ह वा न तपति किमहं साधु नाकरवम् किमहं पापमकरवम् इति स एवं विद्वान् एते आत्मानꣳ स्पृणुते,उभे हि एव एष एते आत्मानꣳ स्पृणुते य एवं वेद। इत्युपनिषद् ॥९॥

सहनाववतु० ॐ शान्तिः शान्तिः शान्तिः।

इति ब्रह्मानन्दवल्ली।

## ९–अथ भृगुवल्ली ( अष्टमः कलशः )

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः।

हरिः ॐ भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। तस्मा एतत् प्रोवाच अन्नं प्राणः चक्षुः श्रोत्रं मनो वाचमिति तꣳ होवाच। यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्ति अभिसंविशन्ति तद् विजिज्ञासस्व तद् ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा ॥१॥

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते, अन्नेन जातानि जीवन्ति, अन्नं प्रयन्ति अभिसंविशन्ति इति। तद् विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। तꣳ होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा ॥२॥

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते, प्राणेन जातानि जीवन्ति, प्राणं प्रयन्ति अभिसंविशन्ति इति। तद् विज्ञाय

पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति । तꣳ होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥३॥

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि, जायन्ते मनसा जातानि जीवन्ति, मनः प्रयन्ति अभिसंविशन्ति इति । तद् विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति । तꣳ होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥४॥

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते, विज्ञानेन जातानि जीवन्ति, विज्ञानं प्रयन्ति अभिसंविशन्ति इति तद् विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति । तꣳ होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति । स तपस्तप्त्वा ॥५॥

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्ति अभिसंविशन्ति इति । सैषा भार्गवी वारुणी विद्या परमे व्योम्नि प्रतिष्ठिता, य एवं वेद प्रतितिष्ठति, अन्नवान् अन्नादो भवति, महान् भवति, प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या ॥६॥

अन्नं न निन्द्यात् तद् व्रतम्, प्राणो वा अन्नं शरीरमन्नादम्, प्राणे शरीरं प्रतिष्ठितम्, शरीरे प्राणः प्रतिष्ठितः, तदेतदन्नमन्ने प्रतिष्ठितम् स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवान् अन्नादो भवति महान् भवति, प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या ॥७॥

अन्नं न परिचक्षीत तद् व्रतम्, आपो वा अन्नम् ज्योतिरन्नादम् अप्सु ज्योतिः प्रतिष्ठितं, ज्योतिष्यापः प्रतिष्ठिताः, तदेतदन्नमन्ने प्रतिष्ठितं स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवान् अन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या ॥८॥

अन्नं बहु कुर्वीत तद् व्रतम्, पृथिवी वा अन्नम् आकाशो अन्नादः पृथिव्यामाकाशः प्रतिष्ठितः, आकाशे पृथिवी प्रतिष्ठिता, तदेतदन्नम

प्रतिष्ठितं, स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति, अन्नवान् अन्नादो भवति, महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या ॥९॥

न कञ्चन वसतौ प्रत्याचक्षीत तद् व्रतम्, तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात्, आराध्यस्मा अन्नमित्याचक्षते। एतद्वै मुखतोऽन्नं राद्धम्, मुखतोऽस्मा अन्नं राध्यते, एतद्वै मध्यतोऽन्नं राध्यम्, मध्यतोऽस्मा अन्नं राध्यते, एतद्वा अन्ततोऽन्नं राद्धम्, अन्ततोऽस्मा अन्नं राध्यते य एवं वेद। क्षेम इति वाचि, योगक्षेम इति प्राणापानयोः, कर्मेति हस्तयोः, गतिरिति पादयोः, विमुक्तिरिति पायौ, इति मानुषी समज्ञा। अथ दैवी तृप्तिरिति वृष्टौ बलमिति विद्युति, यश इति पशुषु ज्योतिरिति नक्षत्रेषु प्रजातिरमृतानन्द इत्युपस्थे, सर्वमित्याकाशे, तत् प्रतिष्ठेति उपासीत, प्रतिष्ठावान् भवति। तन्मह इत्युपासीत, महान् भवति, तन्मन इत्युपासीत, मानवान् भवति। तन्नम इत्युपासीत, नम्यन्तेऽस्मै कामाः, तद् ब्रह्मेत्युपासीत, ब्रह्मवान् भवति। तद् ब्रह्मणः परिमर इत्युपासीत, पर्येणं म्रियन्ते द्विषन्तः सपत्नाः परि ये ऽप्रियाः भ्रातृव्याः स यश्चायं पुरुषे यश्चासावादित्ये स एकः। स य एवं वेद अस्माल्लोकात् प्रेत्य एत-मन्नमयमात्मानमुपसंक्रम्य, एतं प्राणमयमात्मानमुपसंक्रम्य, एतं मनोमय-मात्मानमुपसंक्रम्य, एतं विज्ञानमयमात्मानमुपसंक्रम्य, एतमानन्दमय-मात्मानमुपसंक्रम्य इमान् लोकान् कामान्नी कामरूपी अनुसंचरन् एतत् साम गायन्नास्ते।

हा ३ वु हा ३ वु हा ३ वु अहमन्नमहमन्नमहमन्नम्। अहमन्नादो ३ हमन्नादो ३ हमन्नादः। अहं श्लोककृदहं श्लोककृदहं श्लोककृत्। अहमस्मि प्रथमजा ऋताऽस्य। पूर्वं देवेभ्यो अमृतस्य ना ३ भा ३ यि। यो मा ददाति स इदेवमा ३ वा ३। अहमन्नमन्नमदन्तमा ३ द्मि। अहं विश्वं भुवनमभ्यभवाम् सुवर्णज्योतिः य एवं वेद। इत्युपनिषद् ॥१०॥

सहनाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्विनावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः।

इति भृगुवल्ली समाप्ता।

१०–अथ नवमकलशपूजनमन्त्रः (नवमः कलशः)

मूलमन्त्रेण कर्तव्यम् ।

इति कलशपूजनमन्त्राः ।

६–अथ बगलामुखी–स्तवराजः (अर्चाक्रमीयः)

वन्दे सकलसन्देहदावपावकमीश्वरम् ।
करुणावरुणावासं भक्तकल्पतरुं गुरुम् ॥१॥
उल्लसत्पीतविद्योति विद्योतिततनुत्रयम् ।
निगमागमसर्वस्वमीडेऽहं तन्महन्महः ॥२॥
ॐ पूर्वं स्थिरमायां च बगलामुखि सर्वतः ।
दुष्टानां वाचमुच्चार्य मुखं पदं तथोद्धरेत् ॥३॥
स्तम्भयेति ततो जिह्वां कीलयेति समुद्धरेत् ।
बुद्धिं विनाशयेति पदं स्थिरमायामनुस्मरेत् ॥४॥
प्रणवं वह्निजायां चेत्येष पैताम्बरो मनुः ।
पातु मां सर्वदा सर्वनिग्रहानुग्रहक्षमः ॥५॥
कं नारद ऋषिः पातु पङ्क्तिश्छन्दोऽवतान्मुखम् ।
पीताम्बरा देवता तु हृन्मध्यमवतान्मम ॥६॥
ह्लीं बीजं स्तनयोर्मेऽव्यात् स्वाहा शक्तिश्च दन्तयोः ।
सं कीलकं तथा गुह्ये विनियोगोऽवताद् वपुः ॥७॥
षड्दीर्घभाजा वीजेन न्यासोऽव्यान्मे करादिकम् ।
द्विपञ्चपञ्चनन्देषुदशभिर्मन्त्रवर्णकैः ॥८॥
षडङ्गकल्पना पातु षडङ्गानि ह्यनुक्रमात् ।
ऐं विद्यातत्त्वं क्लीं मायातत्त्वं सौश्च शिवात्मकम् ॥९॥
तत्त्वत्रयं सं वीजं च मूलं हृत्कण्ठमध्यगः ।
सुधाब्धौ हेमभूरुढचम्पकोद्यानमध्यतः ॥१०॥
गारुडोत्पलनिर्व्यूढस्वर्णसिंहासनोपरि ।
स्वर्णपङ्कजसंविष्टां त्रिनेत्रां शशिशेखराम् ॥११॥

पीतालङ्कारवसनां मल्लीचन्दनशोभिताम् ।
सव्याभ्यां पञ्चशाखाभ्यां वज्रं जिह्वां च बिभ्रतीम् ॥१२॥
मुद्गरं नागपाशं च दक्षिणाभ्यां मदालसाम् ।
भक्तारिविग्रहोद्योगप्रगल्भां बगलामुखीम् ॥१३॥
ध्यायमानस्य मे पातु शात्रवोद्द्वेषणे भृशम् ।
भूकलादलदिक्पत्रषट्कोणं त्र्यस्रबैन्दुकम् ॥१४॥
यन्त्रं पैताम्बरं पायाद् पायात् सा माम् अविग्रहा ।
आधारशक्तिमारभ्य ज्ञानात्मान्तास्तु शक्तयः ॥१५॥
पीठाद्याः पान्तु पीठेऽत्र प्रथमं मां च रक्षतु ।
शान्तिशङ्खविशेषात्मशक्तिभूतानि पान्तु माम् ॥१६॥
आवाहनाद्याः पञ्चापि मुद्राश्च सुमनोजलैः ।
त्रिकोणमध्यमारभ्य पूजिता बगलामुखी ॥१७॥
क्रोधिनी स्तम्भिनी चापि धारिण्यश्चापि मध्यगाः ।
ओजःपूषादिपीठानि कोणाग्रेषु स्थितानि वै ॥१८॥
त्रिकोणबाह्यतः सिद्धनाथाद्या गुरवस्तथा ।
सिद्धनाथः सिद्धानन्दनाथः सिद्धपरेष्ठि–हि ॥१९॥
नाथः सिद्धः श्रीकण्ठश्च नाथः सिद्धचतुष्टयम् ।
पातु मामथ षट्कोणे सुभगा भगरूपिणी ॥२०॥
भगोदया च भगनिपातिनी भगमालिनी ।
भगावहा च मां पातु षट्कोणाग्रेषु च क्रमात् ॥२१॥
त्वगात्मा शोणितात्मा च मांसात्मा मेदसात्मकः ।
रूपात्मा परमात्मा च पातु मां स्थिरविग्रहा ॥२२॥
अष्टपत्रेषु मूलेषु ब्राह्मी माहेश्वरी तथा ।
कौमारी वैष्णवी वाराहीन्द्राणी च तथा पुनः ॥२३॥
चामुण्डा च महालक्ष्मीस्तत्र मध्ये पुनर्जया ।
विजया च जयाम्बा च राजिता जृम्भिणी तथा ॥२४॥
स्तम्भिनी मोहिनी वश्या कर्षिणी, अथ तदग्रके ।

असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तकपालिनः।
भीषणश्चापि संहार एते रक्षन्तु मां सदा ॥२५॥
ततः षोडशपत्रेषु मङ्गला स्तम्भिनी तथा।
जृम्भिणी मोहिनी वश्या ज्वालासिंही वलाहका ॥२६॥
भूधरा कल्मषा धात्री कन्यका कालकर्षिणी।
भ्रान्तिका मन्दगमना भोगस्था भाविकेति च ॥२७॥
पातु मामथ भूसद्म दशदिक्षु दिगीश्वराः।
इन्द्रोऽनलो यमो रक्षो वरुणो मारुतः शशी।
ईशोऽनन्तः स्वयम्भूश्च दशैते पान्तु मे वपुः ॥२८॥
वज्रः शक्तिर्दण्डखड्गौ पाशाङ्कुशगदाः क्रमात्।
शूलं चक्रं सरोजं च तत्तच्छस्त्राणि पान्तु माम् ॥२९॥
अथ च पूर्वादिचतुर्द्वारेषु परतः क्रमात्।
पातु विघ्नेशवटुकौ योगिनी क्षेत्रपालकः ॥३०॥
गुरुत्रयं त्रिरेखासु पातु मे वपुरञ्जसा।
पुनः पीताम्बरा पातु उपचारैः प्रपूजिता ॥३१॥
साङ्गावरणशक्तिश्च जयश्रीः पातु सर्वदा।
वलयं, वटुकादिभ्यो रक्षां कुर्वन्तु मे सदा ॥३२॥
शक्तयः साधका वीराः, पान्तु मे देवता इमाः।
इत्यर्चाक्रमतः प्रोक्तं स्तोत्रं पैताम्बरं परम् ॥३३॥
यः पठेत् सकृदप्येतत् सोऽर्चाफलमवाप्नुयात्।
सर्वथा कारयेत् क्षिप्रं प्रपद्यन्ते गदातुरान् ॥३४॥
राजानो राजपत्न्यश्च पौरा जानपदास्तथा।
वशगास्तस्य जायन्ते सततं सेवका इव ॥३५॥
गुरुकल्पाश्च विबुधा मूकतां यान्ति तेऽग्रतः।
स्थिरीभवति तद्गेहे चपलापि हरिप्रिया ॥३६॥

पीताम्बराङ्गवसनो यदि लक्षसंख्यं
पैताम्बरं मनुममुं प्रजपेत् नरो यः ॥

हैमीं सकृन्नियमवान् विधिना हरिद्रा—
मालां दधत् भवति तद्वशगा त्रिलोकी ॥३७॥

भवानि बगलामुखि त्रिदशकल्पवल्लि प्रभो
कृपाजलनिधे तव चरणधूतबाधाखिलः ॥
सुरासुरनरादिक—सकलभक्तभाग्यप्रदे
त्वदङ्घ्रिसरसीरुहद्वयमहं तुध्याये सदा ॥३८॥

त्वमम्ब जगतां जनिस्थितिविनाशबीजं निज—
प्रकाशबहुलद्युतिर्भवति भक्तहृन्मध्यगा ।
त्रयीमनुसुपूजिता हरिहरादिवृन्दारकै—
रनुक्षणमनुक्षणं मयि शिवे क्षणं वीक्ष्यताम् ॥३९॥

शिवे तव तनूमहं हरिहराद्यगम्यां पराम्
निखिलतापप्रत्यूहहृद्दयाभावयुक्तां स्मरे ॥
विदारय विचूर्णय ग्लपय शोषय स्तम्भय
प्रणोदय विरोधय प्रविलय प्रबद्धारीणाम् ॥४०॥

क्व पार्वति कृपालसन् मयि कटाक्षपातं मनाग्
अनाकुलतया क्षणं क्षिप विपक्षसंक्षोभिणि ।
यदीक्षणपथं गतः सकृदपि प्रभुः कश्चन
स्फुटं मम वशंवदो भवतु तेन पीताम्बरे ॥४१॥

ॐ नमो भगवते महारुद्राय हुं फट् स्वाहा । इति भैरवमन्त्रः ।

इति अथर्वणरहस्ये बगलामुख्या अर्चाक्रमस्तोत्रम् ॥

इति श्रीदेवानन्दनाथशिष्यरामचन्द्रनाथविरचितायां मन्त्रसंग्रहदीपिकायां
श्रीबगलास्तवराजः समाप्तः ।

ह्लीं स्त. मा. ३ श्री ल० ऐं वा ३ क्लीं ४ ह्लीं माया ५ आं पाशः ६ ।
क्रौं अंकुशः हुं वाराहं ग्लौं शक्तिः ।

इति वैदिकं प्रकरणम् ।

७—अथ पूर्णाभिषेकप्रयोगः—

निर्वाणतन्त्रे—

अभिषेकपूर्वाहे सर्वविघ्नोपशान्त्यर्थं यथाशक्त्युपचारेण गुर्वविघ्नेश पूजयेत् । गुरुस्तत्र चेन्नाधिकारी, तदाभिषिक्तं कौलं गुरुत्वेन स्वीकृत्य तेन सर्वं कारयेत् । गमिति गणेशस्य बीजम् । कृतनित्यक्रिय आसने उपविश्याचान्तोऽर्घ्यस्थापनादिभूतशुद्ध्यन्तं कर्म कृत्वा ऋष्यादिन्यास कुर्यात् । यथा—गणक ऋषिः नीवृच्छन्दो विघ्नराजो देवता स्वकर्तव्यपूर्णाभिषेककर्मणः सर्वविघ्नशान्त्यर्थं जपे विनियोगः । शिरसि ॐ गणक ऋषये नमः, मुखे नीवृच्छन्दसे नमः, हृदि विघ्नराजाय देवतायै नमः । गं हृदयाय नमः । इत्यादिनाऽङ्गन्यासकरन्यासौ विधाय, मूलेन प्राणायामत्रयं कृत्वा ध्यायेद् । यथा—

सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं
खङ्गं पाशाङ्कुशेष्टान्यरुणकरलसद्वारुणीपूर्णकुम्भम् ॥
बालेन्दूद्दीप्तमौलिं करिपतिवदनं बीजपूरार्द्रगण्डं
भोगीन्द्राविद्धभूषं भजत गणपतिं रक्तवस्त्राङ्गरागम् ॥

एवं ध्यात्वा मानसोपचारेण सम्पूज्य, यन्त्रे घटे वा पीठशक्तीः पूजयेद् । यथा—एते गन्धपुष्पे ॐ तीव्रायै नमः, एवं सर्वत्र प्रणवादि नमोऽन्तेन । ॐ ज्वालिन्यै नमः, ॐ नन्दायै नमः, ॐ कामरूपिण्यै नमः, ॐ उग्रायै नमः, ॐ तेजस्वत्यै नमः, ॐ सत्यायै नमः, मध्ये ॐ विघ्न नाशिन्यै नमः । पूर्वादिक्रमेण पूजयेत् । तत एते गन्धपुष्पे ॐ कमलासनाय नमः । पुनर्ध्यात्वा घटादौ गन्धपुष्पे दत्त्वा, गणेश इहागच्छेत्यावाह्य पाद्यादिभिः पञ्चतत्त्वोपचारैश्च सम्पूज्य, चतुर्दिक्षु एते गन्धपुष्पे गणेशाय नमः । एवं गणनायकाय, गणनाथाय, गणक्रीडाय, एकदन्ताय, वक्रतुण्डाय, लम्बोदराय, गजाननाय, महादेवाय, विकटाय, धूमाभाय, विघ्ननाशाय, सर्वत्र प्रणवादिनमोऽन्तेन गन्धपुष्पाभ्यां पूजयेत् । ब्राह्म्यै, माहेश्वर्यै, कौमार्यै, वैष्णव्यै, वाराह्यै, इन्द्राण्यै, नारसिंह्यै, महालक्ष्म्यै

इन्द्रादिदिग्पालेभ्यो, वज्राद्यस्त्रेभ्यो,नमः इत्यनेन पूजयित्वा, ततो यथाशक्ति मूलमन्त्रं जप्त्वा, जपं समर्प्य प्रणम्य, गणपते क्षमस्वेति विसर्जयेत् । ततो दीक्षापद्धत्युक्तमधिवासनं कृत्वा ब्रह्मज्ञकुलसाधकान् पञ्चतत्त्वैर्भोजयेत् ।

ततः परदिने स्नातः कृतनित्यक्रियः 'ॐ तत्सदित्युच्चार्य ॐ अद्येत्यादि अमुकमासि अमुकराशिस्थे भास्करे अमुकपक्षे अमुकतिथौ अमुकगोत्रः श्री अमुकशर्मा आजन्मज्ञानाज्ञानकृतपापक्षयकाम एतत् सतिलकाञ्चनं विष्णुदैवतं यथासम्भवगोत्रनाम्ने ब्राह्मणायाऽहं सम्प्रददे'। इति तिलकाञ्चनमुत्सृज्य दक्षिणां दद्यात् । ततः कौलतृप्त्यर्थं भोज्यमेकमुत्सृजेत् । ततः सूर्यायार्घ्यं दत्वा, ब्रह्मविष्णुनवग्रहान् सम्पूज्य, गौर्यादिषोडशमातृकापूजावसुधारासम्पातनायुष्यसूक्तजपाभ्युदयिकश्राद्धानि कृत्वा, गुरोः पार्श्वं गत्वा, प्रणम्य प्रार्थयेत्—

ॐ एहि नाथ कुलाचारनलिनीकुलवल्लभ ।
त्वत्पादाम्भोरुहच्छायां देहि मूर्ध्नि कृपानिधे ॥
आज्ञां देहि महाभाग शुभपूर्णाभिषेचने ।
निर्विघ्नं कर्मणः सिद्धिमुपैमि त्वत्प्रसादतः ॥

ततो गुरुर्वदेत्—

ॐ शिवशक्त्याज्ञया वत्स कुरु पूर्णाभिषेचनम् ।
मनोरथमयी सिद्धिर्जायतां शिवशासनात् ॥

इति गुरोरनुज्ञां गृहीत्वा 'ॐ अद्येत्यादि अमुकगोत्रः श्री अमुकशर्म्मा आयुर्लक्ष्मीबलारोग्यप्राप्तिकामो महानिर्वाणतन्त्रीयदशमपरिच्छेदोक्तपूर्णाभिषेकमहं करिष्ये' इति संकल्प्य, ॐ यज्जाग्रत० इति, ॐ देवो व० इति वा पठेत् । ततः ॐ साधु भवानास्तामित्यादि कर्म कृत्वा, वस्त्रालङ्करणादिना सशुद्धिकारणेन च गुरुमभ्यर्च्य, 'ॐ अद्येत्यादि मत्संकल्पितमहानिर्वाणतन्त्रीयदशमपरिच्छेदोक्तपूर्णाभिषेककर्मणि अमुकगोत्रं श्री अमुकानन्दनाथं गुरुत्वेन गुरुकर्मकरणाय वा भवन्तमहं वृणे' इति शिष्ये वदति, 'ॐ वृतोऽस्मि' इति गुरुर्ब्रूयात् । ततः—'ॐ यथाविहितं गुरुकर्म कुरु' शिष्ये वदति 'ॐ यथाज्ञानतः गुकरवाणीति' गुरुर्ब्रूयात् । ततोऽमनोहरे गृहे

सुचित्रिते, चित्रध्वजपताकाचन्द्रातपाद्युपशोभिते, धूपगुग्गुलादिभिः सुवासिते, घृतप्रदीपमालाविगतान्धकारलेशे, चतुरङ्गुलोच्छ्रायसार्धहस्तमृण्मयवेदिकायां सर्वतोभद्रादिमण्डलं पञ्चवर्णरजोभिर्विदध्यात्।

तत्र क्रमः—नवरात्राभिषेके सर्वतोभद्रं, सप्तरात्राभिषेके नवनाभं, पञ्चरात्राभिषेके पञ्चाब्जं त्रिरात्रैकरात्राभिषेके अष्टदलपद्मं निर्माय, तत्र घटस्थापनं दीक्षापद्धत्युक्तं कुर्यात्। ततः पञ्चतत्त्वादिकं संशोध्य, ठमिति चन्द्रबीजेन घटे दध्यक्षतौ दद्यात्। ॐ इति ब्रह्मबीजेन घटं स्थापयेत्। श्रीमिति लक्ष्मीबीजेन घटे सिन्दूरं दद्यात्। सविन्दुकैः क्षकाराद्यकारान्तैर्वर्णैः मूलमन्त्रेण ठकारेण घटं पूरयेत्। अथवा तीर्थतोयेन शुद्धजलेन वा पूरयेत्। नवरत्नं स्वर्णं वा घटमध्ये निःक्षिपेत्। पनसोदुम्बराश्वत्थवकुलाम्राणां पञ्चपल्लवानि 'ऐं' इति वाग्भवबीजेन घटमुखे दद्यात्। फलाक्षतयुक्तं नूतनशरावं श्रीमिति ह्लीमिति मन्त्रेण तदुपरि दद्यात्। वस्त्रयुग्मेन घटस्य ग्रीवां बघ्नीयात्।

तत्र क्रमः—शाक्ते रक्तेन, शैवे वैष्णवे च श्वेतेन। ततः स्थां स्थीं ह्लीमिति श्रीमिति मन्त्रेण घटं स्थिरीकृत्य, घटश्रीपात्रयोर्मध्ये दक्षिणादितो नव पात्राणि स्थापयेत्। तत्र क्रमः—शक्तिपात्रं राजतं, गुरुपात्रं हिरण्मयं, वीरपात्रं महाशङ्खम्, आत्मपात्रमपि तथा। अथवा पाषाणदारुलौहभिन्नानि पात्राणि कुर्यात्। ततो गुरुं देवीं च कारणेन तर्पयेत्। ततः कारणपूर्णघटे स्वस्वकल्पोक्तविधिना देवतां सम्पूज्य, यथाशक्ति जप्त्वा, जपं समर्प्य, बलिदानादिकं कृत्वा, स्तवकवचादिकं पठित्वा, अष्टोत्तरसहस्रं शतं हुत्वा गन्धपुष्पवस्त्रमाल्यपात्रादिभिः कुमारीशक्तिसाधकान् सम्पूज्य—

ॐ अनुगृह्णन्तु कौला मे शिष्यं प्रति कुलव्रताः।
पूर्णाभिषेकसंस्कारे भवद्भिरनुमन्यताम्॥

इति चक्रेश्वरे पठति, ते ब्रूयुः—

महामायाप्रभावेण प्रभावात् परमात्मनः।
शिष्यो भवति पूर्णस्ते परतत्त्वपरायणः॥

ततो गुरुः पूर्वोक्ते घटे शिष्येण देवीमर्चयित्वा श्रीं ह्रीं जप्त्वा घटं चालयेत् ।

ॐ उत्तिष्ठ ब्रह्म श देवताभीष्टसिद्धिद ।
सर्वतीर्थाम्बुपूर्णेन पूरयाऽस्य मनोरथम् ॥

इति पठित्वा, सदाशिव ऋषिः, अनुष्टुप् छन्दः, शिष्येष्टदेवता देवता, प्रणवो बीजम् , आयुःकीर्तिवलारोग्याद्यवाप्त्यै पूर्णाभिषेके विनियोगः ।

ॐ गुरवस्त्वाऽभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
दुर्गालक्ष्मीभवान्यस्त्वामभिषिञ्चन्तु मातरः ॥१॥
षोडशी तारिणी नित्या स्वाहा महिषमर्दिनी ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥२॥
जयदुर्गा विशालाक्षी ब्रह्माणी च सरस्वती ।
एतास्त्वामभिषिञ्चन्तु बगला वरदा शिवा ॥३॥
नारसिंही च वाराही वैष्णवी वनमालिनी ।
इन्द्राणी वारुणी रौद्री त्वाऽभिषिञ्चन्तु शक्तयः ॥४॥
भैरवी भद्रकाली च तुष्टिः पुष्टिरुमा क्षमा ।
श्रद्धा कान्तिर्दया शान्तिरभिषिञ्चन्तु ते सदा ॥५॥
महाकाली महालक्ष्मीर्महानीलसरस्वती ।
उग्रचण्डा प्रचण्डाद्या अभिषिञ्चन्तु सर्वदा ॥६॥
मत्स्यः कूर्मो वराहश्च नृसिंहो वामनस्तथा ।
रामो भार्गवरामस्त्वामभिषिञ्चन्तु वारिणा ॥७॥
असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तक्षयङ्करः ।
कपाली भीषणश्च त्वामभिषिञ्चन्तु वारिणा ॥८॥
काली कपालिनी कुल्ला कुरुकुल्ला विरोधिनी ।
विप्रचित्ता महोग्रा त्वामभिषिञ्चन्तु सर्वदा ॥९॥
इन्द्रोऽग्निः शमनो रक्षो वरुणः पवनस्तथा ।
धनदश्च तथेशानः सिञ्चन्तु त्वां दिगीश्वराः ॥१०॥

रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः ।
राहुः केतुः सनक्षत्रा अभिषिञ्चन्तु ते ग्रहाः ॥११॥
नक्षत्रं करणं योगा वाराः पक्षौ दिनानि च ।
ऋतुर्मासो हायनस्त्वामभिषिञ्चन्तु सर्वदा ॥१२॥
लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः ।
समुद्रास्त्वाऽभिषिञ्चन्तु मन्त्रपूतेन वारिणा ॥१३॥
अनन्ताद्या महानागाः सुपर्णाद्याः पतत्रिणः ।
तरवः कल्पवृक्षाद्याः सिञ्चन्तु त्वां दिगीश्वराः ॥१४॥
पातालभूतलव्योमचारिणः क्षेमचारिणः ।
पूर्णाभिषेकसन्तुष्टास्त्वाऽभिषिञ्चन्तु पाथसा ॥१५॥
दौर्भाग्यं दुर्यशो रोगा दौर्मनस्यं तथा शुचः ।
विनश्यन्त्वभिषेकेण कालीबीजेन ताडिताः ॥१६॥
भूताः प्रेताः पिशाचाश्च ग्रहा येऽरिष्टकारिणः ।
विद्रुतास्ते विनश्यन्ति रमाबीजेन ताडिताः ॥१७॥
अभिचारकृता दोषा वैरिमन्त्रोद्भवाश्च ये ।
मनोवाक्कायजा दोषा विनश्यन्त्वभिषेचनात् ॥१८॥
नश्यन्तु विपदः सर्वाः सम्पदः सन्तु सुस्थिराः ।
अभिषेकेण पूर्णेन पूर्णाः सन्तु मनोरथाः ॥१९॥

इत्येतैर्मन्त्रैः शिष्यमभिषिञ्च्य पशोर्मुखाद् यो मन्त्रो लब्धस्तं पुनः गुरुः श्रावयेत् । पूर्वोक्तनाम्ना शिष्यं संबोध्य शक्तिसाधकान् विज्ञाप्य गुरुरानन्दनाथान्तं नाम शिष्याय दद्यात् । श्रुतमन्त्रो गुरौ इष्टदेवतां सम्पूज्य पञ्चतत्त्वैर्गुरुमर्चयेत् । ततो गोभूहिरण्यवासोयानालङ्करणानि दक्षिणां च गुरवे दद्यात् । ततः पञ्चतत्त्वैः कौलशक्तिसाधकान् अभ्यर्च्य, गुरोश्चरणौ स्पृष्ट्वा, प्रार्थयेद् । यथा—

श्रीनाथ जगतां नाथ मन्नाथ करुणानिधे ।
परामृतप्रदानेन पूरयास्मन्मनोरथम् ॥

ततो गुरुः—

आज्ञा मे दीयतां कौलाः प्रत्यक्षशिवरूपिणः ।
सच्छिष्याय विनीताय ददामि परमामृतम् ॥

ते ब्रूयुः—

चक्रेश परमेशान कौलपङ्कजभास्कर ।
कृतार्थं कुरु सच्छिष्यं देह्यमुष्मै कुलामृतम् ॥

इति कौलाज्ञामादाय शुद्धिसहितं कारणपात्रं शिष्याय दद्यात् । ततः स्रुवलग्नभस्मना सर्वेषां ललाटे तिलकं दद्यात् । ततश्चक्रं संपूर्णं कृत्वा यथेष्टं विहरेत् ।

इति पूर्णाभिषेकः ।

पूर्णाभिषेकानन्तरं तु

वामकेश्वरतन्त्रे चतुःपञ्चाशत्पटले

भैरव उवाच—

मण्डपं विधिवत् कृत्वा पूजोपकरणानि च ।
परमहंसेन गुरुणा पूर्णाभिषेचनं चरेत् ॥
नवरत्नं जले स्थाप्यं जलेनापूर्य कुम्भकम् ।

द्विपञ्चाशत्पटले—

नातिह्रस्वं नातिदीर्घं कलशाष्टकमुत्तमम् ॥
अभिषेकात्मकमिति रत्नादिभिरलङ्कृतम् ।
वस्त्रेण वेष्टयेत् कुम्भान् माल्यचन्दनपूर्वकम् ॥
गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।
नदा ह्रदाः पुण्यतमा नद्यः पातालवर्त्मगाः ॥
सर्वतीर्थानि पुण्यानि घटे कुर्वन्तु सन्निधिम् ।
रमाबीजेन जप्तेन पल्लवं प्रतिपादयेत् ॥
कूर्चेन फलदानं स्यात् स्त्रीबीजेन स्थिराकृतिः ।
सिन्दूरं वह्निबीजेन पुष्पं प्रेतेन विन्यसेत् ॥
मूलेन प्रणवेनापि दूर्वां दद्याद् विचक्षणः ।
हुं फट् स्वाहेति मन्त्रेण कुर्याद् दर्भेण ताडनम् ॥

ईशकुम्भे यजेद् देवीं संकल्पोक्तविधानतः ।
संकल्पोक्तेन विधिना यजेदावरणं ततः ॥
बलिं दद्यात् प्रयत्नेन होमयेत् तन्त्रवित् सुधीः ।
आगमोक्तविधानेन कुर्यात् तत्र कुशण्डिकाम् ॥
त्रिमध्वाक्तेन विधिना विल्वपत्रेण होमयेत् ।
उपचारैः षोडशैस्तु पुनर्देवीं प्रपूजयेत् ॥
पुनरावरणं देवि पूजयेद् यत्नतः सुधीः ।
ततः पूर्णाहुतिं दत्त्वा प्रकुर्यात् गुरुपूजनम् ॥
सुवेद्याः पूजयेदष्टौ कुमारीश्च प्रपूजयेत् ।

चतुःपंचाशतपटले—

पूजावसाने देवेशि कलशैरभिषेचयेत् ।
विशेषतश्च तन्मन्त्रं वक्ष्यामि शृणु सादरात् ॥
ॐ ह्रीं श्रीं ह्सौः पुत्र त्वं सर्वसिद्धीश्वरो भव ।
इति पूर्वकलशेन गुरुः सिञ्चेच्छिशुं शुभम् ॥
ॐ ऐं ह्रीं श्रीं क्रौं हौं हं सः पुत्र त्वं वेतालो भव ।
इत्यग्निकलशेनैव गुरुः सिञ्चेच्छिशुं शुभम् ॥
ॐ ह्रीं ऐं ह्रीं ह्सौः हं सः पुत्र त्वम् अणिमादिसिद्धीश्वरो भव ।
इति दक्षिणेन कलशेन गुरुः सिञ्चेच्छिशुं शुभम् ॥
ॐ हुं ह्रीं क्रीं श्रीं पुत्र त्वम् अञ्जनासिद्धीश्वरो भव ।
इति नैऋतकलशेन गुरुः सिञ्चेच्छिशुं शुभम् ॥
ॐ अं आं ऐं क्रौं श्रीं ह्रीं पुत्र त्वं लघिमासिद्धीश्वरो भव ।
इति वारुणकलशेन गुरुः सिञ्चेच्छिशुं शुभम् ॥
ॐ आं ऐं क्रीं ह्रीं पुत्र त्वं काम्यसिद्धीश्वरो भव ।
इति मरुत्कलशेन गुरुः सिञ्चेच्छिशुं शुभम् ॥
ॐ ऐं श्रों ह्रीं पुत्र त्वं स्तम्भनादिसिद्धीश्वरो भव ।
इति कुवेरकलशेन गुरुः सिञ्चेच्छिशुं शुभम् ॥
ॐ हं सः ऐं ह्रीं नवनवनामकरणाभिधानपूर्वकं ।
पुत्र त्वमाकर्षणसिद्धीश्वरो भव ।

इतीशानकलशेन गुरुः सिञ्चेच्छिशुं शुभम् ।
दक्षिणान्तं क्रियाकाण्डं कुर्यात् साधकसत्तमः ॥

इत्यभिषेकप्रकरणम् ।

१–ध्यानरहस्यम्

साधकानां परमतत्त्वप्रापकं यथा मन्त्रविज्ञानं, तथैव ध्येयवृत्तिकरणार्थं ध्यानमप्यावश्यकम्, ध्याने साधकलक्ष्यभूतं समस्तं तत्त्वं सन्निहितं भवति, तच्चिन्तनाभ्यासदाढर्चे सति निखिलपुरुषार्थसिद्धिः । अत एवोक्तम्—

'ध्यानं विना भवेन्मूकः सिद्धमन्त्रोऽपि साधकः ।'

तस्माद् ध्यानतत्त्वं विशदीकर्तुं प्रकरणमिदमारभ्यते । प्रोक्तं च भगवत्या बगलामुख्या मुख्यं ध्यानम्—

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं
हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम् ॥
हस्तैर्मुद्गरपाशवज्ररसनां संबिभ्रतीं भूषणै–
र्व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तयेत् ॥

विवरणम्—वैदिकप्रकरणे यत् स्तम्भनतत्त्वं वेदप्रामाण्येन प्रसाधितं, तदेवात्र 'बगलामुखी' ति प्रसिद्धं शक्तितत्त्वं, तच्चिन्तनं तन्त्रशास्त्रानुमतं विव्रियते । शिवशक्त्यात्मकस्य परतत्त्वस्य प्रकाशकं शब्दतत्त्वं, तस्मादेव मन्त्राणामाविर्भावो, देवतास्वरूपव्यक्तिश्च पराख्यावाणीरूपेण योगिभिरनुभूयते । मूलाधारादुद्भवति परमात्मनो भाषेयं सर्वथा सत्यं बिभर्ति, याम‌त्रभवान् पतञ्जलिः सूत्रयामास "ऋतम्भरा तत्र प्रज्ञा" पश्यन्ती–मध्यमा–वैखरीति संज्ञाभिः सैव, चतुष्प्रकाराः ता एव भगवत्याश्चत्वारो बाहवः, तेषु चत्वारि शस्त्राणि च निर्दिष्टानि तत्प्रभावद्योतकानि । प्रथमं 'गदा' । 'गद' व्यक्तायां वाचि इति निष्पन्नत्वेन सिध्यति । द्वितीयम् "स वाग्वज्रो यजमानं हिनस्ति" इति वज्ररूपं निर्दिष्टम् । पाशरूपेण तृतीयं तन्माधुर्यादिगुणान्वितं, तेन साधको महतोऽपि सम्यग्रूपेण बध्नाति । चतुर्थं जिह्वारूपं स्थूलं 'दुर्वाग्' इति श्रुतिप्रसिद्धं

पञ्चमी चैव षष्ठी च विशुद्धा सप्तमी तथा ।
अष्टमी नवमी चैव दशम्येकादशी तथा ॥१४०॥
द्वादशी त्रयोदशी च चतुर्दश्यथ पूर्णिमा ।
अमावस्या तथा पूर्वा उत्तरा परिपूर्णिमा ॥१४१॥
खड्गिनी चक्रिणी घोरा गदिनी शूलिनी तथा ।
भुशुण्डी चापिनी बाणा सर्वायुधविभीषणा ॥१४२॥
कुलेश्वरी कुलवती कुलाचारपरायणा ।
कुलकर्म्मसुरक्ता च कुलाचारप्रवर्धिनी ॥१४३॥
कीर्तिः श्रीः चरमा रामा धर्म्मायै सततं नमः ।
क्षमा धृतिः स्मृतिर्मेधा कल्पवृक्षनिवासिनी ॥१४४॥
उग्रा उग्रप्रभा गौरी वेदविद्याविवर्धिनी ।
साध्या सिद्धा सुसिद्धा च विप्ररूपा तथैव च ॥१४५॥
काली कराली काल्या च कालदैत्यविनाशिनी ।
कौलिनी कालिकी चैव कचटतपवर्णिका ॥१४६॥
जयिनी जययुक्ता च जयदा जृम्भिणी तथा ।
स्राविणी द्राविणी देवी भरुण्डा विन्ध्यवासिनी ॥१४७॥
ज्योतिर्भूता च जयदा ज्वालामालासमाकुला ।
भिन्ना भिन्नप्रकाशा च विभिन्ना भिन्नरूपिणी ॥१४८॥
अश्विनी भरणी चैव नक्षत्रसम्भवानिला ।
काश्यपी विनता ख्याता दितिजा दितिरेव च ॥१४९॥
कीर्तिः कामप्रिया देवी कीर्त्या कीर्तिविवर्धिनी ।
सद्योमांससमालब्धा सद्यश्छिन्नासिशङ्करा ॥१५०॥
दक्षिणा चोत्तरा पूर्वा पश्चिमा दिक् तथैव च ।
अग्निनैर्ऋतिवायव्या ईशान्या दिक् तथा स्मृता ॥१५१॥
ऊर्ध्वाङ्गाऽधोगता श्वेता कृष्णा रक्ता च पीतका ।
चतुर्वर्गा चतुर्वर्णा चतुर्मात्रात्मिकाक्षरा ॥१५२॥

चतुर्मुखी चतुर्वेदा चतुर्विद्या चतुर्मुखा ।
चतुर्गणा चतुर्माता चतुर्वर्गफलप्रदा ।।१५३।।
धात्री विधात्री मिथुना नारी नायकवासिनी ।
सुरा मुदा मुदवती मोदिनी मेनकात्मजा ।।१५४।।
ऊर्ध्वकाली सिद्धिकाली दक्षिणाकालिका शिवा ।
नील्या सरस्वती सा त्वं बगला छिन्नमस्तका ।।१५५।।
सर्वेश्वरी सिद्धिविद्या परा परमदेवता ।
हिङ्गुला हिङ्गुलाङ्गी च हिङ्गुलाधरवासिनी ।।१५६।।
हिङ्गुलोत्तमवर्णाभा हिङ्गुलाभरणा च सा ।
जाग्रती च जगन्माता जगदीश्वरवल्लभा ।।१५७।।
जनार्दनप्रिया देवी जययुक्ता जयप्रदा ।
जगदानन्दकारी च जगदाह्लादकारिणी ।।१५८।।
ज्ञानदानकरी यज्ञा जानकी जनकप्रिया ।
जयन्ती जयदा नित्या ज्वलदग्निसमप्रभा ।।१५९।।
विद्याधरा च विम्बोष्ठी कैलासाचलवासिनी ।
विभवा वडवाग्निश्च अग्निहोत्रफलप्रदा ।।१६०।।
मन्त्ररूपा परा देवी तथैव गुरुरूपिणी ।
गया गङ्गा गोमती च प्रभासा पुष्करापि च ।।१६१।।
विन्ध्याचलरता देवी विन्ध्याचलनिवासिनी ।
बहुबहुसुन्दरी च कंसासुरविनाशिनी ।।१६२।।
शूलिनी शूलहस्ता च वज्रा वज्रहरापि च ।
दुर्गा शिवा शान्तिकरी ब्रह्माणी ब्राह्मणप्रिया ।।१६३।।
सर्वलोकप्रणेत्री च सर्वरोगहरापि च ।
मङ्गला शोभना शुद्धा निष्कला परमा कला ।।१६४।।
विश्वेश्वरी विश्वमाता ललिता हसितानना ।
सदाशिवा उमा क्षेमा चण्डिका चण्डविक्रमा ।।१६५।।

सर्वदेवमयी देवी सर्वागमभयापहा ।
ब्रह्मेशविष्णुनमिता सर्वकल्याणकारिणी ॥१६६॥
योगिनी योगमाता च योगीन्द्रहृदयस्थिता ।
योगिजाया योगवती योगीन्द्रानन्ददायिनी ॥१६७॥
इन्द्रादिनमिता देवी ईश्वरी चेश्वरप्रिया ।
विशुद्धिदा भयहरा भक्तद्वेषिभयङ्करी ॥१६८॥
भववेषा कामिनी च भरुण्डा भयकारिणी ।
बलभद्रप्रियाकारा संसारार्णवतारिणी ॥१६९॥
पञ्चभूता सर्वभूता विभूतिर्भूतिधारिणी ।
सिंहवाहा महामोहा मोहपाशविनाशिनी ॥१७०॥
मन्दुरा मदिरा मुद्रा मुद्रामुद्गरधारिणी ।
सावित्री च महादेवी परप्रियनिनायिका ॥१७१॥
यमदूती च पिङ्गाक्षी वैष्णवी शङ्करी तथा ।
चन्द्रप्रिया चन्द्ररता चन्दनारण्यवासिनी ॥१७२॥
चन्दनेन्द्रसमायुक्ता चण्डदैत्यविनाशिनी ।
सर्वेश्वरी यक्षिणी च किराती राक्षसी तथा ॥१७३॥
महाभोगवती देवी महामोक्षप्रदायिनी ।
विश्वहन्त्री विश्वरूपा विश्वसंहारकारिणी ॥१७४॥
धात्री च सर्वलोकानां हितकारणकामिनी ।
कमला सूक्ष्मदा देवी धात्री हरविनाशिनी ॥१७५॥
सुरेन्द्रपूजिता सिद्धा महातेजोवतीति च ।
परा रूपवती देवी त्रैलोक्याकर्षकारिणी ॥१७६॥
इति ते कथितं देवि पीतानामसहस्रकम् ।
पठेद् वा पाठयेद् वापि सर्वसिद्धिर्भवेत् प्रिये ॥१७७॥
इति मे विष्णुना प्रोक्तं महास्तम्भकरं परम् ।
प्रातःकाले च मध्याह्ने सन्ध्याकाले च पार्वति ॥१७८॥

एकचित्तः पठेदेतत् सर्वसिद्धिर्भविष्यति ।
एकवारं पठेद् यस्तु सर्वपापक्षयो भवेत् ॥१७९॥
द्विवारं च पठेद् यस्तु विघ्नेश्वरसमो भवेत् ।
त्रिवारपठनाद् देवि सर्वं सिध्यति सर्वथा ॥१८०॥
स्तवस्यास्य प्रभावेण साक्षाद्भवति सुव्रते ।
मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् ॥१८१॥
विद्यार्थी लभते विद्यां तर्कव्याकरणान्विताम् ।
महित्वं वत्सरान्ताच्च शत्रुहानिः प्रजायते ॥१८२॥
क्षोणीपतिर्वशस्तस्य स्मरणे सदृशो भवेत् ।
यः पठेत् सर्वदा भक्त्या श्रेयस्तु भवति प्रिये ॥१८३॥
गणाध्यक्षप्रतिनिधिः कविकाव्यपरो वरः ।
गोपनीयं प्रयत्नेन जननीजारवत् सदा ॥१८४॥
हेतुयुक्तो भवेन्नित्यं शक्तियुक्तः सदा भवेत् ।
य इदं पठते नित्यं शिवेन सदृशो भवेत् ॥१८५॥
जीवन् धर्मार्थभोगी स्यान् मृतो मोक्षपतिर्भवेत् ।
सत्यं सत्यं महादेवि सत्यं सत्यं न संशयः ॥१८६॥
स्तवस्यास्य प्रभावेण देवेन सह मोदते ।
सुचित्ताश्च सुराः सर्वे स्तवराजस्य कीर्तनात् ॥१८७॥
पीताम्बरपरीधानां पीतगन्धानुलेपनाम् ।
परमोदयकीर्तिः स्यात् स्मरतः सुरसुन्दरि ॥१८८॥

इति श्रीउत्कटशम्बरे नागेन्द्रप्रयाणतन्त्रे षोडशसहस्रे विष्णुशङ्करसंवादे श्रीपीताम्बरीसहस्रनामस्तोत्रम् समाप्तम् ।

—:०:—

# श्रीबगलामुखी--कल्पविधानम्

* श्रीगणेशाय नमः *

मूलविद्यया त्रिराचम्य प्राणायामत्रयं कृत्वा प्रयोगमुच्चार्य आदावन्ते शुद्धशक्तिमालामन्त्रम् अष्टोत्तरशतं जपेत्, अथ दिग्बन्धनं कुर्यात् ।

ॐ ऐं ह्लीं श्रीं श्यामा मां पूर्वतः पातु,
ॐ ऐं ह्लीं श्रीं आग्नेय्यां पातु तारिणी ॥
ॐ ऐं ह्लीं श्रीं महाविद्या दक्षिणे तु
ॐ ऐं ह्लीं श्रीं नैर्ऋत्यां षोडशी तथा ॥
ॐ ऐं ह्लीं श्रीं भुवनेशी पश्चिमायाम्
ॐ ऐं ह्लीं श्रीं वायव्यां बगलामुखी ॥
ॐ ऐं ह्लीं श्रीं उत्तरे छिन्नमस्ता च
ॐ ऐं ह्लीं श्रीं धूमावती तथेशान्याम् ॥
ॐ ऐं ह्लीं श्रीं कमला पातु ऊर्ध्वं तु
ॐ ऐं ह्लीं श्रीं अन्तरिक्षं सर्वदेवताः ॥
ॐ ऐं ह्लीं श्रीं अधस्तात् चैव मातङ्गी
ॐ ऐं ह्लीं श्रीं सर्वदिग् बगलामुखी ॥

ॐ ऐं ह्लीं श्रीं ब्रह्मास्त्रसिद्धप्रयोगस्तोत्रमन्त्रस्य भगवान् नारद ऋषिः, अनुष्टुप् छन्दः, बगलामुखी देवता, हं बीजम्, ईं शक्तिः, लं कीलकं, मम सर्वार्थसाधनसिध्यर्थे पाठे विनियोगः ।

ॐ भगवते नारदाय ऋषये नमः शिरसि ।
ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः श्यामादेव्यै नमः ललाटे ।
ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः तारादेव्यै नमः कर्णयोः ।
ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः महाविद्यायै नमः भ्रुवोर्मध्ये ।
ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः षोडशीदेव्यै नमः नेत्रयोः ।
ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः अनुष्टुप् छन्दसे नमः मुखे ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः श्रीबगलामुखीदेव्यै नमः हृदये ।
ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः बगलाभुवनेश्वरीभ्यां नमः नासिकयोः ।
ॐ ऐं ह्लीं श्रीं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः छिन्नमस्तादेव्यै नमः नाभौ ।
ॐ ऐं ह्लीं श्रीं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः धूमावतीदेव्यै नमः कट्याम् ।
ॐ ऐं ह्लीं श्रीं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः कमलादेव्यै नमः गुह्ये ।
ॐ ऐं ह्लीं श्रीं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः श्रीमातङ्गीदेव्यै नमः पादयोः ।
ॐ ऐं ह्लीं श्रीं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः ह्लीं बीजाय नमः नाभौ ।
ॐ ऐं ह्लीं श्रीं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः ह्लीं कीलकाय नमः सर्वाङ्गे ।

मम सर्वार्थसाधने बगलादेव्यै जपे विनियोगः । करन्यासः । ॐ ह्लां बगलामुखी अङ्गुष्ठाभ्यां नमः । ॐ ह्लीं बगलामुखी तर्जनीभ्यां नमः । ॐ ह्लूं बगलामुखी मध्यमाभ्यां नमः । ॐ ह्लैं बगलामुखी अनामिकाभ्यां नमः । ॐ ह्लौं बगलामुखी कनिष्ठिकाभ्यां नमः । ॐ ह्लः बगलामुखी करतलकरपृष्ठाभ्यां नमः । करन्यासवत् हृदयादिन्यासः करणीयः ।

## ध्यानम्

सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं
हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच्चम्पकस्रग्युताम् ॥
हस्तैर्मुद्गरपाशवज्ररसनाः संबिभ्रतीं भूषणैः
व्याप्ताङ्गीं बगलामुखीं त्रिजगतां संस्तम्भिनीं चिन्तये ॥

## अथ यन्त्रोद्धारः

त्रिकोणं चैव षट्कोणं वसुपत्रं ततः परम् ।
पुनश्च वसुपत्रं च वर्तुलं च प्रकल्पयेत् ॥
षोडशारं ततः पश्चात् चतुरस्रं विधीयते ।
वर्तुलं चतुरस्रं च मध्ये मायां समालिखेत् ॥

इति यन्त्रोद्धारः ।

यन्त्रोद्धारम् आवाहनादिप्राणप्रतिष्ठापूर्वकं पञ्चोपचारैः कुर्यात् ।

## अथ पूजा

**आदौ त्रिकोणदेवताः पूजयेत्—**

ॐ ऐं ह्लीं श्रीं क्रोधिन्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं स्तम्भिन्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं चामरधारिण्यै स्वाहा पूजयामि नमः तर्पयामि ।

**पुनस्त्रिकोणे—**

ॐ ऐं ह्लीं श्रीं ओडयानपीठाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं जालन्धरपीठाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं कामगिरिपीठाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं अनन्तनाथाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं श्रीकण्ठनाथाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं दत्तात्रेयनाथाय स्वाहा पूजयामि नमः तर्पयामि ।

**अथ षट्कोणे—**

ॐ ऐं ह्लीं श्रीं सुभगायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं भगसर्पिण्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं भगवाहिन्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं भगमालिन्यैं स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं भगशुद्धायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं भगपत्न्यै स्वाहा पूजयामि नमः तर्पयामि ।

**अथ वसुपत्रे—**

ॐ ऐं ह्लीं श्रीं ब्राह्म्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं माहेश्वर्यैं स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं कौमार्यैं स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं वैष्णव्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं वाराह्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं इन्द्राण्यै स्वाहा पूजयामि नमः तर्पयामि ।

ॐ ऐं ह्लीं श्रीं चामुण्डायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं महालक्ष्म्यै स्वाहा पूजयामि नमः तर्पयामि ।

अथ द्वितीय वसुपत्रे—

ॐ ऐं ह्लीं श्रीं जयाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं विजयाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं अजिताय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं अपराजिताय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं जृम्भिण्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं स्तम्भिन्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं मोहिन्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं आकर्षिण्यै स्वाहा पूजयामि नमः तर्पयामि ।

अथ पत्राग्रे—

ॐ ऐं ह्लीं श्रीं असिताङ्गभैरवाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं रुरुभैरवाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं चण्डभैरवाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं क्रोधभैरवाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं उन्मत्तभैरवाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं कपालिभैरवाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं भीषणभैरवाय स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं संहारभैरवाय स्वाहा पूजयामि नमः तर्पयामि ।

षोडशदले—

ॐ ऐं ह्लीं श्रीं बगलामुख्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं स्तम्भिन्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं जृम्भिण्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं मोहिन्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं चञ्चलायै स्वाहा पूजयामि नमः तर्पयामि ।

ॐ ऐं ह्लीं श्रीं अचलायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं वश्यायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं कालिकायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं कलमषायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं धात्र्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं कल्पान्तायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं आकर्षिण्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं शाकिन्यै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं अष्टगन्धायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं भोगेच्छायै स्वाहा पूजयामि नमः तर्पयामि ।
ॐ ऐं ह्लीं श्रीं भाविकायै स्वाहा पूजयामि नमः तर्पयामि ।

इति यन्त्रपूजा ।

ॐ ऐं ह्लीं श्रीं ह्लीं बगलामुखि सर्वदुष्टानां वश्यं कुरु कुरु क्लीं क्लौं ह्लीं हुं फट् स्वाहा । ॐ ह्लां बगलामुखि श्रीबगलामुखि दुष्टान् भिन्धि भिन्धि, छिन्धि छिन्धि, परमन्त्रान् निवारय निवारय, वीरचक्रं छेदय छेदय, बृहस्पतिमुखं स्तम्भय स्तम्भय, ॐ ह्लीं अरिष्टस्तम्भनं कुरु कुरु स्वाहा ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

**अथ स्तोत्रम् पटेत्—**

ब्रह्मास्त्रां प्रवक्ष्यामि बगलां नारदसेविताम् ।
देवगन्धर्वयक्षादिसेवितपादपङ्कजाम् ।।

त्रैलोक्यस्तम्भिनी विद्या सर्वशत्रुवशङ्करी आकर्षणकरी उच्चाटनकरी विद्वेषणकरी जारणकरी मारणकरी जृम्भणकरी स्तम्भनकरी ब्रह्मास्त्रेण सर्ववश्यं कुरु कुरु ॐ ह्लां बगलामुखि हु फट् स्वाहा ।

ॐ ह्लां द्राविणि द्राविणि भ्रामिणि भ्रामिणि एहि एहि सर्वभूतान् उच्चाटय उच्चाटय सर्वदुष्टान् निवारय निवारय भूत–प्रेत–पिशाच-

डाकिनी–शाकिनी: छिन्धि छिन्धि, खड्गेन भिन्धि भिन्धि मुद्गरेण संमारय संमारय, दुष्टान् भक्षय भक्षय, ससैन्यं भूपतिं कीलय कीलय मुखस्तम्भनं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा ।

आत्म-रक्षा ब्रह्म-रक्षा विष्णु-रक्षा रुद्र-रक्षा इन्द्र-रक्षा अग्नि-रक्षा यम-रक्षा नैर्ऋत-रक्षा वरुण-रक्षा वायु-रक्षा कुवेर-रक्षा ईशान-रक्षा सर्व-रक्षा भूत-प्रेत-पिशाच-डाकिनी-शाकिनी-रक्षा अग्निवैताल-रक्षा गण-गन्धर्व-रक्षा, तस्मात् सर्वरक्षां कुरु कुरु, व्याघ्र-गज-सिंह-रक्षा रण-तस्कर-रक्षा, तस्मात् सर्वं बन्धयामि ॐ ह्लां बगलामुखि हुं फट् स्वाहा ।

ॐ ह्लीं भो बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा ।

ॐ ऐं ह्लीं श्रीं बगलामुखि एहि एहि पूर्वदिशायां बन्धय बन्धय इन्द्रस्य मुखं स्तम्भय स्तम्भय इन्द्रशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ह्लीं श्रीं पीताम्बरे एहि एहि अग्निदिशायां बन्धय बन्धय अग्निमुखं स्तम्भय स्तम्भय अग्निशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं अग्निस्तम्भं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ह्लीं श्रीं महिषमर्दिनि एहि एहि दक्षिणदिशायां बन्धय बन्धय यमस्य मुखं स्तम्भय स्तम्भय यमशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं हृज्जृम्भणं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ह्रीं श्रीं चण्डिके एहि एहि नैर्ऋत्यदिशायां बन्धय बन्धय, नैर्ऋत्यमुखं स्तम्भय स्तम्भय नैर्ऋत्यशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा।

ॐ ऐं ह्रीं श्रीं करालनयने एहि एहि पश्चिमदिशायां बन्धय बन्धय वरुणमुखं स्तम्भय स्तम्भय वरुणशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा।

ॐ ऐं ह्रीं श्रीं कालिके एहि एहि वायव्यदिशायां बन्धय बन्धय वायुमुखं स्तम्भय स्तम्भय वायुशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा।

ॐ ऐं ह्रीं श्रीं महात्रिपुरसुन्दरि एहि एहि उत्तरदिशायां बन्धय बन्धय कुबेरमुखं स्तम्भय स्तम्भय कुबेरशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा।

ॐ ऐं ऐं महाभैरवि एहि एहि ईशानदिशायां बन्धय बन्धय ईशानमुखं स्तम्भय स्तम्भय ईशानशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा।

ॐ ऐं ऐं गाङ्गेश्वरि एहि एहि ऊर्ध्वदिशायां बन्धय बन्धय ब्रह्माणं चतुर्मुखं स्तम्भय स्तम्भय ब्रह्मशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा।

ॐ ऐं ऐं ललितादेवि एहि एहि अन्तरिक्षदिशायां बन्धय बन्धय विष्णुमुखं स्तम्भय स्तम्भय विष्णुशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं चक्रधारिणि एहि एहि अधोदिशायां बन्धय बन्धय वासुकिमुखं स्तम्भय स्तम्भय वासुकिशस्त्रं निवारय निवारय सर्वसैन्यं कीलय कीलय पच पच मथ मथ मर्दय मर्दय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लां बगलामुखि हुं फट् स्वाहा ।

दुष्टमन्त्रं दुष्टयन्त्रं दुष्टपुरुषं बन्धयामि शिखां बन्ध ललाटं बन्ध भ्रुवौ बन्ध नेत्रे बन्ध कर्णौ बन्ध नसौ बन्ध ओष्ठौ बन्ध अधरौ बन्ध जिह्वां बन्ध रसनां बन्ध बुद्धिं बन्ध कण्ठं बन्ध हृदयं बन्ध कुक्षिं बन्ध हस्तौ बन्ध नाभिं बन्ध लिङ्गं बन्ध गुह्यं बन्ध ऊरू बन्ध जानू बन्ध जङ्घे बन्ध गुल्फौ बन्ध पादौ बन्ध स्वर्ग-मृत्यु-पातालं बन्ध बन्ध रक्ष रक्ष ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं ॐ ह्लीं बगलामुखि इन्द्राय सुराधिपतये ऐरावतवाहनाय श्वेतवर्णाय वज्रहस्ताय सपरिवाराय एहि एहि ममविघ्नान् निरासय निरासय विभञ्जय विभञ्जय ॐ ह्लीं अयुकस्य मुखं स्तम्भय स्तम्भय ॐ ह्लीं अमुकस्य मुखं भेदय भेदय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं ॐ ह्लीं बगलामुखि अग्नये तेजोधिपतये छागवाहनाय रक्तवर्णाय शक्तिहस्ताय सपरिवाराय एहि एहि मम विघ्नान् विभञ्जय विभञ्जय ॐ ह्लीं अमुकस्य मुखं स्तम्भय स्तम्भय ॐ ह्लीं अमुकस्य मुखं भेदय भेदय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं ॐ ह्लीं बगलामुखि यमाय प्रेताधिपतये महिषवाहनाय कृष्णवर्णाय दण्डहस्ताय सपरिवाराय एहि एहि मम विघ्नान् विभञ्जय विभञ्जय ॐ ह्लीं अमुकस्य मुखं स्तम्भय स्तम्भय ॐ ह्लीं अमुकस्य मुखं भेदय भेदय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं ॐ ह्लीं बगलामुखि वरुणाय जलाधिपतये मकरवाहनाय श्वेतवर्णाय पाशहस्ताय सपरिवाराय एहि एहि मम विघ्नान् विभञ्जय विभञ्जय ॐ ह्लीं अमुकस्य मुखं स्तम्भय स्तम्भय ॐ ह्लीं अमुकस्य मुखं भेदय भेदय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं ॐ ह्लीं बगलामुखि वायव्याय मृगवाहनाय धूम्रवर्णाय ध्वजाहस्ताय सपरिवाराय एहि एहि मम विघ्नान् विभञ्जय विभञ्जय ॐ ह्लीं अमुकस्य मुखं स्तम्भय स्तम्भय ॐ ह्लीं अमुकस्य मुखं भेदय भेदय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं ॐ ह्लीं बगलामुखि ईशानाय भूताधिपतये वृषभवाहनाय कर्पूरवर्णाय त्रिशूलहस्ताय सपरिवाराय एहि एहि मम विघ्नान् विभञ्जय विभञ्जय ॐ ह्लीं अमुकस्य मुखं स्तम्भय स्तम्भय ॐ ह्लीं अमुकस्य मुखं भेदय भेदय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं ॐ ह्लीं बगलामुखि ब्रह्मणे ऊर्ध्वदिग्लोकपालाधिपतये हंसवाहनाय स्वेतवर्णाय कमण्डलुहस्ताय सपरिवाराय एहि एहि मम विघ्नान् विभञ्जय विभञ्जय ॐ ह्लीं अमुकस्य मुखं स्तम्भय स्तम्भय ॐ ह्लीं अमुकस्य मुखं भेदय भेदय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ऐं ॐ ह्लीं बगलामुखि वैष्णवीसहिताय नागाधिपतये गरुड़वाहनाय श्यामवर्णाय चक्रहस्ताय सपरिवाराय एहि एहि मम विघ्नान् विभञ्जय विभञ्जय ॐ ह्लीं अमुकस्य मुखं स्तम्भय स्तम्भय ॐ ह्लीं

अमुकस्य मुखं भेदय भेदय ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ नमो भगवति पुण्यपवित्रे स्वाहा ।

ॐ ह्लीं बगलामुखि नित्यम् एहि एहि रविमण्डलमध्याद् अवतर अवतर सान्निध्यं कुरु कुरु । ॐ ऐं परमेश्वरीम् आवाहयामि नमः । मम सान्निध्यं कुरु कुरु । ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ऐं ह्रीं श्रीं ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः बगले चतुर्भुजे मुद्गरशरसंयुक्ते दक्षिणे जिह्वावज्रसंयुक्ते वामे श्रीमहाविद्ये पीतवस्त्रे पञ्चमहाप्रेताधिरूढ़े सिद्धविद्याधरवन्दिते ब्रह्मविष्णुरुद्रपूजिते आनन्दस्वरूपे विश्वसृष्टिस्वरूपे महाभैरवरूपधारिणि स्वर्गमृत्युपातालस्तम्भिनि वाममार्गाश्रिते श्रीबगले ब्रह्मविष्णुरुद्ररूपनिर्मिते षोडशकलापरिपूरिते दानवरूपसहस्रादित्यशोभिते त्रिवर्णे एहि एहि मम हृदयं प्रवेशय प्रवेशय शत्रुमुखं स्तम्भय स्तम्भय अन्यभूतपिशाचान् खादय खादय अरिसैन्यं विदारय विदारय परविद्यां परचक्रं छेदय छेदय वीरचक्रं धनुषा संभारय संभारय त्रिशूलेन छिन्धि छिन्धि पाशेन बन्धय बन्धय भूपतिं वश्यं कुरु कुरु संमोहय संमोहय विना जाप्येन सिद्धय सिद्धय विना मन्त्रेण सिद्धिं कुरु कुरु सकलदुष्टान् घातय घातय मम त्रैलोक्यं वश्यं कुरु कुरु सकलकुलराक्षसान् दह दह पच पच मथ मथ हन हन मर्दय मर्दय मारय मारय भक्षय भक्षय मां रक्ष रक्ष विस्फोटकादीन् नाशय नाशय ॐ ह्रीं विषमज्वरं नाशय नाशय विषं निर्विषं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ क्लीं क्लौं ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय स्तम्भय जिह्वां कीलय कीलय बुद्धिं विनाशय विनाशय क्लीं क्लौं ह्लीं स्वाहा ।

ॐ बगलामुखि स्वाहा । ॐ पीताम्बरे स्वाहा । ॐ त्रिपुरभैरवि स्वाहा । ॐ विजयायै स्वाहा । ॐ जयायै स्वाहा । ॐ शारदायै स्वाहा ।

ॐ सुरेश्वर्यै स्वाहा । ॐ रुद्राण्यै स्वाहा । ॐ विन्ध्यवासिन्यै स्वाहा । ॐ त्रिपुरसुन्दर्यै स्वाहा । ॐ दुर्गायै स्वाहा । ॐ भवान्यै स्वाहा । ॐ भुवनेश्वर्यै स्वाहा । ॐ महामायायै स्वाहा । ॐ कमललोचनायै स्वाहा । ॐ तारायै स्वाहा । ॐ योगिन्यै स्वाहा । ॐ कौमार्यै स्वाहा । ॐ शिवायै स्वाहा । ॐ इन्द्राण्यै स्वाहा । ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

ॐ ह्लीं शिवतत्वव्यापिनि बगलामुखि स्वाहा । ॐ ह्लीं मायातत्वव्यापिनि बगलामुखि हृदयाय स्वाहा । ॐ ह्लीं विद्यातत्वव्यापिनि बगलामुखि शिरसे स्वाहा । ॐ ह्लीं बगलामुखि हुँ फट् स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः शिरो रक्षतु
बगलामुखि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः भालं रक्षतु
पीताम्बरे रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः नेत्रे रक्षतु
महाभैरवि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः कर्णौ रक्षतु
विजये रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः नसौ रक्षतु
जये रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः वदनं रक्षतु
शारदे रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः कण्ठं रक्षतु
रुद्राणि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः स्कन्धौ रक्षतु
विन्ध्यवासिनि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः बाहू रक्षतु
त्रिपुरसुन्दरि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः करौ रक्षतु
दुर्गे रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः हृदयं रक्षतु
भवानि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः उदरं रक्षतु
भुननेश्वरि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः नाभि रक्षतु
महामाये रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः कटिं रक्षतु
कमललोचने रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः उदरं रक्षतु
तारे रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः सर्वाङ्गं रक्षतु
महातारे रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः अग्रे रक्षतु
योगिनि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः पृष्ठे रक्षतु
कौमारि रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह लौं ह्लः दक्षिणपार्श्वे रक्षतु
शिवे रक्ष रक्ष स्वाहा ।

ॐ ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः वामपार्श्वे रक्षतु
इन्द्राणि रक्ष रक्ष स्वाहा ।

ॐ गां गीं गूं गैं गौं गः गणपतये सर्वजनमुखस्तम्भनाय आगच्छ आगच्छ मम विघ्नान् नाशय नाशय दुष्टं खादय खादय दुष्टस्य मुखं स्तम्भय स्तम्भय अकालमृत्युं हन हन भो गणाधिपते ॐ ह्लीं वश्यं कुरु कुरु ॐ ह्लीं बगलामुखि हुं फट् स्वाहा ।

अष्टौ ब्राह्मणान् ग्राहयित्वा सिद्धिर्भवति नान्यथा ।
भ्रूयुग्मं तु पठेत् नात्र कार्यं संख्याविचारणम् ॥
यन्त्रिणां बगला राज्ञी सुराणां बगलामुखी ।
शूराणां बगलेश्वरी ज्ञानिनां मोक्षदायिनी ॥
एतत् स्तोत्रं पठेन् नित्यं त्रिसन्ध्यं बगलामुखी ।
विना जाप्येन सिध्येत साधकस्य न संशयः ॥
निशायां पायसतिलाज्यहोमं नित्यं तु कारयेत् ।
सिध्यन्ति सर्वकार्याणि देवी तुष्टा सदा भवेत् ॥
मासमेकं पठेत् नित्यं त्रैलोक्ये चातिदुर्लभम् ।
सर्वसिद्धिमवाप्नोति, देव्या लोकं स गच्छति ॥

इति श्रीबगलामुखीकल्पे वीरतन्त्रे बगलासिद्धिप्रयोगः
सम्पूर्णः

—:o:—

# श्रीबगला–रहस्यम्

## ❀ श्रीबगलायै नमः ❀

**अथ वेदोक्तं बगला-रहस्यम्—**

अस्य श्रीबगलामुखीशत्रुनिवारिणीस्तोत्रमन्त्रस्य आदिसृष्टिकर्त्ता दारुण ऋषिः, अनुष्टुप् छन्दः, पीताम्बरा देवता, ह्लीं शक्तिः, क्लीं कीलकम्, मम शत्रुविध्वंसनार्थे जपे विनियोगः। ॐ ह्लीं अङ्गुष्ठाभ्यां नमः। ॐ ह्लीं तर्जनीभ्यां नमः। ॐ ह्लीं मध्यमाभ्यां नमः। ॐ ह्लीं अनामिकाभ्यां नमः। ॐ ह्लीं कनिष्ठिकाभ्यां नमः। ॐ ह्लीं करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासान् विधाय, आदिसृष्टिकर्त्रे दारुणऋषये नमः पादयोः, अनुष्टुप्छन्दसे नमो नाभौ, पीताम्बरादेवतायै नमो मुखे, ह्लीं शक्तये नमः शिरसि, श्रीं कीलकाय नमः सर्वाङ्गे।

### ध्यानम्

ध्यायेत् प्रेतासनां देवीं द्विभुजां च चतुर्भुजाम्।
पीतवासां मणिग्रीवां सहस्रार्कसमद्युतिम्।
ॐ ह्लीं हंकारिणी प्रोक्ता श्रीं श्रीं त्र्यम्बकतोषिणी।
विम्बाकरालवदना ह्यस्मद्वैरिनिवारिणी।
स्नं स्नं दुकूललम्बोष्ठी फं फं स्वराग्रनासिका।
खं खं खड्गप्रहारेण दुष्टवारणनिकृन्तिनी।
ठं ठं विध्वंसिनी देवी बं बं बुद्धिव्यतिक्रमी।
रं रं राज्यादिकं देवी बुद्धिस्तम्भनमुत्तमा।
लं लं लम्बोदरीध्यानात् सं सं सिद्धिप्रदा सदा।
ह्लीं ह्लीं जय शत्रुलक्ष्मीं रुं रुं रुद्धयते सदा।

ॐ ह्लीं ह्लीं पीताम्बरे अस्मत्शत्रूणां जिह्वां कीलय कीलय वाणीं स्तम्भय स्तम्भय मर्दय मर्दय ध्वंसय ध्वंसय स्वाहा।

राजद्वारे च संग्रामे विद्यावादविवादयोः ।
ब्रह्मास्त्रमन्त्रस्मरणात् सर्वदा विजयो भवेत् ।

**विधानं यथा—**

अश्वचर्मासनं कृत्वा वीरासनमुपस्थितः ।
दक्षिणाभिमुखो भूत्वा घोरकर्म समारभेत् ।
हरिद्रामालया धृत्वा ह्यथवा वज्रमालया ।
अष्टद्रव्याष्टगन्धेन हरितालं च पेषयेत् ।
तण्डुलचूर्णमादाय विदध्यात् ह्यर्धरात्रके ।
यन्त्रं सम्पूज्य प्रथमं तत् तत् कर्म समाचरेत् ।
मारणं प्रथमं कर्म द्वितीयं स्तम्भनं भवेत् ।
गुरुभक्ताय दातव्यं, न दातव्यं कदाचन ।
गोप्यं गोप्यं पुनर्गोप्यं गोप्यं गोप्यं पुनः पुनः ।

**मारणप्रयोगे यथा—**

श्मशानमृत्तिकामादाय तदुपरि कुशासने स्थित्वा मन्त्रं जपेत् । एकविंशतिदिनेन षष्टिदिनेन वा लक्षमेकं जपेत् । प्रतिमाग्रे वा, श्मशाने वा, नदीतटे वा, एकान्ते वा, स्वगृहे वा दृढ़चित्तो भक्तिसहितो निर्भयं जपेत् । यथा—

ॐ नमो भगवति भक्षकरणे चतुर्भुजे पीताम्बरे ऊर्ध्वकेशे विकृतानने कालरात्रि मानुषाणां वसारुधिरभोजने अमुकस्य मृत्युपदे लं फट् हन हन दह दह मांसं रुधिरं पिव पिव पच पच हुं फट् स्वाहा ।

अमुं मन्त्रं जपेद् रात्रौ रोषचित्तो रिपुं स्मरन् ।
अर्धरात्रौ तु हस्ताभ्यां मार्जयेत् लिङ्गमस्तके ॥
भ्रष्टः स कथयेन् मन्त्रं तत्क्षणान् म्रियते रिपुः ।
दृष्टप्रत्यय एवायं सिद्धियोग उदाहृतः ॥

रात्रौ कृष्णचतुर्दश्याममुं प्रयोगं कुर्यात् ।

अथ बलिदानम्—

ॐ नमो ह्लीं अष्टभैरवाधिपतये सर्वकार्यप्रवृत्यर्थं सर्वशत्रुनिवृत्यर्थं वलि गृहाण गृहाण दीपं गृहाण गृहाण मे कार्यं कुरु कुरु वटुकाय ह्लीं फट् स्वाहा । सप्तवारं जपेत् ।

इति श्री अथर्ववेदोक्तबगलारहस्ये सावरतन्त्रे

पीताम्बराविधानं

सम्पूर्णम् ।

--:o:—

# श्रीपीताम्बरा–बगलामुखी--खड्गमालामन्त्रः

* श्रीगणेशाय नमः *

ॐ अस्य श्रीपीताम्बरा–बगलामुखी-खड्गमालामन्त्रस्य नारायण ऋषिः, त्रिष्टुप् छन्दः, बगलामुखी देवता, ह्लीं बीजं, स्वाहा शक्तिः, ॐ कीलकं, ममाभीष्टसिध्यर्थे जपे विनियोगः। नारायणऋषये नमः शिरसि, त्रिष्टुप्छन्दसे नमो मुखे, श्रीबगलामुखीदेवतायै नमः हृदये, ह्लीं बीजाय नमो गुह्ये; स्वाहा शक्तये नमः पादयोः, ॐ कीलकाय नमः सर्वाङ्गे। ॐ ह्लीं अङ्गुष्ठाभ्यां नमः, बगलामुखि तर्जनीभ्यां नमः, सर्वदुष्टानां मध्यमाभ्यां नमः, वाचं मुखं पदं स्तम्भय अनामिकाभ्यां नमः, जिह्वां कीलय कनिष्ठिकाभ्यां नमः, बुद्धिं विनाशय ह्लीं ॐ स्वाहा करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि।

## ध्यानम्

मध्येसुधाब्धि मणिमण्डितरत्नवेद्यां
सिंहासनोपरिगतां परिपीतवस्त्राम्।
भ्राम्यद्गदां करनिपीडितवैरिजिह्वां
पीताम्बरां कनकमाल्यवतीं नमामि।

मानसोपचारैः सम्पूज्य जपं कुर्यात्।

ॐ ह्लीं सर्वनिन्दकानां सर्वदुष्टानां वाचं स्तम्भय स्तम्भय बुद्धिं विनाशय विनाशय अपरबुद्धिं कुरु कुरु अपस्मारं कुरु कुरु आत्मविरोधिनां शिरो–ललाट–मुख–नेत्र–कर्ण–नासिका–दन्तोष्ठ–जिह्वा–तालु-कण्ठ–बाहूदर–कुक्षि – नाभि– पार्श्वद्वय – गुह्य – गुदाण्ड – त्रिक – जानु-पादसर्वाङ्गेषु पादादिकेशपर्यन्तं केशादिपादपर्यन्तं स्तम्भय स्तम्भय मारय मारय परमन्त्र-परयन्त्र–परतन्त्राणि छेदय छेदय आत्ममन्त्र-यन्त्र-तन्त्राणि रक्ष रक्ष सर्वग्रहान् निवारय निवारय सर्वम् अविधिं विनाशय विनाशय दुःखं हन हन दारिद्र्यं निवारय निवारय सर्वमन्त्रस्वरूपिणि

सर्वशल्ययोगस्वरूपिणि दुष्टग्रह–चण्डग्रह–भूतग्रहा–ऽऽकाशग्रह–चौरग्रह-पाषाणग्रह – चाण्डालग्रह – यक्षगन्धर्वकिनरग्रह – ब्रह्मराक्षसग्रह–भूत-प्रेत–पिशाचादीनां शाकिनी डाकिनी–ग्रहाणां पूर्वदिशं बन्धय बन्धय वाराहि बगलामुखि मां रक्ष रक्ष दक्षिणदिशं बन्धय बन्धय किरातवाराहि मां रक्ष रक्ष पश्चिमदिशं बन्धय बन्धय स्वप्नवाराहि मां रक्ष रक्ष उत्तरदिशं बन्धय बन्धय धूम्रवाराहि मां रक्ष रक्ष सर्वदिशो बन्धय बन्धय कुक्कुटवाराहि मां रक्ष रक्ष अधरदिशं बन्धय बन्धय परमेश्वरि मां रक्ष रक्ष सर्वरोगान् विनाशय विनाशय सर्वशत्रुपलायनाय सर्वशत्रुकुलं मूलतो नाशय नाशय शत्रूणां राज्यवश्यं स्त्रीवश्यं जनवश्यं दह दह पच पच सकललोकस्तम्भिनि शत्रून् स्तम्भय स्तम्भय स्तम्भनमोहनाऽऽकर्षणाय सर्वरिपूणाम् उच्चाटनं कुरु कुरु ॐ ह्लीं क्लीं ऐं वाक्प्रदानाय क्लीं जगत्त्रयवशीकरणाय सौः सर्वमनः क्षोभणाय श्रीं महासम्पत्प्रदानाय ग्लौं सकलभूमण्डलाधिपत्यप्रदानाय दां चिरंजीवने। ह्रां ह्रीं ह्रूं क्लां क्लीं क्लूं सौः ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय राजस्तम्भिनि क्रों क्रों छ्रीं छ्रीं सर्वजनसंमोहिनि सभास्तम्भिनि स्त्रां स्त्रीं सर्वमुखरञ्जिनि मुखं बन्धय बन्धय ज्वल ज्वल हंस हंस राजहंस प्रतिलोम इहलोक परलोक परद्वार राजद्वार क्लीं क्लूं घ्रीं रूं क्रों क्लीं खाणि खाणि। जिह्वां बन्धयामि सकलजनसर्वेन्द्रियाणि बन्धयामि नागाश्व–मृग-सर्प–विहङ्गम–वृश्चिकादि-महोग्रभूतजातं बन्धयामि बन्धयामि लक्ष्मीं प्रददामि प्रददामि त्वम् इह आगच्छ आगच्छ अत्रैव निवासं कुरु कुरु ॐ ह्लीं बगले परमेश्वरि हुं फट् स्वाहा।

मूलमन्त्रवता कुर्याद् विद्यां न दर्शयेत् क्वचित्।
विपत्तौ स्वप्नकाले च विद्यां स्तम्भिनीं दर्शयेत्।
गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः।
प्रकाशनात् सिद्धिहानिः स्याद् वश्यं मरणं भवेत्।
दद्यात् शान्ताय सत्याय कौलाचारपरायणः।
दुर्गाभक्ताय शैवाय मृत्युञ्जयरताय च।

तस्मै दद्याद् इमं खड्गं स शिवो नात्र संशयः ।
अशाक्ताय च नो दद्याद् दीक्षाहीनाय वै तथा ।
न दर्शयेद् इमं खड्गम् इत्याज्ञा शङ्करस्य च ।

इति श्रीविष्णुयामले बगलाखड्गमालामन्त्रः
समाप्तः ।

इति श्रीबगलारहस्ये पञ्चाङ्गप्रकरणाद्यात्मकः
द्वितीयो भागः समाप्तः ।

—:०:—

द्विसहस्रमिते वर्षे वैक्रमे सिंहगे रवौ ।
शुक्लपक्षे दिने चन्द्रे भाद्रे शिवतिथौ तथा ॥१॥
रहस्यं बगलामुख्याः कृत्वा तस्यै समर्पितम् ।
तुष्यतां परया प्रीत्या तेनाम्बा बगलामुखी ।

—:०:—

इति श्रीसर्वतन्त्रस्वतन्त्रैः निगमागमतन्त्रपारीणैः परमहंसपरिव्राजकाचार्यैः
श्रीपीताम्बरापीठाधीश्वरैः श्री १०८ श्री स्वामिभिः विरचितम्
श्रीबगलामुखी रहस्यम्
समाप्तम् ।

# ❀ निग्रह-दारुण-सप्तकम् ❀

सर्वतन्त्रस्वतन्त्रैः निगमागमतन्त्रपारीणैः परमहंसपरिव्राजकाचार्यैः

श्रीपीताम्बरापीठाधीश्वरैः श्री १०८ श्रीस्वामिभिः

विरचितेन भाष्येण समलङ्कृतम्

तान्त्रिकैर्दारुणमारणकर्मणि विनियुक्तम् इदं निग्रहदारुण-सप्तकं नाम दिव्यं स्तोत्रं दिव्याचारपरत्वेन व्याख्याय श्रीमद्भिः तन्त्रागमरहस्यविज्ञैः पदवाक्यप्रमाणपारीणैः परमहंस-परिव्राजकाचार्यैः सर्वतन्त्रस्वतन्त्रैः श्रीपीताम्बरापीठाधीश्वरैः श्री १०८ श्रीस्वामिभिः साधकवर्गस्य कियानुपकारः कृत इति वक्तुमसमर्थेयं मे भारती। अत्र हि शत्रुपदेन कामक्रोधादीनां वास्तविकशत्रूणाम् एव ग्रहणम्, यतः सति तेषां निग्रहे, अजातशत्रुत्वं जायते। अतः सुगममिमं सभाष्यं निग्रहदारुण-सप्तकम् अनुतिष्ठन्तः साधकाः समृद्धिमहतीं सिद्धिम्, अर्थगाम्भीर्यं विवेचयन्तो विद्वांसः सहृदयाश्च ब्रह्मानन्दसहोदरां मधुमतीं भूमिकां च अधिगमिष्यन्तीति मे दृढो विश्वासः।

# सभाष्यम्

# निग्रह-दारुण-सप्तकम्

श्रीगणेशाय नमः

## भाष्यम्—

'यतो वा इमानि भूतानि जायन्ते इत्यादि श्रुत्या उत्पत्तिस्थितिसंहारा ह्मण एव धर्माः श्रूयन्ते । उत्पत्तिम् आश्रित्य कर्मकाण्डप्रवृत्तिः, स्थितिम् प्राश्रित्य उपासनामार्गो भक्तिमार्गो वा, संहारम् आश्रित्य ज्ञानकाण्ड इति च त्रिदेवनिर्णये व्याख्यातम् । इदम् एव आश्रित्य तस्य च ब्रह्मविष्णुरुद्रादि- संज्ञा च क्रमेण भवति । अत्र च दारुणसप्तकनामनि-निग्रहदारुणसप्तकम् इति च पूर्णनाम्नि स्तोत्रे संहारार्थकं भगवच्छिवपरं तत्त्वं निर्णीतम्, तच्च ज्ञानमार्गप्रधानं योगसाधनकम्, ज्ञानम् अग्नित्वेन च स्वीकृतं, गीतायां यथा—'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ।' अविद्यारूपध्वान्तावस्थायां कामक्रोधलोभात्मकान्येव 'सर्वकर्माणि' कार्यकारणभावमाश्रित्योक्तानि । प्रतिकूलकारित्वेन च यथा इम एव शत्रुपदवाच्या उच्यन्ते, तथाऽन्तिमे पद्ये दर्शयिष्यामः । एतेषामेव मारणार्थं पलायनार्थं वा स्तोत्रविनियोगः । नच शत्रुपदेनाऽत्र लौकिकशत्रूणां ग्रहणमिति वाच्यं चतुर्थश्लोकविपरीतत्वात् । 'नमस्ते रुद्र मन्यवे' इति भाष्ये अग्निरूपेण रुद्रः स्तुतः । ऋग्वेदे अग्ने रुद्रत्वमतिविशदम् । अत एव संहारभावसिद्धिः । मन्योराग्नेयभावस्य प्रसिद्धत्वम् ।

## मूलम्—

**ध्यानम्—**

चन्द्रार्काग्निस्त्रिदृष्टिः कुलिशवरनखश्चञ्चलोऽत्युग्रजिह्वः
काली दुर्गा च पक्षौ हृदयजठरगो भैरवो वाडवाग्निः।
ऊरूस्थौ व्याधिमृत्यू शरभवरखगश्चण्डवातातिवेगः
संहर्ता सर्वशत्रून् स जयति शरभः शालुवः पक्षिराजः॥

## भाष्यम्—

चन्द्रार्काग्निः त्रिदृष्टिः विधुसूर्याग्निनेत्रवान् विराट्रूपी भगवान्। कुलिशवरनखः वज्रसदृशनखः, इत्यनेन भोगसम्पादने क्षमत्वं सूचितम्। चञ्चलः प्रतिक्षणं क्रियाशीलः। अत्युग्रजिह्वः अत्युग्राः प्रचण्डाः सप्त जिह्वा यस्याऽसौ, कर्मिणां फलप्रदानसाधनत्वेन मुण्डके प्रसिद्धाः। काली दुर्गा च पक्षौ। काली कालस्य सर्ववस्तुनियामिका शक्तिः। दुर्गा दुःखेन गन्तुं योग्या सर्वदेवमयी परा शक्तिः। 'श्रीश्च ते लक्ष्मीश्च' 'अहोरात्रे पार्श्वे' इतिवत् पक्षौ। इमे द्वे शक्ती भगवतः पक्षस्थानीये जगद्रूपकार्यकरणे आश्रयभूते। हृदयजठरगः हृदयगतं जठरं वैश्वानरं गच्छतीति हृदयस्थानीयो वैश्वानररूपः वाडवाग्निः, जलेऽपि तस्य ज्वलनस्वभावः, सर्वदा विद्यमानत्वात्। भैरवो नित्योद्यमशीलः। 'उद्यमो भैरव' इत्युक्तत्वात् शैवसूत्रे। ऊरूस्थौ व्याधिमृत्यू व्याधिश्च मृत्युश्च तौ पापिनां कृते कामक्रोधरतानां मूढानां कृते आवश्यकत्वात्। शरभवरखगः शृणातीति शरभः मूलाज्ञाननिवर्तकः स चासौ वरश्च। खगः खे गच्छतीति आकाशवद् व्यापनशीलः, खं बीजं, तेन गम्यते लक्ष्यते इति वा खगः। खं बीजं भगवतः शरभस्य प्रसिद्धम्। चण्डवाताऽतिवेगः चण्डवायुरिव अतिवेगः भक्तानां रक्षणे शीघ्रगामी सर्वातिशायित्वात्। 'तदेजदिति' मन्त्रानुसारं सर्वशत्रून् कामक्रोधादीन् संहरतीति संहर्ता विनाशकः। पक्षिराजः पक्षिणां जीवानां राजा पक्षिराजः समासान्तः टच्। 'वैनतेयश्च पक्षिणाम्' इत्युक्तत्वात्। शालुवः शालते शोभते इति शालुवः।

उणादित्वात् साधुः । सर्वशोभासम्पन्नः । कचिद् दन्त्यादिः । सार दौर्बल्ये 'रलयोर्न भेदः' इत्यनेन निष्पत्तिः । सारयति शत्रूणां दौर्बल्यं सम्पादयतीति सालुवः । षल् गतावित्यनेन वा । चण्डवातातिवेग इत्यनेन गतिशीलत्वस्य प्रतिपादनाच्च । कचित् साल्व इत्यपि पाठो दृश्यते । शरभः जयति सर्वोत्कर्षेण वर्ततेतराम् इत्यर्थः ।

आध्यात्मतत्त्वसाक्षात्कारलब्धये कामस्य प्रधानं शत्रुत्वमभिलक्ष्य स्तोतुमुपक्रमन्नाह कोपोद्रेकेति । यतः रुद्ररूपिणः शिवस्यैव कामदाहे प्रसिद्धिः । समाधिविघ्नविधायिनं काममेवाह हन्तुं भगवान् श्रीकृष्णः– 'जहि शत्रुं महाबाहो कामरूपं दुरासदम्' इति ।

मूलम्—

कोपोद्रेकातिनिर्यन्–निखिलपरिचरत्–ताम्रभारप्रभूतं
ज्वालामालाग्रदग्धस्मरतनुसकलं त्वामहं शालुवेश ।
याचे त्वत्पादपद्मप्रणिहितमनसं द्वेष्टि मां यः क्रियाभिः
तस्य प्राणप्रयाणं परशिव भवतः शूलभिन्नस्य तूर्णम् ।

भाष्यम्—

कोपस्य क्रोधात्मकाग्नेयरूपस्य उद्रेकः बृद्धिः तया अतिनिर्यत् निर्गच्छत् । निखिलेषु कामजन्यपदार्थेषु परिचरत् परितः प्रसरणं कुर्वत् । ताम्रभारवत् प्रभूतं रक्तवर्णवद् राशिभूतम् आग्नेयस्य रक्तवर्णत्वात् । ज्वालामालाग्रदग्धम् ज्वालाया माला अग्निरूपस्य ज्ञानस्य माला अविच्छिन्नप्रवाहरूपा वृत्तिर्गृह्यते । तदग्रेण प्रधानेन दग्धं भस्मीकृतं स्मरतनुसकलं कामशरीरसाकल्यं येन तं दग्धकामदेहं त्वाम्, हे शालुवेश अहं याचे प्रार्थये । यथा त्वमकार्षीः तथाऽहमपि कुर्यामिति भावनया त्वत्पादपद्मप्रणिहितमनसं त्वच्चरणारविन्दार्पितचित्तं मां यः कामः क्रियाभिः स्वव्यापारैः द्वेष्टि अप्रीतिं जनयति । परशिव भवतः तव

शूलभिन्नस्य शूलेन भिन्नस्य त्रिविधतापद्वैधीभावमापन्नस्य तस्य कामस्य प्राणप्रयाणं विनाशं तूर्णं शीघ्रं याचे इति पूर्वेण संबन्धः ॥१॥

सर्वाऽनर्थस्य काममूलकत्वात् तन्निवृत्तौ सामर्थ्यविशेषमाह शम्भो इति—

मूलम्—

शम्भो त्वद्धस्तकुन्तक्षतरिपुहृदयान्निःस्रवल्लोहितौघं
पीत्वा पीत्वाऽतिदीर्घा दिशि दिशि विचरास्त्वद्गणाश्चण्डमुख्याः ।
गर्जन्तु क्षिप्रवेगा निखिलजयकरा भीकराः खेललोलाः
संत्रस्ताब्रह्मदेवाः शरभ खगपते त्राहि नः शालुवेश ॥२॥

भाष्यम्—

शं कल्याणं भावयतीति शम्भुः शिवः सम्बोधने शम्भो । त्वद्हस्ते धृतः कुन्तः । कुं पृथिवीतत्त्वमुनत्तीति । उन्दी क्लेदने बाहुलकात् तः शकन्ध्वादिः । तस्मात् क्षतं विदीर्णं यद् रिपुहृदयं तस्मात् निःस्रवन्तं निस्सरन्तं लोहितौघं रक्तप्रवाहं षट्चक्रभेदमापाद्य रक्तवर्णममृतप्रवाहं पीत्वा पीत्वा मुहुर्मुहुः पानं विधाय अतिदीर्घा वलिष्ठाः अमृतस्य रक्तवर्णत्वात् । पादुकापञ्चके स्वीकृतमेतत् । त्वद्गणाश्चण्डमुख्याः चण्डभावप्रधाना दश प्राणाः । 'सहचराः प्राणाः' इति भगवत्पादाचार्याः । दिशि दिशि विचराः सर्वत्र गतिमन्तः क्षिप्रवेगाः प्रसरणशीलाः प्राणनिरोधे श्रमराहित्यम् अनेन गम्यते । अत एव निखिलजयकराः निखिलेषु इन्द्रियगणेषु जयकराः विजयप्रदाः । भीकराः भियं कुर्वन्तीति, कामगणानां त्रासकारिणः । खेललोलाः खेलेन लोलाः श्वासप्रश्वासक्रियया चञ्चलाः । सन्त्रस्ताब्रह्मदेवाः सन्त्रस्ता आब्रह्मदेवा बुद्धीन्द्रियाणि यैस्ते योगिनः गर्जन्तु विजयिनो भवन्तु । प्रश्नोपनिषद्युक्तप्राणकथाऽनुसर्तव्या । हे शरभ खगपते शालुवेश नः अस्मान् त्राहि रक्ष । कामस्याऽनङ्गत्वादपि अङ्गारोपवत् कथनं सुलभेन बोधाय । यथा मनुः—नीरूपस्याऽपि दण्डस्य रूपम् ।

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति ॥
अ० ७३५।२०

सर्वव्यापित्वगुणैः स्तुवन् स्वाभिलषितमाह सर्वाद्यमिति ।

मूलम्—

सर्वाद्यं सर्वनिष्ठं सकलभयकरं त्वत्स्वरूपं हिरण्यं
याचेऽहं त्वाममोघं परिकरसहितं द्वेष्टि मां यः क्रियाभिः ।
श्रीशम्भो त्वत्कराब्जस्थितकुलिशकराघातवक्षःस्थलस्य
प्राणाः प्रेतेशदूत ग्रहगणपरिखाः क्रोशपूर्वं प्रयान्तु ॥३॥

भाष्यम्—

हे प्रेतेशदूत, प्रेतेशो भगवान् शिवः तस्य दूतः वार्ताहरः प्रापकः सम्बोधने रूपमिदम् । गुरुरूपेण तत्तत्तत्त्वोपदेष्टा । सर्वाद्यं सर्वप्रमुखं सर्वनिष्ठं सर्वस्मिन् नितरां तिष्ठतीति सर्वव्यापी । कलया सहितं सकलं भयकरं पापिनां त्वत्स्वरूपं कम्पनाद् इत्यधिकरणोक्तम् । महद् भयमुद्यत-मित्यादि । हिरण्यं हिरण्यवर्णं परिकरसहितं सर्वसाध्यसाधनैकनीडम् अमोघं सफलं सत्यस्वरूपम् । श्रीशम्भो श्रिया सहितः शम्भुः सम्बोधने श्रीशम्भो । यः कामः क्रोधो लोभो वा क्रियाभिः स्वस्वव्यापारैः मां द्वेष्टि प्रीत्यभावमुत्पादयति । अतः अहं त्वां भवन्तं याचे प्रार्थये यत् त्वत्कराब्जस्थितेन कुलिशेन शासनात्मकदण्डभूतेन कराघातेन वक्षःस्थले हृदये यस्य तस्य प्राणाः प्रकर्षेण चेष्टन्ते इति प्राणव्यापाराः ग्रहगणपरिखा ग्रहगणेन स्वानुकूलग्रहैः रक्षिता अपि क्रोशपूर्वं प्रयान्तु दूरीभवन्तु । ते स्वव्यापारकरणे निष्फलाः सन्तु इत्यभिप्रायः ॥३॥

'यो मां द्वेष्टि यं च वयं द्विष्मः' 'शरभं ते शुगृच्छन्तु यं द्विष्मस्तं ते शुगृच्छन्तु (य० १३) इति मन्त्राभ्यां यदुक्तं, तत् कथयति द्विष्म इति ।

मूलम्—

द्विष्मः क्षोण्यां वयं हि तव पदकमलध्याननिर्धूतपापाः
कृत्याकृत्यैर्विमुक्ता विहगकुलपते खेलया बद्धमूर्ते ।
तूर्णं त्वत्पादपद्मप्रधृतपरशुना तुण्डखण्डीकृताङ्गः
सद्द्वेषी यातु याम्यं पुरमतिकलुषं कालपाशाग्रबद्धः ॥४॥

भाष्यम्—

द्विष्मः अप्रीतिं कुर्मः संसारविषयं वैराग्यार्थम् । हे विहगकुलपते पक्षिराज, खेलया लीलया बद्धमूर्ते गृहीतविग्रह, क्षोण्यां पृथिव्यां हि निश्चयेन तव पदकमलध्याननिर्धूतपापाः तव पदकमलध्यानेन चिन्तनेन निर्धूतपापाः सर्वदोषरहिताः शुद्धाः । 'योगिनः कर्म कुर्वन्ति—आत्मशुद्धये' इति गीता । कृत्याकृत्यैर्विमुक्ताः कृत्यायाः कृत्यानि मारणोच्चाटनादीनि कर्माणि तैर्विमुक्ता रहिताः सन्तः । एतेन मारणोच्चाटनादिषु अयं स्तवो विनियुज्यते इत्यज्ञानमूलकमेव सिध्यति तद्राहित्यविधानात् प्रमाणाभावाच्च । अथ च कृत्याकृत्यैर्विमुक्ता इत्यनेन कृत्यानि विधिज्ञाप्य-कर्माणि अकृत्यानि निषेधकर्माणि तैर्विमुक्ता इत्यर्थो गृह्यते चेत् तर्हि सर्वथा कर्ममार्गप्रतिषेधेन ज्ञानमार्गस्य सिद्धिः । एवं सति मारणादिकृत्यस्य कथा दूरादेवाऽपास्ता वेदितव्या भवति । अत एव शत्रुपदेन लौकिकशत्रु-ग्रहणं सर्वथा विप्रतिषिद्धमेव । मारणाद्यर्थे कृती छेदने तथा कर्माद्यर्थे डुकृञ् करणे च इत्युभयेषां प्रयोगः । आंग्लमराठीकोषे कृत्यापदमेवं व्याख्यातम्—

कृत्या a female diety to whom sacrifices are offered for destruction of magical purposes.

कृत्याकृत्य right and wrong doings, proper and improper actions. ( Page 107 )

वयं तव भक्ता विमुक्ता भवाम इति संबन्धः। आत्मशुद्धस्य मुक्तावधिकारात्। त्वत्पादपद्मप्रधृतपरशुना अज्ञानिनां कृते परशुरूपत्वात् तेषां छेदने समर्थत्वादित्यर्थः। तुण्डखण्डीकृताङ्गः तुण्डेन खण्डीकृताङ्गः। 'प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया। ध्वस्तमुखो विदग्धशाकल्यवत्। सद्द्वेषी विषयादिषु प्रवृत्तत्वात् दृढाहङ्कारत्वाच्च। अत एव अतिकलुषं मलिनं कालपाशाग्रबद्धः कालस्य यमस्य पाशः 'विततो मृत्युपाशः' इति श्रुतेः। तस्याग्रेण बद्धः सन् याम्यं पुरं यातु यातुमिच्छतीत्यर्थः। 'इच्छार्थेभ्यो विभाषा वर्तमाने' पा० ३।३।१६०। 'पुनः पुनर्वशमापद्यते मे' इति श्रुतेः। परमात्मज्ञानरहितस्य संसारे पच्यमानत्वं श्रुतिप्रसिद्धमिति परमार्थः ॥४॥

रागद्वेषादिकामवर्गस्य निवृत्तिमाह भीम इति।

मूलम्—

भीम श्रीशालुवेश प्रणतभयहर प्राणजिद् दुर्मदानां
याचेऽहं चास्य वर्गप्रशमनमिह ते स्वेच्छया बद्धमूर्ते।
त्वामेवाशु त्वदङ्घ्र्यष्टकनखविलसद्ग्रीवजिह्वोदरस्य
प्राणा यान्तु प्रयाणं प्रकटितहृदयस्यायुरल्पायतेश ॥५॥

भाष्यम्—

हे प्रणतभयहर शरणागतरक्षक श्रीशालुवेश, हे अल्पायतेश दीनरक्षक, दुर्मदानां राक्षसानां प्राणजिद् नाशकः अत एव भीमः। इह संसारे स्वेच्छया बद्धमूर्ते स्वेच्छया गृहीतदेह, कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात्। अस्य रागद्वेषादिकामवर्गस्य प्रशमनम्, अस्य संसारस्य वा इदमासंनिधापित्वात् वर्गप्रशमनं निवृत्तिं ते तव शकाशात् अहं त्वामेवाशु शीघ्रं याचे द्विकर्मकत्वात्। प्रकटितहृदयस्य सवृत्तिकस्य प्रकटितबहिर्भावस्य त्वदङ्घ्र्यष्टकनखैः विदलद्ग्रीवजिह्वोदरस्य तव चरणाष्टकैः अष्टभैरवैः नष्टसामर्थ्यस्य द्वेषवर्गस्य संसारस्य आयुः जीवनकालः प्राणाः सामर्थ्यं

प्रयाणं यान्तु स्वरूपे विलीनतां गच्छन्तु इत्यर्थः रागद्वेषमयसंसारस्य निवृत्तौ सत्यां सम्यक् तत्त्वज्ञानं भवतीति भावः ॥५॥

यज्ञरूपकेणाऽऽह श्रीशूलमिति—

मूलम्—

श्रीशूलं ते कराग्रस्थितमुसलगदावृत्तवात्याभिघातात्
यातायातारियूथं त्रिदशविघटनोद्धूतरक्तच्छटार्द्रम् ।
सद् दृष्ट्वाऽऽयोधने ज्यामखिलसुरगणाश्चाशु नन्दन्तु नाना-
भूता वेतालपूगः पिवतु तदखिलं प्रीतचित्तः प्रमत्तः ॥६॥

भाष्यम्—

हे शरभ खगपते ते तव कराग्रस्थितमुसलगदावृत्तवात्या तव कराग्रस्थिते मुसलगदे सामर्थ्यविशेषे तयोर्वृत्तेन भ्रमणजातचक्राकारेण वात्या वातसमूहरूपेण अतिवेगसामर्थ्येन अभिघाताद् यातायातारियूथं चराचरारिमण्डलं त्रिदशानां देवानाम् इन्द्रियाणामित्यर्थः । विघटनम् अस्वास्थ्यीकरणम्, तेन उद्धूतोद्रिक्तं रक्तच्छटार्द्रं रुधिरधारया कर्दमीभूतं रक्तान्यधातुभिः मिश्रीकरणं सद् आयोधनेज्यां युद्धरूपं यज्ञम् युद्धमायोधनं जन्यमित्यमरः । अखिलसुरगणा इन्द्रियाधिदेवा भूताश्च प्राणिनः पञ्चभूतानि च । लिङ्गव्यत्यय आर्षत्वात् । दृष्ट्वा नन्दन्तु प्रसन्ना भवन्तु उभयेषां हितत्वात् प्रीतचित्तः प्रसन्नो बेतालपूगः प्राणविशेषसमुदायः तदखिलं पिवतु । बेतालपूगस्य आग्नेयभावविशेषत्वात् समुचितमेव युद्धक्षेत्रं यज्ञं कृत्वा निर्दिष्टवान् । अनेन आध्यात्मिक एव यज्ञोऽत्राभिप्रेतः देवासुरभावयोर्विरुद्धत्वेन प्रतिक्षणं युद्धकारित्वेन च प्रसिद्धत्वात् । त्रिदशविघटनमिहेन्द्रियाणां वैचित्यरूपं, मुसलगदारूपं सामर्थ्यविशेषं, वृत्तवात्येति प्राणानां वृत्याकारेण प्रवर्तनमिहेति ग्राह्यम् ॥६॥

साधकः साधनालब्धं सामर्थ्यमवाप्य हर्षितो गर्जितः सन् प्राहाऽल्पमिति—

मूलम्—

अल्पं दोर्दण्डबाहुप्रकटितविनमच्चण्डकोदण्डमुक्तै—
र्वाणैर्दिव्यैरनेकैः शिथिलितवपुषः क्षीणकोलाहलस्य ।
तस्य प्राणावसानं पर शरभ विभोऽहं त्वदिज्याप्रभावैः
तूर्णं पश्यामि यो मां परिहसति सदा त्वादिमध्यान्तहेतो ॥७॥

भाष्यम्—

हे पर शरभ विभो आदिमध्यान्तहेतो उत्पत्तिस्थितिसंहारकारण त्वदिज्याप्रभावैः तव सङ्गतीकरणरूपैः प्रभावैः तूर्णं शीघ्रं पश्यामि । यस्तु सदा मां परिहसति इन्द्रियगणः, त्वत्कृपया वशीभूते तस्मिन्, परिहासः कीदृश इति पश्यामि इति साभिमानोक्तिः । उक्तं च तुलसीदासेन—

'परवश देखि हँस्यौ इन इन्द्रिन स्ववश होय न हँसैहौं ।'

अल्पं निम्नं दोर्दण्डो भुजदण्डश्चासौ बाहुश्च तेन प्रकटितो विनमच्चण्डकोदण्डः प्रहरणसामर्थ्यविशेषः । 'प्रणबोधनः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते', इति श्रुतिः । तेन मुक्तैरनेकैः दिव्यैः साधनरूपसामर्थ्यैः शिथिलितवपुषः क्षीणकोलाहलस्य क्षीणशरीरस्य कार्श्यमापन्नस्य विक्षेपरहितस्य तस्य इन्द्रियगणस्य प्राणावसानं सामर्थ्यसमाप्तिं पश्यामीति पूर्वेण सम्बन्धः ॥७॥

सप्तकसाधने विशेषनियमानाहेति ।

मूलम्—

इति निशि प्रयतस्तु निरासनो यममुखः शिवभावमनुस्मरन् ।
प्रतिदिनं दशवार–दिनत्रयं जपति निग्रहदारुणसप्तकम् ॥८॥

भाष्यम्—

इति पूर्वोक्तक्रमेण प्रयतः संयतः सन् । तु अवधारणे अर्थात् प्रयत एवात्र विनियुज्यते । निरासनः आस्यते अस्मिन्निति आसनं शय्या,

तन्निर्गतः जितनिद्र इत्यर्थः। यममुखः यमनियमप्रधानः यमनियमयोर्यो— गाङ्गत्वात्। यमपदेन उभयोर्ग्रहणम् प्रयत इति वचनात्। निशि रात्रौ 'या निशा सर्वभूताना' मिति गीतावचनात्। शिवभावं कल्याणभावनात्मकं परमात्मानं शिवं शरभमनुस्मरन् मुहुर्मुहुः आवर्तयन् प्रतिदिनं प्रत्यहं दशवारं दशवृत्यात्मकं तद्युक्तं दिनानां सप्तानां त्रयम् एकविंशतिदिनपर्यन्त- मित्यर्थः। निग्रहदारुणसप्तकं निग्रहकारकं दारुणसप्तकं सप्तश्लोकात्मकम्, मध्यमपदलोपित्वात्। 'मनो दुर्निग्रहं परम्'। दारुणं भीष्मं भयानकम् इन्द्रियाणां निग्रहे दारुणसप्तकम्। इन्द्रियाणां प्रमथनशीलत्वात्। 'इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः' इति प्रमाणात्। अत एव दशवारेति ग्रहणम्। ननु मनसोऽपीन्द्रियत्वात् कथं दशवारेति चेन्न मनसो निरुद्धत्वात्, इन्द्रियस्य 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इति पृथङ् निर्देशात्। एकविंशतिदुःखध्वंसो मोक्ष इति न्यायविदां समयः, तस्मादेकविंशतिग्रहणम् ॥८॥

मूलम्—

इति गुह्यं महाबीजं परमं रिपुनाशनम्।
भानुवारं समारभ्य मङ्गलान्तं जपेत् सुधीः ॥९॥

## इति श्रीआकाशभैरवकल्पे प्रत्यक्षसिद्धिप्रदे नरसिंहकृता शरभस्तुतिः समाप्ता।

—:०:—

भाष्यम्—

इति गुह्यं गुहायां भवं महाबीजं कारणं सर्वेषां स्तोत्राणां परमं श्रेष्ठं रिपुनाशनं कामक्रोधनिवारकम् 'जहि शत्रुं महाबाहो कामरूपं दुरासदम्', 'जहि शत्रुं रपमृधो नुदस्वाभयं कृणुहि विश्वतो नः।' ('काण्व० सं० ७-३८) 'शत्रूणां ग्रीवाः कृन्तामि' (का० सं०)

'काम एष क्रोध एष रजोगुणसमुद्भवः।
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत्।

भानुवारं द्वादशवारं द्वादशधा विभक्तम् ज्योतिर्मयरूपेण इति हेतोर्द्वादशग्रहणम्। समारभ्य मङ्गलान्तं ब्रह्मप्राप्तिपर्यन्तम्। (मङ्गलं श्रेयसि श्वेत इति विश्वः। 'स्वरूपप्रान्तयोरन्तमन्तिकेऽपि प्रयुज्यते' इति शाश्वतः। 'कल्याणं मङ्गलं शिवम्'—इत्यमरः।) जपेत् स्मरेत्। सुधीः सुष्ठु धीर्यस्यासौ सुधीः। 'सन् सुधीः कोविदो बुधः' इत्यमरः। सुधीः ब्रह्मवित् 'एतद् बुद्ध्वा बुद्धिमान् स्यात्' इति गीता। इत्यनेन मारणादिषु एतत्स्तोत्रपाठकः प्रवर्तते इति कुधियां कथनं परास्तं वेदितव्यम्। प्रथमं पद्यं मनोनिग्रहात्मकम् इन्द्रियनिग्रहात्मकं च द्वितीयं ब्रह्मप्राप्तिफल-प्रदर्शनार्थमिति स्तोत्रप्रतिपाद्यक्रमः प्रदर्शितः श्लोकद्वयेनेति ॥९॥

—:o:—

इति श्रीसर्वतन्त्रस्वतन्त्रैः निगमागमतन्त्रपारीणैः परमहंसपरिव्राजकाचार्यैः

श्रीपीताम्बरापीठाधीश्वरैः श्री १०८ श्रीस्वामिभिः

प्रणीतं दारुणसप्तकभाष्यम्

समाप्तम्

श्रीपीताम्बरापीठ दतिया (म० प्र०)

चैत्रकृष्णाष्टम्याम् संवत् २००५।

—:o:—

# श्रीपीताम्बरार्चन-पद्धतिः

सर्वतन्त्रस्वतन्त्रैः निगमागमतन्त्रपारीणैः
परमहंसपरिव्राजकाचार्यैः श्रीपीताम्बरापीठाधीश्वरैः
श्री १०८ श्रीस्वामिभिः
विरचिता

# निवेदनम्

दृशा द्राधीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनाऽयं धन्यो भवति नच ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥१॥

# श्रीपीताम्बरार्चन-पद्धतिः

गुं गुरुभ्यो नमः ।। श्रीगणेशाय नमः ।। श्रीपीताम्बरायै नमः ।

श्रीमान् साधकेन्द्रः ब्राह्मे मुहूर्ते उत्थाय, प्रातःकृत्यं विधाय, शौचमुखमार्जनादि कृत्वा, शुद्धे वाससी परिधाय, शुभासने प्राङ्मुख उदङ्मुखो वा उपविश्य, मूलेनाचम्य, प्राणानायम्य, वामे हस्ते विभूर्ति गृहीत्वा, जलेन मिश्रितां कृत्वा—

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय मामृतात् ।।

इति मन्त्रेणाभिमन्त्र्य, 'त्र्यायुषं' इति ललाटादिस्थानेषु धारयित्वा, रुद्राक्षमालां धारयेत् ।

ॐ ह्लीं आत्मतत्त्वाय स्वाहा, ॐ ह्लीं विद्यातत्त्वाय स्वाहा ।
ॐ ह्लीं शिवतत्त्वाय स्वाहा, ॐ ह्लीं सर्वतत्त्वाय स्वाहा ।

मूलेन शिखां बध्वा, मूलेन त्रिःप्राणानायम्य, हस्ते जलं गृहीत्वा अद्येत्यादि ममाशेषदुरितक्षयपूर्वकमभीष्टफलप्राप्त्यर्थं श्रीपीताम्बराप्रीतये प्रातः (सायं) सन्ध्यां करिष्ये । ऋष्यादिकरषडङ्गन्यासं कृत्वा, दक्षिणकरे जलमादाय, वामेनाच्छाद्य, मूलेन सप्तवारमभिमन्त्र्य, तज्जलं वामहस्ते गृहीत्वा, दक्षिणहस्ततत्त्वमुद्रया मूलमन्त्रसहितसविन्दुनमोन्तैः मातृकाक्षरैः स्वशिरसि प्रोक्षयेत् । अवशिष्टजलं मूलेन त्रिवारमभिमन्त्र्य, दक्षकरे निधाय, मूलमुच्चरन् वामतत्त्वमुद्रया शिरसि त्रिः प्रोक्षयेत् । तेजोरूपं तज्जलं इडयाऽऽकृष्य, स्वदेहान्तस्थसकलकल्मषक्षालनेन कृष्णतामापन्नं विभाव्य, स्ववामभागे कल्पितवज्रशिलायां "ॐ श्लीं पशु हुं फट्" इति पाशुपतास्त्रमन्त्रेण भूमौ आस्फालयेत् । हस्तौ प्रक्षाल्य, आचम्य, पुनर्जलं दक्षहस्ते गृहीत्वा, तत्त्वमुद्रया "अमृतमालिनी स्वाहा" इति त्रिः शिरसि प्रोक्षयेत् । पूर्ववदाचम्य, सूर्यमण्डले यथोक्तरूपां देवीं ध्यात्वा, अर्घ्यपात्रे फलपुष्पगन्धाक्षतैः सह जलं गृहीत्वा, उत्थाय—

ॐ ह्लीं बगलामुखीं विद्महे दुष्टस्तम्भनीं धीमहि ।
तन्नः शक्तिः प्रचोदयात् ।

उद्यदादित्यवर्तिन्यै, शिवचैतन्यमय्यै श्रीबगलामुख्यै इदमर्घ्यं स्वाहा । इति अर्घ्यत्रयं दत्त्वा, उपविश्य, आचम्य, प्रणवादिमूलमन्त्रबीजेन षडङ्गं विधाय, देवीं ध्यात्वा, गायत्रीं यथाशक्ति प्रजप्य—

"गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान् महेश्वरि ।।

एवं सन्ध्यां विधाय योन्या प्रणमेत् । ततः शुद्धजलेन—

ॐ ह्लीं हं सः मार्तण्डभैरवाय प्रकाशशक्तिसहिताय श्रीसूर्याय इदमर्घ्यं गृह्ण गृह्ण स्वाहा ।

इति अर्घ्यत्रयं दद्यात् । शुद्धजले तीर्थमावाह्य, 'वं' इति धेन्वाऽमृतीकृत्य, मूलेन अष्टवारमभिमन्त्र्य, तत्र श्रीचक्रं विभाव्य स्वहृदयात्, 'सपरिवारां सायुधां श्रीबगलामुखीं तर्पयामि नमः' इति दशधा सन्तर्प्य 'ॐ ऐं ह्लीं श्रीं' श्रीगुरुपादुकामन्त्रमुच्चार्य स्वगुरुश्री अमुकानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः', एवं परं गुरुं परमेष्ठिगुरुं च तर्पयेत् । ततः दिव्यौघ–सिद्धौघ–मानवौघ–श्रीपादुकां पूजयामि तर्पयामि नमः । ततः तीर्थं विसृज्य अनेन तर्पणाख्येन कर्मणा श्रीपीताम्बरा प्रीयताम् ।

इति तर्पणम् ।

## अथ पूजाविधिः—

पूजागृहद्वारदेशं गत्वा 'ॐ ऐं ह्लीं श्रीं द्वाराधिष्ठितगणेशादिदेवताभ्यो नमः' इति सम्पूज्य, आत्मानं तेजोरूपं ध्यात्वा, द्वारदेवताज्ञां गृहीत्वा, वामाङ्गसङ्कोचेन दक्षिणपादपुरःसरं गृहान्तः प्रविश्य—

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशः ।
सर्वेषामविरोधेन पूजाकर्म समारभे ।।

इति पठित्वा 'हुं फट् स्वाहा' इति भूतानि निःसारयेत्। पूजागृहे भिर्मन्त्रैस्तिलसर्षपाक्षतान् विकिरेत्। नैर्ऋत्यकोणे—वास्तुपुरुषाय नमः। शाने त्रिकोणं कृत्वा, तत्र साधारं दीपं संस्थाप्य, 'ॐ रक्तवर्णद्वादश-क्तिसहिताय दीपनाथाय नमः' इति सम्पूज्य प्रार्थयेत्।

"भो दीप देवीरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत्।
यावत् कर्मसमाप्तिः स्यात् तावत् त्वं सुस्थिरो भव॥"

इति नत्वा, 'वेदिकायै नमः' इति गन्धपुष्पैः पीठं सम्पूज्य, "ॐ जय ध्वनिमन्त्रमातः स्वाहा।" इति घण्टां वादयेत्। भैरवाज्ञां प्रार्थयेत्।

"तीक्ष्णदन्त महाकाय कल्पान्तदहनोपम।
भैरवाय नमस्तुभ्यम् अनुज्ञां दातुमर्हसि॥"

ततः आसनं संशोधयेत्। 'ॐ रक्ष रक्ष हुं फट् स्वाहा', इति मन्त्रेण भूमिं सम्प्रोक्ष्य, आसनाऽधः त्रिकोणमण्डलं कृत्वा, तत्र मायाबीजं विलिख्य, "ॐ ह्रीं आधारशक्त्यै नमः" इति सम्पूज्य, अस्त्रेण संरक्ष्य, तत्रासनमास्तीर्य, आसनात् त्रिकोणे—"गं गणपतये नमः"। "सं सरस्वत्यै नमः।" वायव्ये—"दुं दुर्गायै नमः" ईशाने—"क्षं क्षेत्रपालाय नमः।" इति सम्पूज्य, आसनं स्पृष्ट्वा—

"पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम्।"

इति सम्प्रार्थ्य, प्राङ्मुख उदङ्मुखो वा पद्मासनाद्यासनेनोपविश्य, मूलेनाचम्य, "ॐ मणिधारिणि वज्रिणि महाप्रतिसरे रक्ष रक्ष हुं फट् स्वाहा" इति शिखां बध्नीयात्। ततो देव्या दक्षिणवामपार्श्वयोः घृततैलदीपौ प्रज्वाल्य, "ॐ ऐं ह्रीं श्रीं रक्तवर्णद्वादशशक्तियुक्ताय दीपनाथाय नमः" इति पूजयित्वा—

"भो दीप देवीरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत्।
यावत् कर्मसमाप्तिः स्यात् तावत् त्वं सुस्थिरो भव॥"—

इति प्रार्थयेत्। अस्त्रमन्त्रेण दिग्बन्धनं विधाय, अङ्गुष्ठतर्जनीयोगेन 'ॐ नमः सुदर्शनाय अस्त्राय फट्', इति वह्निप्राकारं विचिन्त्य, आचम्य, प्राणायामत्रयं कुर्यात्।

सङ्कल्पः

ॐ तत् सदद्य परमात्मन आज्ञया प्रवर्तमानस्य अमुकसंवत्सरस्य श्रीश्वेतवाराहकल्पे जम्बूद्वीपे भरतखण्डे अमुकप्रदेशे अमुकस्थाने अमुकमासे अमुकपक्षे अमुकवासरे अमुकगोत्रोत्पन्नः अमुकशर्माऽहं श्रीभगवत्याः पीताम्बरायाः प्रसादसिद्धिद्वारा मम सर्वाभीष्टसिद्ध्यर्थं यथाशक्ति यथाज्ञानेन यथासम्भावितोपचारद्रव्यैः साङ्गावरणैः श्रीभगवतीपीताम्बरासपर्यां करिष्ये।

ततः स्ववामभागे गुरुपादुकामन्त्रेण गुरुं, दक्षिणभागे गणपतिमन्त्रेण गणपतिं च, प्रणम्य, सुमुख–चतुरस्र–गोक्षुर–योनिमुद्राः प्रदर्श्य, गुरुं नत्वा, स्वशिरसि सङ्घट्टमुद्रां बध्वा—

"श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवम्
सिद्धौघं बटुकत्रयं पदयुगं दूतीत्रयं मण्डलम्॥
वीराद्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम्
श्रीमन्मालिनि मन्त्रराजसहितं वन्दे गुरोर्मण्डलम्॥
बन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम्।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः॥"

इति पठित्वा ऋष्यादिन्यासपूर्वकं श्रीगुरुपादुकामन्त्रं दशधा जपेत्।

ततः स्वयं रक्तगन्धाक्षतरक्ताम्बरस्रगाभरणैरलङ्कृतः ताम्बूलपूरिताननः शिवोऽहमिति भावयन् स्ववामभागे वर्धनीकलशं स्थापयेत्। तद् यथा—

त्रिकोणवृत्तचतुरस्रमण्डलं विधाय, 'ॐ मण्डलाय नमः' इति सम्पूज्य, 'ॐ ऐं ह्रीं श्रीं' आधारं प्रक्षाल्य, मण्डले निधाय, 'ॐ धर्मप्रदद्वादशकलात्मने वह्निमण्डलाय नमः' इति आधारं सम्पूज्य, मूलेन जलमापूर्य, तत्र 'क्रों' इत्यङ्कुशमुद्रया रात्रौ चन्द्रमण्डलात्, दिवसे सूर्यमण्डलात्, तीर्थान्यावाह्य—

"गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥"

इति सम्प्रार्थ्य, 'ॐ कामप्रदषोडशकलात्मने सोममण्डलाय नमः' इति सम्पूज्य, 'सहस्रार हुं फट्' इति मन्त्रेण चक्रमुद्रया संरक्ष्य, गरुडमुद्रया निर्विषीकृत्य, 'हुम्' इति अवगुण्ठ्य, 'क्रों' इति अङ्कुशमुद्रया 'ॐ ऐं ह्रीं श्रीं नमो भगवत्यशेषतीर्थालवाले शिवजटाधिरूढे गङ्गे गङ्गाम्बिके स्वाहा' इति पठित्वा, मत्स्यमुद्रयाऽऽच्छाद्य, 'वं' इति धेन्वाऽमृतीकृत्य मूलमन्त्रेण सप्तधाऽभिमन्त्र्य, गन्धाक्षतैः सम्पूज्य प्रणमेत् ।

इति वर्धनीकलशार्चनम् ।

ततो मूलेन श्रीचक्राय पुष्पाञ्जलिं दत्त्वा, भूतशुद्धचादिन्यासान् कुर्यात् । तद् यथा—

मूलाधारस्थितां स्वेष्टदेवतारूपां बिसतन्तुनिभां विद्युत्प्रभापुञ्जभासुरां कुण्डलिनीं ध्यात्वा, उत्थाय हृत्कमले सङ्गतां सुषुम्नावर्त्मना, प्रदीप-कलिकाकारां जीवकलामादाय, ब्रह्मरन्ध्रगतां स्मरेत् । 'ॐ हंसः सोऽहम्' इति मन्त्रेण जीवं ब्रह्मणि संयोज्य, तत्स्थानस्थितभूतानि प्रविलापयेत् । ॐ भुवं जले प्रविलापयामि, जलम् अग्नौ, अग्निं वायौ, वायुम् आकाशे, आकाशम् अहङ्कारे, अहङ्कारं महत्तत्वे, महत्तत्वं प्रकृतौ, प्रकृतिम् आत्मनि । आत्मानं च शुद्धसच्चिदानन्दरूपोऽहमिति भावयेत् । ततः पापपुरुषं विचिन्त्य, वामनासया 'यं' बीजेन षोडशवारमापूर्य, 'रं' बीजेन चतुःषष्टिवारं कुम्भयित्वा, पुनः 'यं' बीजेन द्वात्रिंशद्वारं रेचकेन भस्मीभूतं पापपुरुषं बहिर्निस्सार्य, पुनः षोडशवारं वायुमापूर्य, तद्भस्म अमृतधारयाऽऽप्लाव्य, 'लं' बीजेन चतुःषष्टिवारं कुम्भकेन घनीकृत्य, पुनः 'ईं' बीजेन द्वात्रिंशद्वारं रेचकेन प्राणाद् उत्पाद्य कुण्डलिनीशक्तिं, 'सोऽहम्' इति मन्त्रेण परमात्मनः सकाशाद् अमृतमयजीवमादाय हृत्कमले समागतां, तत्र जीवं संस्थाप्य सुषुम्नामार्गेण मूलाधारगतां चिन्तयेत् ।

इनि भूतशुद्धिः ।

हृदि हस्तं दत्त्वा, 'आं ह्रीं क्रों मम सर्वेन्द्रियाणि स्थितानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।'

इति प्राणप्रतिष्ठा ।

अथ मातृकान्यासः—

अथान्तर्मातृकान्यासस्य ब्रह्मा ऋषिः, गायत्री छन्दः, मातृकासरस्वती देवता, हलो बीजानि, स्वराः शक्तयः, अव्यक्तं कीलकम्, मातृकान्यासे विनियोगः ।

ॐ ह्लीं अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः ।
ॐ ह्लीं इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः ।
ॐ ह्लीं उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः ।
ॐ ह्लीं एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः ।
ॐ ह्लीं ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः ।
ॐ ह्लीं अं यं रं लं वं शं षं सं हं अः करतलकरपृष्ठाभ्यां नमः ।

अथ हृदयादिन्यास :—

ॐ ह्लीं अं कं खं गं घं ङं आं हृदयाय नमः ।
ॐ ह्लीं इं चं छं जं झं ञं ईं शिरसे स्वाहा ।
ॐ ह्लीं उं टं ठं डं ढं णं ऊं शिखायै वषट् ।
ॐ ह्लीं एं तं थं दं धं नं ऐं कवचाय हुम् ।
ॐ ह्लीं ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट् ।
ॐ ह्लीं अं यं रं लं वं शं षं सं हं अः अस्त्राय फट् ।

इति षडङ्गं विधाय—

'आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदश–दश–दले द्वादशार्द्धे चतुष्के ।
वासान्ते बालमध्ये ड फ–क ठ सहिते कण्ठदेशे स्वराणाम्
ह क्षं तत्त्वार्थयुक्तं, सकलदलगतं वर्णरूपं नमामि ।'

इति ध्यात्वा, मानसोपचारैः 'लं' पृथिव्यात्मकं गन्धं समर्पयामि। 'हं' आकाशात्मकं पुष्पं समर्पयामि। 'यं' वाय्वात्मकं धूपं समर्पयामि। 'रं' वह्न्यात्मकं दीपं समर्पयामि। 'वं' अमृतात्मकं नैवेद्यं समर्पयामि। सं सर्वात्मकं ताम्बूलं समर्पयामि। इति सम्पूज्य—

कण्ठे विशुद्धचक्रे—अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः।

हृदये अनाहतचक्रे—कं खं गं घं ङं चं छं जं झं ञं टं ठं।

नाभौ मणिपूरे—डं ढं णं तं थं दं धं नं पं फं।

स्वाधिष्ठाने—बं भं मं यं रं लं।

मूलाधारे—वं शं षं सं।

विन्यस्य, ततो भ्रूमध्ये आज्ञाचक्रे—हं क्षं विन्यसेत्।

इत्यन्तर्मातृकान्यासः।

ॐ अस्य श्रीबहिर्मातृकान्यासस्य ब्रह्मा ऋषिः, गायत्री छन्दः, मातृकासरस्वती देवता, हलो बीजानि, स्वराः शक्तयः, अव्यक्तं कीलकं, न्यासे विनियोगः। ऋष्यादिन्यासं पूर्ववत् कृत्वा अकारादिक्षकारान्तमातृकावर्णैः स्वदेहे व्यापकं कुर्यात्।

श्रीक्रमोक्तरीत्या यथा—

ॐ ह्लीं अं नमः मुखे। ॐ ह्लीं आं नमः मुखवृत्ते।
ॐ ह्लीं इं नमः दक्षनेत्रे। ॐ ह्लीं ईं नमः वामनेत्रे।
ॐ ह्लीं उं नमः दक्षकर्णे। ॐ ह्लीं ऊं नमः वामकर्णे।
ॐ ह्लीं ऋं नमः दक्षनासापुटे। ॐ ह्लीं ॠं नमः वामनासापुटे।
ॐ ह्लीं लृं नमः दक्षगण्डे। ॐ ह्लीं ॡं नमः वामगण्डे।
ॐ ह्लीं एं नमः ऊर्ध्वोष्ठे। ॐ ह्लीं ऐं नमः अधरोष्ठे।
ॐ ह्लीं ओं नमः ऊर्ध्वदन्तपङ्क्तौ। ॐ ह्लीं औं नमः अधोदन्तपङ्क्तौ।
ॐ ह्लीं अं नमः मुखवृत्ते। ॐ ह्लीं अः नमः कण्ठे।
ॐ ह्लीं कं नमः दक्षिणबाहुमूले। ॐ ह्लीं खं नमः दक्षकूर्परे।
ॐ ह्लीं गं नमः दक्षिणमणिबन्धे। ॐ ह्लीं घं नमः दक्षाङ्गुलिमूले।

ॐ ह्लीं ङं नमः दक्षाङ्गुलिपद्मे । ॐ ह्लीं चं नमः वामबाहुमूले ।
ॐ ह्लीं छं नमः वामकूर्परे । ॐ ह्लीं जं नमः वाममणिबन्धे ।
ॐ ह्लीं झं नमः वामाङ्गुलिमूले । ॐ ह्लीं ञं नमः वामाङ्गुल्यग्रे ।
ॐ ह्लीं टं नमः दक्षपादमूले । ॐ ह्लीं ठं नमः दक्षजानुनि ।
ॐ ह्लीं डं नमः दक्षगुल्फे । ॐ ह्लीं ढं नमः दक्षपादाङ्गुलिमूले
ॐ ह्लीं णं नमः दक्षपादाङ्गुल्यग्रे । ॐ ह्लीं तं नमः वामपादमूले ।
ॐ ह्लीं थं नमः वामजानुनि । ॐ ह्लीं दं नमः वामगुल्फे ।
ॐ ह्लीं धं नमः वामपादाङ्गुलिमूले । ॐ ह्लीं नं नमः वामपादाङ्गुल्यग्रे ।
ॐ ह्लीं पं नमः दक्षपार्श्वे । ॐ ह्लीं फं नमः वामपार्श्वे ।
ॐ ह्लीं बं नमः पृष्ठे । ॐ ह्लीं भं नमः नाभौ ।
ॐ ह्लीं मं नमः जठरे । ॐ ह्लीं यं नमः हृदये ।
ॐ ह्लीं रं नमः दक्षांसे । ॐ ह्लीं लं नमः ककुदि ।
ॐ ह्लीं वं नमः वामांसे । ॐ ह्लीं शं नमः हृदयादिदक्षकरान्तम् ।
ॐ ह्लीं षं नमः हृदयादिवामकरान्तम् ।
ॐ ह्लीं सं नमः हृदयादिदक्षपादान्तम् ।
ॐ ह्लीं हं नमः हृदयादिवामपादान्तम् ।
ॐ ह्लीं लं नमः मस्तकादिपादान्तम् ।
ॐ ह्लीं क्षं नमः पादादिशिरोन्तम् ।

इति बहिर्मातृकान्यासः ।

अस्य श्रीब्रह्मास्त्रविद्याबगलामुखीषड्त्रिंशदक्षरात्मकमन्त्रस्य नारद ऋषिः, पङ्क्तिः छन्दः, श्रीबगलामुखी देवता, ह्लीं बीजं, स्वाहा शक्तिः, ॐ कीलकम्, श्रीबगलामुखीवरप्रसादसिद्ध्यर्थं न्यासे विनियोगः ।

ॐ ह्लीं बगलामुखि अङ्गुष्ठाभ्यां नमः ।
सर्वदुष्टानां तर्जनीभ्यां नमः ।
वाचं मुखं पदं स्तम्भय मध्यमाभ्यां नमः ।
जिह्वां कीलय अनामिकाभ्यां नमः ।

बुद्धि विनाशय कनिष्ठिकाभ्यां नमः।

ह्लीं ॐ स्वाहा, करतलकरपृष्ठाभ्यां नमः।

अथ हृदयादिन्यासः—

ॐ ह्लीं बगलामुखि हृदयाय नमः। सर्वदुष्टानां शिरसे स्वाहा। वाचं मुखं पदं स्तम्भय शिखायै वषट्। जिह्वां कीलय कवचाय हुम्। बुद्धि विनाशय नेत्रत्रयाय वौषट्। ह्लीं ॐ स्वाहा अस्त्राय फट्। इति न्यासान् विधाय, ॐ भूर्भुवः स्वरोम्।

इति दिग्बन्धः।

अथ तत्त्वन्यासः—

ॐ ह्लीं बगलामुखि आत्मतत्त्वाय नमः मूलाधारे।

सर्वदुष्टानां वाचं मुखं पदं स्तम्भय विद्यातत्त्वाय नमः हृदये।

जिह्वां कीलय शिवतत्त्वाय नमः भ्रूमध्ये।

बुद्धि विनाशय ह्लीं ॐ स्वाहा सर्वतत्त्वाय नमः ब्रह्मरन्ध्रे।

इति विन्यस्य, स्वात्मानं कामकलारूपं विभाव्य हृदये देवीं ध्यायेत्।

अथ ध्यानम्—

मध्येसुधाब्धि मणिमण्डपरत्नवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्यविभूषिताङ्गीं
देवीं भजामि धृतमुद्गरवैरिजिह्वाम्॥

इति ध्यात्वा, मानसोपचारैः सम्पूज्य, यथाशक्ति मूलमन्त्रं प्रजप्य, देव्यै निवेद्य योन्या प्रणमेत्। ततः पीठे यथोक्तं यन्त्रं स्थापयेत्।

अथ यन्त्रोद्धारः—

त्रिकोणषट्कोणवृत्ताष्टदलचतुर्द्वारात्मकं यन्त्रं स्थापयेत्। यन्त्रात्मनोर्मध्ये हस्तपरिमितेऽन्तराले पात्रासादनं कुर्यात्। स्ववामभागे त्रिकोणषट्कोणवृत्तचतुरस्रं कृत्वा शङ्खमुद्रया दक्षाङ्गुष्ठेन स्पृशेत्। तत्र मण्डले अग्नीशासुरवायव्यकोणेषु मध्ये चतुर्दिक्षु च, षडङ्गमन्त्रैः पूजयित्वा शङ्खाधारं मण्डले स्थापयेत्। तत्राग्निकलाः यजेत।

'ॐ ऐं श्रीं ऐं अग्निमण्डलाय धर्मप्रददशकलात्मने सामान्यार्घ्यपात्राधाराय नमः' । इति आधारं सम्पूज्य, तत्र—'ऐं ह्रीं श्रीं यं धूमार्चिषे नमः, रं ऊष्मायै नमः, लं ज्वलिन्यै नमः, वं ज्वालिन्यै नमः, शं विस्फुलिङ्गिन्यै नमः, षं सुश्रियै नमः, सं सुरूपायै नमः, हं कपिलायै नमः, लं हव्यवाहायै नमः, क्षं कव्यवाहायै नमः ।'

इति दश वह्निकलाः पूजनम् ।

ततः—

'ॐ पाञ्चजन्याय विद्महे, पावमानाय धीमहि ।
तन्नः शङ्खः प्रचोदयात् ।'

इति शङ्खं प्रक्षाल्य, आधारोपरि संस्थाप्य, 'ॐ ऐं ह्रीं श्रीं क्लीं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने सामान्यार्घ्यपात्राय नमः ।' इति शङ्खं सम्पूज्य ।

'कं भं तपिन्यै नमः, खं बं तापिन्यै नमः, गं फं धूम्रायै नमः, घं पं मरीच्यै नमः, ङं नं ज्वालिन्यै नमः, चं धं रुच्यै नमः, छं दं सुषुम्णायै नमः, जं थं भोगदायै नमः, झं तं विश्वायै नमः, ञं णं बोधिन्यै नमः, टं ढं धारिण्यै नमः, ठं डं क्षमायै नमः', इति द्वादशकलाः सम्पूज्य—

ततः वर्धनीजलेन शङ्खमापूर्य, तत्र 'ॐ ऐं ह्रीं श्रीं सौः सोममण्डलाय नमः', इति गन्धाक्षतैः सम्पूज्य, तत्र ऐं 'ह्रीं श्रीं अं अमृतायै नमः, आं मानदायै नमः, इं पूषायै नमः, ईं तुष्टयै नमः, उं पुष्टयै नमः, ऊं रत्यै नमः, ऋं धृत्यै नमः, ॠं शशिन्यै नमः ऌं चन्द्रिकायै नमः, ॡं कान्त्यै नमः, एं ज्योत्स्नायै नमः, ऐं श्रियै नमः, ओं प्रीत्यै नमः, औं अङ्गदायै नमः, अं पूर्णायै नमः, अः पूर्णामृतायै नमः ।'

इति षोडश कलाः पूजयेत् ।

तत्र हेतुलवं प्रक्षिप्य, योनिमुद्रां प्रदर्श्य, धेन्वाऽमृतीकृत्य, मत्स्यमुद्रयाऽऽच्छाद्य, मूलं त्रिः जपेत् । 'ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः' इति मन्त्रेण शङ्खोदकेन आत्मानं पूजाद्रव्याणि च प्रोक्षयेत् । तदर्घ्यात् किञ्चिद् वर्धन्यां क्षिपेत् ।

इति सामान्याऽर्घ्यविधिः ।

अथ विशेषार्घ्यस्थापनम्—

देवीचक्रात्मनोर्मध्ये जलेन स्थलं सम्प्रोक्ष्य, तत्र त्रिकोणषट्कोण-वृत्तचतुरस्रात्मकं मण्डलं विधाय, खण्डत्रयेण, मूलेन, त्रिकोणेषु, मध्ये, पूजयेत् ।

'ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा । इति मूलमन्त्रः ।

षट्कोणेषु षडङ्गमन्त्रैः पूजयेत् । ततः—

ह्लां हृदयदेवीश्रीपादुकां पूजयामि, ह्लीं शिरोदेवीश्रीपादुकां पूजयामि,
ह्लूं शिखादेवीश्रीपादुकां पूजयामि, ह्लैं कवचदेवीश्रीपादुकां पूजयामि,
ह्लौं नेत्रदेवीश्रीपादुकां पूजयामि, ह्लः अस्त्रदेवीश्रीपादुकां पूजयामि,

इति सम्पूज्य, चतुरस्रे

कामरूपपीठाय नमः । जालन्धरपीठाय नमः ।
पूर्णगिरिपीठाय नमः । ओड्यानपीठाय नमः ।

इति पीठचतुष्टयं पूजयेत् । तत्र अस्त्रक्षालितां त्रिपादिकां संस्थाप्य, 'ॐ ऐं ह्लीं श्रीं ऐं अग्निमण्डलाय धर्मप्रददशकलात्मने विशेषार्घ्यपात्राधाराय नमः ।' इति सम्पूज्य, 'यं धूम्रार्चिषे नमः, रं उष्मायै नमः, लं ज्वलिन्यै नमः, वं ज्वालिन्यै नमः, शं विस्फुलिङ्गिन्यै नमः, षं सुश्रियै नमः, सं सुरूपायै नमः, हं कपिलायै नमः; लं हव्यवाहायै नमः, क्षं कव्यवाहायै नमः' । इति दशाग्निकलाः पूजयेत् ।

'ॐ ऐं ह्लीं श्रीं क्लीं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने विशेषार्घ्यपात्राय नमः ।' इति अस्त्रक्षालितं पात्रं संस्थाप्य, सम्पूज्य—

'ऐं ह्लीं श्रीं कं भं तपिन्यै नमः ऐं ह्लीं श्रीं खं बं तापिन्यै नमः, ऐं ह्लीं श्रीं गं फं धूम्रायै नमः, ऐं ह्लीं श्रीं घं पं मरीच्यै नमः, ऐं ह्लीं श्रीं ङं नं ज्वालिन्यै नमः, ऐं ह्लीं श्रीं चं धं रुच्यै नमः, ऐं ह्लीं श्रीं छं दं सुषुम्णायै नमः, ऐं ह्लीं श्रीं जं थं भोगदायै नमः; ऐं ह्लीं श्रीं झं तं विश्वायै नमः, ऐं ह्लीं श्रीं ञं णं बोधिन्यै नमः, ऐं ह्लीं श्रीं टं ढं धारिण्यै

नमः, ऐं ह्लीं श्रीं ठं डं क्षमायै नमः ।' इति द्वादश सूर्यकलाः तस्मिन् पूजयेत् ।

ततो विलोममातृकया मूलेन च क्षीरमापूर्य--

क्षं लं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा ।

तत्र 'ऐं ह्लीं श्रीं सौः सोममण्डलाय कामप्रदषोडशकलात्मने विशेषार्घ्यपात्रामृताय नमः' इति सम्पूज्य, तत्र 'अं अमृतायै नमः, आं मानदायै नमः, इं पूषायै नमः, ईं तुष्ट्यै नमः, उं पुष्ट्यै नमः, ऊं रत्यै नमः, ऋं धृत्यै नमः, ॠं शशिन्यै नमः, ऌं चन्द्रिकायै नमः, ॡं कान्त्यै नमः, एं ज्योत्स्नायै नमः, ऐं श्रियै नमः, ओं प्रीत्यै नमः, औं अङ्गदायै नमः, अं पूर्णायै नमः, अः पूर्णामृतायै नमः' इति षोडश सोमकलाः पूजयेत् ।

ततः त्रिकोणं विलिख्य पश्चिमकोणादारम्भ 'अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः' पर्यन्तम्, ईशानादारभ्य—'कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं' पर्यन्तम्, अग्निकोणादारभ्य—'थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं' पर्यन्तम्, कोणेषु–'हं लं क्षं' मध्ये–ईं, द्वयोः पार्श्वयोः 'हं सः' इति विलिख्य, पञ्चरत्नानि पूजयेत् । ॐ ऐं ह्लीं श्रीं ग्लूं गगनरत्नाय नमः 'ॐ ऐं ह्लीं श्रीं 'प्लूं पातालरत्नाय नमः, ॐ ऐं ह्लीं श्रीं स्लूं स्वर्गरत्नाय नमः, ॐ ऐं ह्लीं श्रीं म्लूं मर्त्यरत्नाय नमः, ॐ ऐं ह्लीं श्रीं न्लूं नागरत्नाय नमः, इति रत्नपञ्चकं सम्पूज्य, ततो मध्ये–त्रिकोण–षट्कोण–वृत्ता–ष्टार–चतुरस्रं विभावयेत् । चतुरस्रे—आनन्दभैरवानन्दभैरव्यौ पूजयेत् ।

ऐं ह्लीं श्रीं ह स क्ष म ल व र यूं, आनन्दभैरवाय वषट् ।

आनन्दभैरवश्रीपादुकां पूजयामि नमः ।

ऐं ह्लीं श्रीं स ह क्ष म ल व र यीं सुधादेव्यै वौषट् ।

आनन्दभैरवीसुधादेवीश्रीपादुकां पूजयामि नमः ।

ततः त्रिकोणे कूटत्रयेण, मध्ये च मूलेन सम्पूज्य; षट्कोणे षडङ्गानि पूजयेत् ।

ऐं ह्रीं श्रीं ऐं अग्निचक्रे ब्रह्मात्मकशक्तिश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं क्लीं सूर्यचक्रे विष्ण्वात्मकशक्तिश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं सौः सोमचक्रे रुद्रात्मकशक्तिश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं ह्रां हृदयदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं ह्रीं शिरोदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं ह्रूं शिखादेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं ह्रैं कवचदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं ह्रौं नेत्रदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं ह्रः अस्त्रदेवीश्रीपादुकां पूजयामि नमः ।

अष्टारे—

ऐं ह्रीं श्रीं अं असिताङ्गभैरवसहित–आं ब्राह्मीदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं इं रुरुभैरवसहित—ईं माहेश्वरीदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं उं चण्डभैरवसहित—ऊं कौमारीदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं ऋं क्रोधभैरवसहित–ॠं वैष्णवीदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं ऌं उन्मत्तभैरवसहित–ॡं वाराहीदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं एं कपालभैरवसहित–ऐं माहेन्द्रीदेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्री श्रीं ओं भीषणभैरवसहित–औं चामुण्डादेवीश्रीपादुकां पूजयामि नमः ।

ऐं ह्रीं श्रीं अं संहारभैरवसहित–अः महालक्ष्मीदेवीश्रीपादुकां पूजयामि नमः ।

ॐ ऐं ह्रीं श्रीं हंसः शुचिषद् वसुरन्तरिक्षसद् होता वेदिषद्
तिथिर्दुरोणसद् नृषद् वरसद् ऋतसद् व्योमसद्
अब्जा गोजा ऋतजा अद्रिजा ऋते बृहत् ।

ॐ ऐं ह्रीं श्रीं अं ब्रह्मदशकलाश्रीपादुकां पूजयामि नमः ।

ॐ ऐं ह्रीं श्रीं ब्रह्मजज्ञानं प्रथमं पुरस्तात् विसीमतः सुरुचो वेन आवः
सुबुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ।

ॐ ऐं ह्रीं श्रीं उं विष्णुदशकलाश्रीपादुकां पूजयामि नमः ।

ॐ प्र तद् विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेषु अधिक्षियन्ति भुवनानि विश्वा ।

ॐ ऐं ह्रीं श्रीं मं रुद्रदशकलाश्रीपादुकां पूजयामि नमः ।

ॐ ऐं ह्रीं श्रीं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान् मृत्योर्मुक्षीय माऽमृतात् ।

ॐ ऐं ह्रीं श्रीं विन्द्वीश्वरपञ्चकलाश्रीपादुकां पूजयामि नमः ।

ॐ ऐं ह्रीं श्रीं तद् विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ।

ॐ ऐं ह्रीं श्रीं तद् विप्रासो विपन्यवो जागृवाꣳसः समिन्धते ।
विष्णोर्यत् परमं पदम् ।

ॐ ऐं ह्रीं श्रीं विन्दुनादसदाशिवषोडशकलाश्रीपादुकां पूजयामि नमः ।

ॐ ऐं ह्रीं श्रीं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु मे ।
मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ।
गर्भं धेहि सिनीवाली गर्भं धेहि सरस्वती ।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीपीताम्बराकलायै नमः । इति सम्पूज्य–

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं ह्रां हं सः ह्रां विशेषार्घ्याऽमृतस्य प्राणा इह प्राणाः । ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं ह्रां हं सः ह्रां जीव इह स्थितः । ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं ह्रां हं सः ह्रां सर्वेन्द्रियाणि सुखं चिरं तिष्ठन्तु स्वाहा ह्रीं ॐ हंसः । इति त्रिः । एवं प्राणप्रतिष्ठां कृत्वा । अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं लं क्षं ।

इति मातृकावर्णेन अनुलोमेन त्रिरावृत्य—

ऐं ह्लीं श्रीं ऐं अखण्डैकरसानन्दकरे परसुधात्मनि ।
स्वच्छन्दस्फुरणामत्र निधेहि कुलनायिके ।

ऐं ह्लीं श्रीं क्लीं अकुलस्थाऽमृताकारे शुद्धज्ञानकरे परे ।
अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ।।

ऐं ह्लीं श्रीं सौः त्वद्रूपिण्यैकरस्यं त्वं कृत्वा ह्येतत् स्वरूपिणि ।
भूत्वा पराऽमृताकारा मयि विस्फुरणं कुरु ।।

'ॐ ऐं ह्लीं श्रीं ऐं प्लूं ह्सौः जूं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतं स्रावय स्रावय स्वाहा ।'

इति मन्त्रं पठेत् ।

'ऐं ह्लीं श्रीं ॐ वद वद वाग्वादिनि ऐं क्लिन्ने क्लेदय महाक्षोभं कुरु कुरु क्लीं सौं मोक्षं कुरु कुरु ह्सौः ।' इति दीपिनीमन्त्रम् अष्टवारं जपेत् । ततो मूलं नववारं पठेत् । धेन्वाऽमृतीकृत्य, महायोनिमुद्रया अस्त्रेण संरक्ष्य, कवचेन अवगुण्ठ्य, धेनुं योनिं प्रदर्शयेत् ।

'ऐं ह्लीं श्रीं ऐं क्लीं सौः स्वाहा' इति विशेषार्घ्यामृतं देवीरूपं विभाव्य, 'श्रीपीताम्बरायै नमः' गन्धं पुष्पं धूपं दीपं नैवेद्यान्तं सम्पूज्य प्रणमेत् ।

ततः आत्मपात्रस्थापनम् ।

तत्रादौ स्वशिरसि 'श्रीं ह्लीं क्लीं' इत्यनेन गन्धाक्षतपुष्पैः गुरुपादुकां सम्पूज्य, स्वयमपि गन्धादिनाऽलङ्कृत्य, स्वपुरतः त्रिकोणवृत्तचतुरस्रमण्डलं कृत्वा, 'ॐ ह्लीं हं सः सोऽहं स्वाहा' इति मन्त्रेण आत्मश्रीपात्रयोर्मध्ये साधारं पात्रं संस्थाप्य, सुधयाऽऽपूर्य, ततः स्वशिरसि—

ॐ ऐं ह्लीं श्रीं दिव्यौघश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ऐं ह्लीं श्रीं सिद्धौघश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ऐं ह्लीं श्रीं मानवौघश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ऐं ह्लीं श्रीं स्वगुरुश्रीपादुकां पूजयामि तर्पयामि।

ॐ ऐं ह्लीं श्रीं परमगुरुश्रीपादुकां पूजयामि तर्पयामि ।

ॐ ऐं ह्लीं श्रीं परमेष्ठिगुरुश्रीपादुकां पूजयामि तर्पयामि ।

इति सम्पूज्य, सन्तर्प्य, हृदये मूलेन श्रीपीताम्बरां सन्तर्प्य, मूलाधारे गणपतिं, नाभौ आत्मपादुकामन्त्रेण 'ॐ ह्लीं हं सः सोऽहं स्वाहा ।' त्रिः सन्तर्प्य, 'आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माऽहमस्मि, अहमस्मि, ब्रह्माऽहमस्मि, अहमेवाऽहं मां जुहोमि स्वाहा' इति मन्त्रेण 'आत्मा मे शुद्ध्यताम्' इति मन्त्रान्ते स्वीकृत्य, तत्त्वचतुष्टयेन आनन्दमयो भूत्वा देवीं यजेत् ।

मूलेन प्राणानायम्य, मूलमन्त्रस्य ऋष्यादिन्यासं ध्यानादिकं कृत्वा, मानसोपचारैः सम्पूज्य, किञ्चिन्मूलमन्त्रं प्रजप्य, हस्ते पुष्पाञ्जलिमादाय मूलमुच्चार्य, 'श्रीबगलामुखीं पूजयामि नमः ।' इति पुष्पाणि समर्प्य, यन्त्रराजमध्ये ध्यानोक्तां देवीं विचिन्त्य, पीठपूजां कुर्यात् ।

| | | | |
|---|---|---|---|
| ॐ ह्लीं श्रीं मण्डूकाय | नमः । | ॐ ह्लीं श्रीं आधाराय | नमः । |
| ॐ ह्लीं श्रीं मूलप्रकृत्यै | नमः । | ॐ ह्लीं श्रीं आधारशक्त्यै | नमः । |
| ॐ ह्लीं श्रीं कूर्माय | नमः । | ॐ ह्लीं श्रीं अनन्ताय | नमः । |
| ॐ ह्लीं श्रीं वराहाय | नमः । | ॐ ह्लीं श्रीं पृथिव्यै | नमः । |
| ॐ ह्लीं श्रीं सुधार्णवाय | नमः । | ॐ ह्लीं श्रीं रत्नद्वीपाय | नमः । |
| ॐ ह्लीं श्रीं नन्दनोद्यानाय | नमः । | ॐ ह्लीं श्रीं स्वर्णप्राकाराय | नमः । |
| ॐ ह्लीं श्रीं कल्पवृक्षाय | नमः । | ॐ ह्लीं श्रीं मणिमण्डपाय | नमः । |
| ॐ ह्लीं श्रीं स्वर्णवेदिकायै | नमः । | ॐ ह्लीं श्रीं रत्नसिंहासनाय | नमः । |
| ॐ ह्लीं श्रीं धर्माय | नमः । | ॐ ह्लीं श्रीं ज्ञानाय | नमः । |
| ॐ ह्लीं श्रीं ऐश्वर्याय | नमः । | ॐ ह्लीं श्रीं वैराग्याय | नमः । |
| ॐ ह्लीं श्रीं अधर्माय | नमः । | ॐ ह्लीं श्रीं अज्ञानाय | नमः । |
| ॐ ह्लीं श्रीं अनैश्वर्याय | नमः । | ॐ ह्लीं श्रीं अवैराग्याय | नमः । |
| ॐ ह्लीं श्रीं मायायै | नमः । | ॐ ह्लीं श्रीं विद्यायै | नमः । |
| ॐ ह्लीं श्रीं अविद्यायै | नमः । | ॐ ह्लीं श्रीं अनन्ताय | नमः । |
| ॐ ह्लीं श्रीं पद्माय | नमः । | ॐ ह्लीं श्रीं आनन्दकन्दाय | नमः । |

ॐ ह्लीं श्रीं संविन्नालाय नमः। ॐ ह्लीं श्रीं प्रकृतिमयपत्रेभ्यो नमः।
ॐ ह्लीं श्रीं विकारमयकेशरेभ्यो नमः। ॐ ह्लीं श्रीं अर्कमण्डलाय नमः।
ॐ ह्लीं श्रीं सं सोममण्डलाय नमः। ॐ ह्लीं श्रीं रं वह्निमण्डलाय नमः।
ॐ ह्लीं श्री सं प्रबोधात्मने सत्वाय नमः। ॐ ह्लीं श्रीं रं प्रवृत्यात्मने रजसे नमः
ॐ ह्लीं श्रीं तं मोहात्मने तमसे नमः। ॐ ह्लीं श्रीं आं आत्मने नमः।
ॐ ह्लीं श्रीं पं परमात्मने नमः। ॐ ह्लीं श्रीं अज्ञानात्मने नमः।
ॐ ह्लीं श्रीं ज्ञां ज्ञानतत्त्वात्मने नमः। ॐ ह्लीं श्रीं मां मायातत्त्वात्मने नमः।
ॐ ह्लीं श्रीं कं कलातत्त्वात्मने नमः। ॐ ह्लीं श्रीं विं विद्यातत्त्वात्मने नमः।
ॐ ह्लीं श्रीं अं अजितायै नमः। ॐ ह्लीं श्रीं अं अपराजितायै नमः।
ॐ ह्लीं श्रीं निं नित्यायै नमः। ॐ ह्लीं श्रीं विं विलासिन्यै नमः।
ॐ ह्लीं श्रीं दां दोग्ध्र्यै नमः। ॐ ह्लीं श्रीं अं अघोरायै नमः।
ॐ ह्लीं श्रीं सं सर्वमङ्गलायै नमः।

ततो मध्ये—

ॐ ह्लीं श्रीं ऐं परायै नमः। ॐ ह्लीं श्रीं सर्वशक्तिकमलासनाय नमः।

इति पीठपूजां कृत्वा, गन्धपुष्पैः सम्पूज्य, यन्त्रराजे मूर्तिं कल्पयित्वा, त्रिखण्डया मुद्रया पुष्पाण्यादाय, मूलं पठित्वा—

मध्येसुधाब्धि मणिमण्डपरत्नवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्यविभूषिताङ्गीं
देवीं भजामि धृतमुद्गरवैरिजिह्वाम्॥

इति ध्यात्वा, स्वहृदयकमले परशिवेनैक्यं विभाव्य, वहन्नासाद्वारेण स्वान्तस्थतेजः अञ्जलौ आनीय—

ॐ ह्स्रैं ह स क ल ह्लीं ह सौः

महापद्मवनान्तस्थे कारणानन्दविग्रहे।
सर्वभूतहिते मातरेह्येहि परमेश्वरि।

ऐं एहि एहि देवेशि बगले सुरपूजिते ।
परामृतपरे शीघ्रं सान्निध्यं कुरु सिद्धिदे ।
देवेशि भक्तिसुलभे परिवारसमन्विते ।
यावत् त्वां पूजयिष्यामि, तावत् त्वं सुस्थिरा भव ।

'ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा । सः ह्लीं भगवति आगच्छ आगच्छ अस्मिन् मण्डले सान्निध्यं कुरु कुरु मम सुप्रसन्नं कुरु कुरु स्वाहा ।'

इति मन्त्रेण ब्रह्मरन्ध्रस्थानविद्युत्कोटिविडम्बिनीं सर्वाभरणसंच्छन्नां साङ्गां सपरिवारां सवाहनां सशक्तिकां, वहन्नासापुटद्वारेण चक्रे मध्यबिन्दौ आवाह्य, पुष्पाणि समर्प्य चिन्तयेत् । तत्र बिन्दुमध्यनिवासिनीं देवीम् आवाहनादिस्थापनादिमुद्राः सम्यक् प्रदर्शयेत् । 'आवाहिता भवेत्यादि' मत्स्यमुद्रयाऽऽच्छाद्य मूलं दशधा जपेत् ।

ततः आं ह्लीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः ह्लीं ॐ हं सः श्रीपीताम्बरायाः प्राणा इह प्राणाः । आं ह्लीं क्रों जीव इह जीव, आं ह्लीं क्रों सर्वेन्द्रियाणि स्थितानि इहागत्य सुखं चिरं तिष्ठन्तु ।

इति प्राणप्रतिष्ठां विधाय, गन्धपुष्पाणि समर्प्य, योनिमुद्रां प्रदर्श्य, मूलषडङ्गेन सकलीकृत्य, किरीटमुद्रां प्रदर्शयेत् । ततः सामान्यार्घ्योदकेन षोडशोपचारैः पूजयेत् । यथा—

श्रीबगलाया आसनं समर्पयामि । एवम् पाद्यम् । अर्घ्यम् । आचमनीयम् । मधुपर्कम् । पुनराचमनीयम् पृथक् । पञ्चामृतस्नानम् । पुनः शुद्धोदकस्नानम् । सुगन्धतैलमर्दनम् । उद्वर्तनम् । उष्णोदकम् । शुद्धोदकस्नानम् । अभिषेकस्नानम् । पुनः शुद्धोदकम् । शुद्धवस्त्रेण प्रोक्षणम् । पीठे निवेशनम् । वस्त्रार्पणम् । आभरणार्पणम् । चन्दनम् । ऋतुकालोद्भवपुष्पाणि । हरिद्राकुङ्कुमादिसौभाग्यद्रव्याणि । धूपम् । दीपम् । आधारोपरि देवीपुरतः नैवेद्यं संस्थाप्य, मूलेन संप्रोक्ष्य, गन्धपुष्पैः सम्पूज्य, मूलेनाभिमन्त्र्य, धेन्वाऽमृतीकृत्य, वामाङ्गुष्ठेन पात्रं स्पृशन्, दक्षिणेन विशेषार्घ्योदकमादाय—

"हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।"

इति पठित्वा 'ॐ अमृतोपस्तरणमसि स्वाहा', इति देव्यै जलमर्पयेत् ।

वामकरे पद्ममुद्रां बध्वा, दक्षिणकरेण प्राणादिपञ्चमुद्राभिरर्पयेत् ।

यथा—प्राणाय स्वाहा, अपानाय स्वाहा, समानाय स्वाहा,
उदानाय स्वाहा, व्यानाय स्वाहा ।

ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समन्ताद्
दिव्याकल्पैर्ललितरमणी वीज्यमाना सखीभिः ।।
नर्मक्रीड़ाप्रहसनपरा हासयन्ती सुरेशान्
भुङ्क्ते पात्रे कनकखचिते षड्रसान् लोकधात्री ।।

इति पठित्वा, किञ्चिन्मूलं प्रजप्य, मध्ये पानीयं दत्वा, पुनः क्षणं विलम्ब्य, 'अमृताऽपिधानमसि स्वाहा' इति जलं दत्वा—

प्रथमखण्डेन—"ॐ ह्लीं बगलामुखि" आत्मतत्त्वव्यापिनी श्रीबगलामुखी तृप्यतु ।

द्वितीयखण्डेन—"सर्वदुष्टानां वाचं मुखं पदं स्तम्भय" विद्यातत्त्वव्यापिनी श्रीबगलामुखी तृप्यतु ।

तृतीयखण्डेन—"जिह्वां कीलय बुद्धि विनाशय ह्लीं ॐ स्वाहा" शिवतत्त्वव्यापिनी श्रीबगलामुखी तृप्यतु ।

समग्रमूलेन—"ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धि विनाशय ह्लीं ॐ स्वाहा" सर्वतत्त्वव्यापिनी श्रीबगलामुखी तृप्यतु ।

ततः हस्तप्रक्षालनं पादप्रक्षालनं गण्डूषान् कारयित्वा, ताम्बूलं दत्वा, आरार्तिकं कुर्यात् ।

## अथाऽऽवरणपूजनम्—

पुष्पाञ्जलिमादाय—

संविन्मये परे देवि पराऽमृतरसप्रिये ।
अनुज्ञां देहि देवेशि परिवारार्चनाय मे ।

इति संप्रार्थ्य, चक्रे पुष्पाञ्जलिं दत्त्वा, मूलेन विन्दौ त्रिः सन्तर्प्य, षडङ्गार्चनं कुर्यात् ।

तद् यथा—विन्दौ, अग्नीशासुरवायुकोणेषु, मध्ये, दिक्षु च,

ॐ ह्लां हृदयदेवीश्रीपादुकां पूजयामि नमः ।

ॐ ह्लीं शिरोदेवीश्रीपादुकां पूजयामि नमः ।

ॐ ह्लूं शिखादेवीश्रीपादुकां पूजयामि नमः ।

ॐ ह्लैं कवचदेवीश्रीपादुकां पूजयामि नमः ।

ॐ ह्लौं नेत्रदेवीश्रीपादुकां पूजयामि नमः ।

ॐ ह्लः अस्त्रदेवीश्रीपादुकां पूजयामि नमः ।

मूलम्, श्रीबगलामुखीचतुरस्त्ररेखायै नमः ।

इति पुष्पाञ्जलिं दत्त्वा—

पूर्वद्वारे—

ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा । श्रीगणपतिश्रीपादुकां पूजयामि नमः ।

ततः दक्षिणद्वारे—

ॐ ह्रीं बटुकाय आपदुद्धरणाय कुरु कुरु बटुकाय ह्रीं श्रीबटुकश्रीपादुकां पूजयामि नमः ।

ततः पश्चिमद्वारे—

यां यीं यूं यैं यौं यः योगिनीभ्यः फट् स्वाहा । श्रीयोगिनीश्रीपादुकां पूजयामि नमः ।

ततः उत्तरद्वारे—

क्षं क्षेत्रपालाय नमः । श्रीक्षेत्रपालश्रीपादुकां पूजयामि नमः ।

ततः ईशानादि उत्तरान्तं रेखात्रयं पूजयेत् । यथा—

तं तमोरेखायै नमः. रं रजोरेखायै नमः, सं सत्वरेखायै नमः ।

ततः पङ्क्त्याकारेणोपविष्टान् दिव्यौघादिगुरून् नत्वा पुष्पाञ्जलिं दत्त्वा—

ॐ ह्लीं श्रीं परमशिवानन्दनाथश्रीपादुकां पूजयामि नमः ।
ॐ ह्लीं श्रीं पराशक्त्यम्बाश्रीपादुकां पूजयामि नमः ।
ॐ ह्लीं श्रीं पराधिकानन्दनाथश्रीपादुकां पूजयामि नमः ।
ॐ ह्लीं श्रीं कुलेश्वरानन्दनाथश्रीपादुकां पूजयामि नमः ।
ॐ ह्लीं श्रीं शुक्लादेव्यम्बाश्रीपादुकां पूजयामि नमः ।
ॐ ह्लीं श्रीं कामेश्वरानन्दनाथश्रीपादुकां पूजयामि नमः ।
ॐ ह्लीं श्रीं कामेश्वर्यम्बाश्रीपादुकां पूजयामि नमः ।

इति दिव्यौघाः ।

सिद्धौघेभ्यः पराख्येभ्यो गुरुभ्यो नमः ।

इति पुष्पाञ्जलिं दत्वा—

ॐ ह्लीं श्रीं भोगानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं क्लिन्नानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं समयानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं सहजानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।

इति सिद्धौघाः ।

मानवौघेभ्यः पराख्येभ्यो गुरुभ्यो नमः ।

इति पुष्पाञ्जलिं दत्वा —

ॐ ह्लीं श्रीं गगनानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं विश्वानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं विमलानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं भुवनानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं मदनानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं लीलानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं स्वात्मानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं प्रियानन्दनाथश्रीपादुकां पूजयामि तर्पयामि ।

इति मानवौघाः ।

ततः परमेष्ठिगुरुं परमगुरुं स्वगुरुं च तर्पयेत् । ततः —

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं गुरुपङ्क्तिप्रपूजनम् ।

इति पठित्वा पुष्पाञ्जलिं दद्यात् ।

ॐ ह्लीं श्रीं अं बगलामुखीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं आं स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं इं मोहिनीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं ईं जृम्भिणीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं उं बगलामुखीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं ऊं चञ्चलाश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं ऋं भूधराश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं ॠं कलुषाश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं ऌं धात्रीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं ॡं करुणाश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं एं कालाकर्षिणीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं ऐं भ्रामिकाश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं ओं मन्दगमनाश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं औं भोगिनीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं अं भाविकाश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं अः शान्ताश्रीपादुकां पूजयामि तर्पयामि ।

पुष्पाञ्जलिमादाय—

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।

ॐ ह्लीं श्रीं अं कं खं गं घं ङं आं असिताङ्गभैरवसहित—
ब्राह्मीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं इं चं छं जं झं ञं ईं रुरुभैरवसहित—
माहेश्वरीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं उं टं ठं डं ढं णं ऊं चण्डभैरवसहित-

कौमारीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं ऋं तं थं दं धं नं ॠं क्रोधभैरवसहित-

वैष्णवीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं ऌं पं फं बं भं मं ॡं उन्मत्तभैरवसहित-

वाराहीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं एं यं रं लं वं ऐं कपालभैरवसहित-

इन्द्राणीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं ओं शं षं सं हं औं भीषणभैरवसहित-

चामुण्डादेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं अं लं क्षं अः संहारभैरवसहित-

महालक्ष्मीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि ।

पुष्पाञ्जलिमादाय—

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।

भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ।

पुनः शङ्खोदकेन एकवारं, विशेषार्घ्योदकेन त्रिवारं च तर्पयेत् ।

अथ षट्कोणेषु वामावर्तेन—

ॐ ह्लीं श्रीं डां डीं डूं डैं डौं डः रसधातुस्थ-डाकिनीदेवी-

श्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं रां रीं रूं रैं रौं रः असृग्धातुस्थ-राकिनीदेवी-

श्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं लां लीं लूं लैं लौं लः मांसधातुस्थ-लाकिनीदेवी-

श्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं कां कीं कूं कैं कौं कः मेदोधातुस्थ-काकिनीदेवी-

श्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं शां शीं शूं शैं शौं शः अस्थिधातुस्थ-शाकिनीदेवी-

श्रीपादुकां पूजयामि तर्पयामि ।

ॐ ह्लीं श्रीं हां हीं हूं हैं हौं हः मज्जाधातुस्थ–हाकिनीदेवी–
श्रीपादुकां पूजयामि तर्पयामि ।

इति सम्पूज्य, तदग्रेषु—

ॐ ह्लीं श्रीं सुभगाश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं भगाश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं भगसर्पिणीश्रीपादुकां पूजयामि तर्पयामि ।
ॐ ह्लीं श्रीं भगावहाश्रीपादुकां पूजयामि तर्पयामि ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ।

पुनः शङ्खोदकेन एकवारं, विशेषार्घ्योदकेन त्रिःवारं विन्दौ तर्पयेत् ।

अग्निकोणे— ॐ ह्लीं श्रीं क्रोधिनीश्रीपादुकां पूजयामि तर्पयामि ।
ईशानकोणे—ॐ ह्लीं श्रीं जृम्भिणीश्रीपादुकां पूजयामि तर्पयामि ।
अग्निकोणे—ॐ ह्लीं श्रीं चामरधारिणीश्रीपादुकां पूजयामि तर्पयामि ।

इति सन्तर्प्य—

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ।

पुनः शङ्खोदकेन एकवारं, विशेषार्घ्योदकेन त्रिवारं, मूलेन विन्दौ देवीं तर्पयेत् ।

ततो मध्ये देव्यग्रे—

ॐ ह्लीं श्रीं ह्रौं ॐ नमः शिवाय हौं त्रिनेत्राय
त्रिनेत्रश्रीपादुकां पूजयामि तर्पयामि ।

विन्दौ—मूलेन, श्रीपादुकां पूजयामि तर्पयामि ।

इति त्रिवारं सन्तर्प्य—

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं षष्ठावरणार्चनम् ।

शङ्खोदकेन एकवारं, विशेषार्घ्योदकेन त्रिवारं पूजयेत् तर्पयेच्च ।

ततो गन्धपुष्पधूपदीपसोपस्करं महानैवेद्यं पूर्ववत् आधारोपरि देव्यग्रे निधाय, पूर्ववत् सम्पूज्य, धेन्वाऽमृतीकृत्य, "अमृतोपस्तरणमसि स्वाहा" इति विशेषार्घ्यजलं दत्त्वा—

हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।

'नैवेद्यं समर्पयामि' प्राणादिपञ्चमुद्राभिरर्पयेत् । प्राणाय स्वाहा, अपानाय स्वाहा, समानाय स्वाहा, उदानाय स्वाहा, व्यानाय स्वाहा ।

ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समन्ताद्
दिव्याकल्पैर्ललितरमणी वीज्यमाना सखीभिः ।
नर्मक्रीडाप्रहसनपरा हासयन्ती सुरेशान् ।
भुङ्क्ते पात्रे कनकखचिते, षडरसान् लोकधात्री ॥

किञ्चिन्मूलं प्रजप्य, मध्ये पानीयं दत्त्वा, पुनः क्षणं विलम्ब्य, 'अमृतापिधानमसि स्वाहा' इति जलं दत्त्वा ।

प्रथमखण्डेन—'ॐ ह्लीं बगलामुखि' आत्मतत्त्वव्यापिनी बगलामुखी तृप्यतु ।

द्वितीयखण्डेन—'सर्वदुष्टानां वाचं मुखं पदं स्तम्भय' विद्यातत्त्वव्यापिनी श्रीबगलामुखी तृप्यतु ।

तृतीयखण्डेन—'जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा' शिवतत्त्वव्यापिनी श्रीबगलामुखी तृप्यतु ।

समग्रमूलेन—'ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ॐ स्वाहा' सर्वतत्त्वव्यापिनी श्रीबगलामुखी तृप्यतु ।

ततः हस्तप्रक्षालनम् । गण्डूषान् कारयित्वा, ताम्बूलं दत्त्वा, छत्रं, चामरं, पादुकां, व्यजनं, राजोपचारान् मूलेन अर्पयेत् । आरार्तिकं कुर्यात् । देववन्दनम्, आत्मवन्दनं च कृत्वा, हस्तप्रक्षालनान्ते पुष्पाञ्जलिं दत्त्वा, क्षमाप्य पूजाङ्गहोमं कुर्यात् ।

## अथ होमः

अथेत्यादि श्रीपीताम्बरापूजाङ्गत्वेन विहितहवनं करिष्ये—इति सङ्कल्प्य, कुण्डे स्थण्डिले वा 'ॐ ह्लीं श्रीं' मूलेन सम्प्रोक्ष्य, मूलेनाग्निं समानीय, 'अग्नये नमः' इति गन्धाक्षतैः सम्पूज्य, हस्ताभ्यां वह्निपात्रमादाय, आत्माभिमुखम् अग्निं स्थापयेत् । 'ॐ ह्लीं श्रीं' मूलेन काष्ठादिकं सम्प्रोक्ष्य, अग्नौ निक्षिप्य, ज्वालां कृत्वा ध्यायेत् ।

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥

पुष्पाञ्जलिं गृहीत्वा, 'ॐ ह्लीं श्रीं' मूलेन अग्नौ देवीचैतन्यमावाह्य, गन्धपुष्पैः सम्पूज्य, मूलेन पञ्चविंशत्याहुतीः दत्त्वा, देवीं गन्धपुष्पैः सम्पूज्य, स्वस्थानगतां विभाव्य, पुनः अग्निं सम्पूज्य, भस्म गृहीत्वा, ललाटादिस्थानेषु धारयित्वा—

गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ।
यत्र ब्रह्मादयो देवाः तत्र गच्छ हुताशन ॥
गच्छ त्वं भगवन्नग्ने स्वस्थानं कुण्डमध्यतः ।
हव्यमादाय, देवेभ्यः शीघ्रं देहि, प्रसीद मे ॥

इत्यग्निं विसृज्य, होमं देव्यै अर्पयेत् । अनेन पूजाङ्गहोमाख्यकर्मणा श्रीबगलामुखी प्रीयताम् ।

### ततो बलिदानम्—

ईशान–वायु–नैऋत्याऽग्निकोणेषु क्रमेण बटुक–योगिनी–क्षेत्रपाल–गणपतिभ्यो बलिं दद्यात्—

ईशाने—

एहि एहि देवीपुत्र बटुकनाथ कपिल जटाभारभासुर त्रिनेत्र ज्वालामुख सर्वविघ्नान् नाशय नाशय सर्वोपचारसहितं बलिं गृह्ण गृह्ण स्वाहा, बटुकाय एष बलिर्न मम ।

वायव्ये—

'यां योगिनीभ्यो नमः' इति योगिनीः पूजयित्वा सामान्यार्घ्योदकं गृहीत्वा—

'ॐऊर्ध्वं ब्रह्माण्डतो वा, दिवि गगनतले भूतले निष्कले वा,
पाताले वा, तले वा, सलिलपवनयोर्यत्र कुत्र स्थिता वा ।।
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ।।'

"सर्वयोगिनीभ्यो हुं फट् स्वाहा, योगिनीभ्यः एष बलिर्न मम ।" इति जलं दत्त्वा प्रणमेत् ।

नैर्ऋत्ये—

'क्षं क्षेत्रपालाय नमः, क्षेत्रपालबलिमण्डलाय नमः, क्षेत्रपालबलिद्रव्याय नमः ।' इति गन्धपुष्पैः सम्पूज्य, सामान्यार्घ्योदकं गृहीत्वा, "ॐ क्षां क्षीं क्षूं क्षैं क्षौं क्षः क्षेत्रपाल इमं बलिं गृह्ण गृह्ण स्वाहा; क्षेत्रपालाय एष बलिर्न मम ।"

आग्नेये—

'गं गणपतये नमः, गणपतिबलिमण्डलाय नमः', इति गन्धपुष्पैः सम्पूज्य, सामान्यार्घ्योदकमादाय, 'ॐ गां गीं गूं गैं गौं गः, गणपतये वरवरद सर्वजनं मे वशमानय इमं बलिं गृह्ण गृह्ण स्वाहा, गणपतये एष बलिर्न मम' इति जलं दत्त्वा प्रणमेत् ।

उत्तरे—

पूर्ववत् मण्डलं विधाय, सम्पूज्य, साधारं बलिं निधाय, तत्र सर्वदेवताः सम्पूज्य, 'ह्लीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा' इति मन्त्रेण सर्वभूतेभ्यो बलिं दद्यात् ।

इति बलिदानम् ।

हस्तौ पादौ प्रक्षाल्य, योन्या प्रणम्य, महानीराजनं कुर्यात् । तदन्ते देव्यै मन्त्रपुष्पाञ्जलिं दत्त्वा, प्रदक्षिणीकृत्य, स्तुवीत—

समस्तमुनि—यक्ष—किंपुरुष—सिद्ध—विद्याधर—
महासुर—सुराप्सरोगणमुखैः गणैः सेविते ।

निवृत्ततिलकाम्बर-प्रकृति-शान्ति--विद्या--कला—
कलापमधुराकृते कलित एष पुष्पाञ्जलिः ।

तरङ्गयति सम्पदं तदनु संहरत्यापदम् ………।

ततः सुवासिनीं बटुकं कुमारिकां च यथाविधि सम्पूज्य, सन्तोष्य, विसृज्य, अष्टोत्तरशतं मूलमन्त्रं जपेत् ।

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान् महेश्वरि ॥

इति निवेदयेत् ।

ततः उद्वासनं कुर्यात् । सामान्यार्घ्यपात्रमुद्धृत्य देव्युपरि त्रिवारं भ्रामयित्वा—

"साधु वाऽसाधु वा कर्म यद् यदाचरितं मया ।
तत् सर्वं भगवत्यम्ब गृहाणाराधनं परम् ॥

इति पठित्वा, 'इतः पूर्वं मां मदीयञ्च श्रीबगलामुखीदेवतायै समर्पयामि नमः ।' ततः अवशिष्टसामानार्घ्यजलेन स्वशिरसि सम्मार्ज्य, सामयिकान् संप्रोक्ष्य, देव्युपरितनं पुष्पं संहारमुद्रया गृहीत्वा, स्वयमाघ्राय, देवीचैतन्यं स्वहृदि स्थापयित्वा, मानसैः सम्पूज्य, हस्ताभ्यामर्घ्यपात्रमादाय शिरसि धृत्वा—

देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक ।
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु ॥

इति सम्प्रार्थ्य, तद् द्रव्यं पात्रान्तरे गृहीत्वा, विशेषार्घ्यपात्रं प्रक्षाल्य, पुष्पाक्षतान् निक्षिप्य, देवताग्रे स्थापयित्वा उच्छिष्टबलिं दद्यात् । यथा—

गदात्रिशूलडमरुपाशहस्तं त्रिलोचनम् ।
कृष्णाभं भैरवं देवं ध्यायेदुच्छिष्टभैरवम् ॥

इति ध्यात्वा—'ॐ उच्छिष्टभैरव एहि एहि बलिं गृह्ण गृह्ण हुं फट् स्वाहा ।' इति दत्त्वा तद्बलिम् उत्थाप्य पूजागृहबहिर्भूमौ चतुरस्रमण्डलं

कृत्वा, कृष्णसारमेयं समाहूय, बलिं दद्यात् । 'बटुकवाहन इमां पूजां बलिं च गृह्ण गृह्ण स्वाहा ।' इति जलमुत्सृज्य, हस्तौ पादौ च प्रक्षाल्य, गृहान्तः प्रविश्य, आसनमुपविश्य, आचम्य, शान्तिस्तवं पठेत् ।

पुनः उच्छिष्टचाण्डालिनीं ध्यात्वा, 'ऐं नमः उच्छिष्टचाण्डालिनि मातङ्गि सर्वजनवशङ्करि इमां पूजां बलिं च गृह्ण गृह्ण स्वाहा ।' इति निर्माल्यसहितं नैवेद्योच्छिष्टबलिं दद्यात् ।

हस्तौ प्रक्षाल्य, ततः पात्रामृतं मूलेन स्वयं गृहीत्वा, अन्यान् सामयिकानपि दद्यात् । प्रार्थयेत्—

'न गुरोरधिकं न गुरोरधिकम् । शिवशासनतः । शिवशासनतः ।'

ततो देव्यै पूजां वर्द्धनीजलेन अर्पयेत् ।

'अनेन यथाज्ञानेन यथासम्भावितोपचारद्रव्यैः श्रीबगलामुखीसपर्याख्येन कर्मणा भगवती श्रीपीताम्बरा प्रीयताम् । ॐ तत् सत् ।'

ततः प्रसादं चरणोदकं च गृहीत्वा, शिष्टैः सह भुञ्जीत । यथासुखं विहरेत् ।

इति श्रीसर्वतन्त्रस्वतन्त्रैः निगमागमतन्त्रपारीणैः
परमहंसपरिव्राजकाचार्यैः श्रीपीताम्बरापीठाधीश्वरैः
श्री १०८ श्री स्वामिभिः
विरचिता
श्रीपीताम्बरार्चन—पद्धतिः पूर्णतां गता ।

# शुद्ध बगला गुरुक्रम:

१—श्री उन्मन्यानन्दनाथ,
उन्मन्यम्बा श्री

२—श्री उन्मन्याकाशानन्द,

३—श्री परमानन्दनाथ

४—श्री सहजानन्दनाथ

५—श्री परमानन्दनाथ

६—श्री उन्मान्याकाशानन्दनाथ

इति दिव्यौघा:

१—श्री महेशानन्दनाथ

२—श्री परेशानन्दनाथ

३—श्री सच्चिदानन्दनाथ

४—श्री चिदानन्दनाथ,

इति सिद्धौघा:

१—श्री ईश्वरानन्दनाथ,

२—श्री रुद्रानन्दनाथ,

३—श्री विश्वानन्दनाथ,

४—श्री ब्रह्मानन्दनाथ,

५—श्री नारदानन्दनाथ,

इति मानवौघा:

# बगला प्रत्यंगिरा कवचम्

श्री शिव उवाच

अधुनाहं प्रवक्ष्यामि बगलायाः सुदुलर्भम् ।
यस्य पठन मात्रेण पवनोपि स्थिरायते ।।
प्रत्यंगिरां तां देवेशि शृणुस्व कमलानने ।
यस्यस्मरण मात्रैण शत्रवो विलयं गताः ।।

श्री देव्युवाच

स्नेहोऽस्ति यदि मे नाथ संसारार्णव तारक ।
तथा कथय मां शम्भो बगला प्रत्यगिरांमम ।।

श्री भैरव उवाच

यं यं प्रार्थयते मन्त्री हठात्तंतमवाप्नुयात् ।
विद्वेषणाकर्षणे च स्तम्भनं बैरिणांविभो ।।
उच्चाटनं मारणं च येन कर्तुं क्षमो भवेत् ।
तत्सर्वं ब्रूहि मे देव यदि मां दयसे हर ।।

श्री सदाशिव उवाच

अधुना हि महादेवि परानिष्ठा मतिर्भवेत् ।
अतएव महेशानि किंचिन्नवक्तुमर्हसि ।।

श्री पार्वत्युवाच

जिघान्सन्तं जिघान्सीयान्न तेन ब्रह्महा भवेत् ।
श्रृति रेषाहिगिरिश कथं मांत्वं निनिंदसि ।।

श्री शिव उवाच

साधु साधु प्रवक्ष्यामि शृणुष्वाबहितानघे ।
प्रत्यगिरां बगलायाः सर्वशत्रुनिवारिणीम् ।।
नाशिनीं सर्व दुष्टानां सर्व पापौघ हारिणीम् ।
सर्व प्राणिहितां देवीं सर्व दुःख विनाशिनीम् ।।

भोगदां मोक्षदां चैव राज्य सौभाग्य दायिनीम् ।
मन्त्र दोष प्रमोचनीं ग्रहदोष निवारिणीम् ॥

अस्य श्री बगला प्रत्यंगिरा मन्त्रस्य नारद ऋषि स्त्रिष्टुप् छन्दः प्रत्यंगिरा देवता ह्री बीजं हूं शक्तिः ह्री कीलकं ह्लीं ह्लीं ह्लीं ह्लीं प्रत्यंगिरा मम शत्रु विनाशे विनियोगः ।

ॐ प्रत्यंगिरायै नमः प्रत्यंगिरे सकल कामान् साधय मम रक्षां कुरुकुरु सर्वान् शत्रून् खादय खादय मारय मारय घातय घातय ॐ ह्रीं फट् स्वाहा ।

ॐ भ्रामरी स्तम्भिनीदेवी क्षोभिणीमोहिनी तथा ।
सहारिणी द्राविणी च जृम्भिणी रौद्ररूपिणी ॥
इत्यष्टौ शक्तयो देवि शत्रु पक्षे नियोजिताः ।
धारयेत् कण्ठदेशे च सर्व शत्रु विनाशिनी ॥

ॐ ह्लीं भ्रामरि सर्व शत्रून् भ्रामय भ्रामय ॐ ह्रीं स्वाहा ।
ॐ ह्लीं स्तम्भिनि मम शत्रून स्तम्भय स्तम्भय ॐ ह्लीं स्वाहा ।
ॐ ह्लीं क्षोभिणि मम शत्रून क्षोभय क्षोभय ॐ ह्लीं स्वाहा ।
ॐ ह्लीं मोहिनि मम शत्रून्मोहय मोहय ॐ ह्लीं स्वाहा ।
ॐ ह्लीं संहारिणि मम शत्रून् संहारय संहारय ॐ ह्लीं स्वाहा ।
ॐ ह्लीं द्राविणि मम शत्रून् द्रावय द्रावय ॐ ह्लीं स्वाहा ।
ॐ ह्लीं जृम्भिणि मम शत्रून् जृम्भय जृम्भय ॐ ह्लीं स्वाहा ।
ॐ ह्लीं रौद्रि मम शत्रुन् सन्तापय सन्तापय ॐ ह्लीं स्वाहा ।

इयं विद्या महाविद्या सर्व शत्रु निवारिणी ।
धारिता साधकेन्द्रेण सर्वान् दुष्टान् विनाशयेत् ॥
त्रिसन्ध्यमेक सन्ध्यं वायः पठेत्स्थिर मानसः ।
नतस्यदुर्लभं लोके कल्पवृक्ष इव स्थितः ॥
यं यं स्पृशति हस्तेन यं यं पश्यति चक्षुषा ।
स एव दासतां याति सारात्साराममिं भनुन् ॥

इति श्री रुद्रयामले शिवपार्बति सम्वादे बगला प्रत्यंगिरा कवचम् ।

